तानि विद्यमानोपलम्भनानि, तद्भावस्तत्त्वम् तस्मात्। एतदुक्तं भवति—उपलम्भकानि हि चक्षुरादीनि पशूनां स्वर्गयानस्य च विद्यन्ते। नच तदुभयमपि अनन्तरं दृश्यते। तस्मादुक्तविसंवादादप्रमाणं चित्रादिचोदनेति। एवं ऐहिकफलकर्मचोदनाव्यभिचारेणान्यासामपि परलोकफलानां तत्सामान्यादाक्षेपः क्रियते। एते च सङ्ग्रहश्लोकाः—

एवं षण्णां प्रमाणानां यथास्वं लक्षणैः कृते।
अपरीक्ष्यत्वकथनात् स्वतः प्रामाण्यनिर्णये॥

चित्रावाक्ये तथा यज्ञायुधिवाक्येऽपि च क्वचित्।
वेदैकदेशे वेदार्थव्यभिचारस्य दर्शनात्॥

अनिमित्तं विद्यमानेत्यादिसूत्रेण सम्प्रति।
आक्षिप्यते स्थितं वेदप्रामाण्यं पूर्वपक्षिणा॥

अनिमित्तं चोदना स्याद्धर्मे चित्रादिकर्मणाम्।
फलस्य विद्यमानोपलम्भनत्वेऽप्यदर्शनात्॥

उपलम्भनशब्दोऽयमुपलम्भकवाचकः।
विद्यते ह्यत्र पश्वादेश्चक्षुराद्युपलम्भकम्॥

यज्ञायुधिशरीरस्वर्यानस्याप्यस्ति चेदिदम्।
नचापि कृतचित्रस्य चितपात्रस्य चोभयम्॥

दृश्यतेऽनन्तरं तेन तदप्रामाण्यनिश्चयात्।
अन्यत्रापि तथात्वानुमानं केन निवार्यते॥

इत्यैहिकफलाक्षेपद्वाराक्षेपोऽखिलाश्रयः।
दाहो यथैवैकदेशद्वारा जातुषवेश्मनः॥

अथ पञ्चदशं सम्बन्धाक्षेपाधिकरणम्—

तत्र तावदुपेक्ष्यैव चित्राक्षेपनिराक्रियाम्।
आक्षिप्यते तु सम्बन्धस्तदर्थं च ततः पुरा॥

वेदप्रामाण्यमात्रस्य स्वपक्षस्य प्रसाधनम् ।
सम्बन्धौत्पत्तिकत्वोक्त्या सूत्रेण क्रियतेऽमुना ॥

औत्पत्तिकस्त्वित्यारभ्य ज्ञानमन्तेन तत्र च ।
व्यावर्त्यते तुशब्देनानिमित्तत्वं तदत्र तु ॥

उपदेशपदाभावाज्ज्ञानेन तदनन्वयात् ।
उपदेशप्रमाणत्वपेक्षो नास्ति तथा सति ॥

सम्बन्धज्ञानमित्येव सम्भवेद् योजनाथवा ।
उपदेशपदस्यात्राप्यपकर्षप्रकल्पनात् ॥

अधिकारेण सामर्थ्यादध्याहारेण चान्वयात् ।
उपदेशप्रमाणत्वपक्षोऽत्रापि च सम्भवी ॥

एवं सम्बन्धनित्यत्वात् प्रामाण्ये सूत्रवर्णिते ।
आक्षेप्ताक्षिपति त्वेनं सम्बन्धमपि सम्प्रति ॥

स्यादेतद्, नैव सम्बन्धः शब्दस्यार्थेन विद्यते ।
द्विप्रकारे च सम्बन्धे कः सम्बन्धोऽत्र कल्पितः ॥

संयोगाद्यात्मकः किंस्वित् किं वा स्वस्वामितादिकः ।
आद्ये ह्याद्यो मूर्तयोः स्यान्नच शब्दस्य मूर्तता ॥

समवायोऽपि गगनगुणद्रव्यत्वपक्षयोः ।
उभयोरपि शब्दस्य नार्थेन सह युज्यते ॥

संयुक्तसमवायादिः तद्द्वयाभावतो न च ।
स्वस्वामिभावश्चोत्पाद्योत्पादकत्वात्मकस्तथा ॥

आश्रयाश्रयिभावश्च कार्यकारणतात्मकः ।
निमित्तनैमित्तिकत्वमिति ये लोकसम्मताः ॥

---

१. 'रूपस्य' ख.

सम्बन्धासोऽपि किं कस्येत्यज्ञानान्न स्युरत्र हि ।
स्यातां तादात्म्यसम्बन्धे संश्लेषापरनामके ॥

क्षुरमोदकशब्दोक्तौ मुखपाटनपूरणे ।
संज्ञासंज्ञित्वपर्यायो वाच्यवाचकतात्मकः ॥

यो गम्यगमकत्वाख्यः सम्बन्धः स हि कृत्रिमः ।
तथा डित्थडपित्थादिशब्दार्थेष्ववधारणात् ॥

तस्मान्न कश्चित् सम्बन्धो युज्यतेऽत्रार्थशब्दयोः ।
सम्बन्धस्यैव चाभावे दूरे तन्नित्यताकथा ॥

इत्येवमाक्षेपमात्राददोऽधिकरणद्वयम् ।
अन्तरेण समाधानमपर्यवसितं स्थितम् ॥

अथ षोडशं स्फोटवादाधिकरणम् —

तत्राक्षेपद्वयस्याप्यर्थपरिहारात् पुरैव तु ।
वेदप्रामाण्यासिद्ध्यर्थं सम्बन्धाधारभूतयोः ॥

शब्दार्थयोर्नित्यतोक्तिद्वारा तन्नित्यतोक्तये ।
अन्तरागर्भिणी चिन्ता कृताधिकरणद्वये ॥

तत्राद्ये स्फोटवादाधिकरणे चिन्त्यते त्विदम् ।
किंस्विद्वर्णात्मकः शब्दः किं वा स्फोटात्मकस्त्विति ॥

तत्र ये वर्णसंस्कारपदवाक्यत्रिपर्ययात् ।
वर्णस्फोटपदस्फोटवाक्यस्फोटात्मना त्रिधा ॥

वाक्तत्वक्लृप्तिमिच्छन्ति ते स्मृताः पूर्वपक्षिणः ।
अतस्तेषां निरासेन वक्तुं वर्णेषु शब्दताम् ॥

---

१. 'स्य' क. ख.

सिद्धान्तिना निराकार्याः सप्तैते स्युः प्रयत्नतः ।
वर्णावयवसद्भावग(त्वा ? त्वौ)त्वसमुदायकाः ॥

गोशब्दत्वावयविनौ स्फोटात्मा चेति सप्त ते ।
तन्निरासप्रकारस्य दिङ्मात्रमिदमुच्यते ॥

वर्णा हि विभवोऽमूर्तास्तेषामवयवाः कुतः ।
गका(रा ? रौ)कारयोरेकव्यक्तित्वात् तत्समाश्रया ॥

सामान्यकल्पना न स्याद् व्यक्तिभेदनिबन्धना ।
वर्णेभ्यो व्यतिरेकेण समुदायो न चेष्यते ॥

प्रत्येकवर्णारब्धश्च न गोशब्दावयव्यपि ।
समुदायावयविनोरभावात् कुत्र वर्तताम् ॥

गोशब्दत्वं न वर्णेषु शब्दत्वं जातिरेषु न ।
निर्भागस्फोटशब्दे तु प्रमाणं नास्ति किञ्चन ॥

वर्णा एव हि गृह्यन्ते प्रत्यक्षेणेह नापरः ।
अनुमानं च तद्व्याप्तलिङ्गाभावादसङ्गतम् ॥

न श्रूयते श्रुतिश्चात्र तत्सद्भावात्रबोधिनी ।
अवस्तुनोऽस्योपमानमसादृश्यान्न केनचित् ॥

यदि केनचिदिष्येत शशशृङ्गेण तद्भवेत् ।
नार्थवित्त्युपपत्त्यर्थमर्थापत्त्या तदाश्रयः ॥

तस्याः संस्कारयुक्तेभ्यो वर्णेभ्यश्चोपपत्तितः ।
तस्मादभाव एवास्य प्रमाणं परिशिष्यते ॥

नन्वर्थबोधो वर्णेभ्यो विनश्यद्भ्यः कथं भवेत् ।
संस्कारोऽपि स्मृतेरेव हेतुर्दृष्टो न संविदः ॥

तेनार्थधीः स्वसिद्ध्यर्थं शब्दमन्यं प्रकल्पयेत् ।
नैतदेवं विनश्यत्त्वं वर्णानां नाभ्युपेयते ॥

नित्यत्ववैभवे तेषां वक्ष्येते उत्तरत्र हि ।
अतः क्रमेण व्यक्तास्ते ध्वनिभिः क्रमवर्तिभिः ॥

पूर्वे वर्णाः क्रमेणैव संस्कारं दध्युरन्तिमे ।
तदुपेतः स वर्णोऽन्त्यो वाचकोऽर्थस्य नो मतः ॥

संस्कारश्चान्य एवासौ स्मृतिहेतोरथापि वा ।
तस्यैवार्थावबोधेऽपि शक्तिक्लृप्तेर्द्विशक्तिता ॥

तस्माद् द्विधापि तद्युक्तवर्णवाचकतास्थितेः ।
न तदुत्तीर्णनिर्भागवाक्तत्वमुपपत्तिमत् ॥

अनन्तरं सप्तदशं परिच्छेदत्रयान्वितम् ।

आकृतिग्रन्थनामाधिकरणं तत्र चादिमे ।
परिच्छेदे वाच्याचिन्ताद्वारा सद्भाव आकृतेः ॥

उक्तः, सारूप्यसामान्यकल्पना च निराकृता ।
शब्दस्यार्थेन सम्बन्धानित्यत्वस्य प्रसिद्धये ॥

नहि[2] सत्यामाकृतौ स्यादनित्यव्यक्तिभिः सह ।
शब्दस्य नित्यः सम्बन्धो विना नित्योपलक्षणा[3]त् ॥

तत्र स्वलक्षणस्यैव पारमार्थ्याभिमानतः ।
सौगता नानुमन्यन्ते तद्गताकृतिसम्भवम् ॥

तथाहि व्यक्तितो जातेर्भेदे दृश्येत भेदतः ।
अभेदे व्यक्तितो नान्यद् भेदाभेदो विरोधवान् ॥

---

१. 'नामभ्यु' ग. २. 'ह्य' क, ख. ३. 'कः' क.

भेदे चायं विकल्पः स्याद् व्यक्तिगा वाथ सर्वगा ।
व्यक्तिस्था चेद् व्यक्तिनाशे नाशो जन्म तदुद्भवे ॥

तथा सर्वगतत्वे स्यादन्तरालोपलम्भनम् ।
व्यक्त्युत्पत्तिर्यत्र देशे तत्र प्रागसती कथम् ॥

व्यक्तौ तत्रोपलभ्येत यद्युत्पत्तिस्तया सह ।
नित्यत्वहानिर्नापि स्यादागतिर्व्यक्तितोऽन्यतः ॥

अमूर्तत्वात्तथा तत्र न स्यात् सात्रागता यतः ।
निरंशत्वादंशतश्च गतिस्थित्योरसम्भवः ॥

नित्यत्वाद् व्यक्तिनाशेऽपि ह्युपलभ्येत तत्र सा ।
व्यक्त्यन्तरप्रवेशोऽस्या नामूर्तायाश्च युज्यते ॥

तत्कल्पने च या पूर्वं तत्र व्यक्ताववस्थिता ।
या चाधुना प्रविष्टेति भवेत्तत्राकृतिद्वयम् ॥

व्यक्तौ च वृत्तिरस्याः किं कार्त्स्न्येनावयवेन वा ।
यदि कार्त्स्न्येन नान्यत्र व्यक्तौ वर्तेत सा तथा ॥

न ह्येका सत्यनेकत्र शक्ता कार्त्स्न्येन वर्तितुम् ।
न चावयवशो वृत्तिर्युक्तास्यास्तदभावतः ॥

व्यक्तौ च वर्तमानेह प्रत्ययालम्बनं भवेत् ।
किं च नाकृतिसद्भावे प्रमाणं किञ्चिदस्ति ते ॥

तस्मादलीकमात्रं वा विकल्पाकार एव वा ।
आकृतिर्न तु सत्यास्तीत्येवं पक्षे व्यवस्थिते ॥

सामान्यं व्यक्तिसारूप्यं कल्पितं विन्ध्यवासिना ।
खण्डां दृष्ट्वा दृष्टवतो मुण्डां या सदृशत्वधीः ॥

सामान्यविषया सेति तस्य पक्षः प्रकीर्तितः ।
पक्षद्वयमिदं चात्र परिच्छेदे निरस्यते ॥

पूर्वपक्षतया प्राप्तं तद्दिङ्मात्रेण वर्ण्यते ।
तत्र नास्त्याकृतिरिति यदुक्तं तन्न युज्यते ॥

अयमश्वोऽयमप्यश्वो गौरयं गौरयं त्विति ।
नायं गौरश्व एवायं नाश्वोऽयं गौरयं त्विति ॥

प्रत्यक्षमनुवृत्त्या च व्यावृत्त्या च समन्वितम् ।
देशकालनरावस्थाभेदेष्वप्यनपोदितम् ॥

सामान्यज्ञानमुत्पन्नं तत्तद्व्यक्तिषु पश्यताम् ।
यः कुतर्केण बाधेत बाधेताद्रिं तलेन सः ॥

अतः प्रत्यक्षमेवात्र प्रमाणं जातिसम्भवे ।
अनुमानादि चाकृत्या विना नैवोद्भवन्ति हि ॥

इति तत् साधकं तस्याः कथं बाधकतां व्रजेत् ।
न हि यद् यदपेक्षं स्याद्भवेत् तत् तस्य बाधकम् ॥

तस्मात् प्रमाणसद्भावात् सामान्ये नास्ति संशयः ।
यद्विकल्पत्रयं चोक्तं भेदाभेदोभयात्मना ॥

तत्रानेकान्तवादो नः सिद्धान्तो जातिभेदयोः ।
विरोधात् कथमेकत्र भेदाभेदौ सहेति चेत् ॥

विरोधः खलु सर्वत्र सहासम्भवलक्षणः ।
यथेदं रजतं नेदं रजतं त्विति संविदोः ॥

परस्परोपमर्दाद्धि तयोरुत्पत्तिरिष्यते ।
अत्र त्वयं गौरित्यादिसामानाधिकरण्यतः ॥

युगपद्धीद्वयं जातं द्व्यात्मकं वस्तु साधयेत् ।
नित्यानित्यविरोधोऽपि नाभेदे जातितद्वतोः ॥

---

१. 'वेदिह० २. ख०

एकमेव हि तद्वस्तु द्व्याकारं बिभ्रदत्र हि ।
नित्यं जात्यात्मनानित्यं तथा व्यक्त्यात्मनोच्यते ॥

एवमेव व्यक्तिगतत्व सर्वगत्वविकल्पयोः ।
भेदाभेदादेव चास्मात् परिहारो भविष्यति ॥

व्यक्तिष्वेव हि तादात्म्याद् व्याप्यस्याव्रत्तिरिष्यते ।
न त्वात्माकाशवत् तस्या विभुत्वमुपगम्यते ॥

कार्त्स्न्यावयववृत्त्योस्तु विकल्पो यः कृतोऽत्र च ।
वर्तते व्यक्तिषु सदा जातिरित्येव शक्यते ॥

व्याहर्तुं तत्प्रकारस्तु न कार्त्स्न्यान्नापि चांशतः ।
भेदापेक्षं हि कार्त्स्न्यं स्यान्न च जातेर्भिदेष्यते ॥

स्मृतिपादान्त्यसिद्धत्वादेकानवयवत्वयोः ।
इह धीवेद्यता चात्र भेदाभेदादनाश्रया ॥

यद्यदुर्घटमत्र स्याज्जातिव्यक्तिव्यवस्थितौ ।
सर्वं तदमुतो भेदाभेदात् परिजिहीर्षितम् ॥

तथा सारूप्यसामान्यपक्षो यः पुनराश्रितः ।
सोऽप्ययुक्तो नावयवसामान्यात् तत्पृथग्यतः ॥

तदभ्युपगतावन्यैः सामान्यैः किमपह्नुतैः ।
स एवायमिति त्वत्र प्रतीतिः स इवेति न ॥

सादृश्ये हि तथा धीः स्यात् तस्माद् यत्किञ्चिदेव तत् ।
इत्याकृतेरभावस्य सारूप्यस्य च निह्नवे ॥

कृत आद्ये परिच्छेदे द्वितीयेऽपोहनिह्नवः ।
क्रियते तद्यथा बाह्यैरन्यापोहात्मिकाकृतिः ॥

---

१. 'जिहीर्षतः' क.

कल्पिता[1], वस्तु सर्वं हि तैर्व्यावृत्तात्मकं श्रितम् ।
अनश्वादिर्गवार्थः स्यादश्वार्थस्त्वगवादिकः ॥

इति तस्य निरासोऽत्र दिङ्मात्रेणाभिधीयते ।
अगोनिवृत्तिज्ञानं न विना गोज्ञानतो भवेत् ॥

नह्यृते गोग्रहात् सिध्येद् विधिरूपादगोग्रहः ।
गव्यज्ञाते तन्निवृत्तिरूपो गौर्गृह्यते कथम् ॥

तेन गां प्रथमं ज्ञात्वा ज्ञेयो गौस्तन्निवृत्तितः ।
ज्ञातश्चेद्गौरगोपोहात् पूर्वं तत्कल्पना वृथा ॥

विधिरूपेण च ज्ञानं मतं[2] गौर्गौरितीदृशम् ।
कथं निवृत्तिरूपं स्याच्छिद्यतां तदियं कथा ॥

इति द्वितीयेऽन्यापोहे परिच्छेदे निराकृते ।
तृतीये वनतुल्यत्वसंस्थानात्मत्वनिह्नवः ॥

व्यक्त्यात्मनोऽवयविनोऽवयवेभ्योऽतिरिक्तता ।
व्यक्तिजात्योरवयवव्यक्तिवृत्तिश्च कथ्यते ॥

तत्र यद्वनतुल्यत्वमाकृतेः कैश्चिदाश्रितम् ।
तदयुक्तं, वनाकृत्योर्विशेषोऽस्ति महान् यतः ॥

वृक्षेभ्यो व्यतिरेकेण वनं नाम न किञ्चन ।
दूरत्वदोषाद् वृक्षेषु वनमित्येकधीर्भ्रमः ॥

बाधात् समीपे जातेस्तु न बाधोऽन्तिकदूरयोः ।
संस्थानरूपता वास्या[3] न युक्ता व्यभिचारतः ॥

यतोऽस्ति संस्थानसाम्यं गवाश्वमाहिषेष्वपि ।
तथासति च ते सर्वे भवेयुस्तुल्यजातयः ॥

---

१. 'तं' ग. २. 'ज्ञातं' क. ३. 'या स्याम्न यु' ग.

तस्माद्वस्त्वेव सामान्यं तच्च गोत्वादि नापरम् ।
तदाश्रयश्चावयवी सः स्यात्त्ववयवाश्रयः

भिन्नश्चावयवेभ्योऽस्ति तद्वत्त्र्येवयवी यतः ।
न चावयविजात्योर्यावयवव्यक्तिवर्तिता ॥

सैकरूपतया ज्ञेया व्यासज्यैकैकभेदतः ।
व्यासज्यावयवी जातिः प्रत्येकं खलु वर्तते ॥

व्यक्त्यन्तरानपेक्षं हि जातिर्व्यक्तिषु वर्तते ।
तत् प्रत्येकं वृत्तिरस्या मतावयविनः पुनः ॥

व्यासज्यावयवेष्विष्टापेक्ष्य चावयवान्तरम् ।
न ह्येकस्यां यथा व्यक्तौ गोबुद्धिरुपजायते ॥

पटबुद्धिस्तथा तन्तावेकस्मिंस्तेन भिद्यते ।
वृत्तिर्द्वयोर्द्वयोश्चापि दृष्टत्वादुपपन्नता ॥

तेनावयव्याश्रयास्ति भिन्ना भिन्नाकृतिस्ततः ।
सैव चार्थो गवाश्वादिशब्दानामित्यवस्थितम् ॥

सम्बन्धपरिहाराख्यमथाधिकरणं स्मृतम् ।
अष्टादशं, समाप्तेऽत्र सम्बन्धाधारभूतयोः ॥

शब्दार्थयोः स्वरूपस्य नित्यत्वस्य च निर्णये ।
सम्बन्धस्य प्रस्तुतस्य कथ्येते रूपनित्यते ॥

तत्र यत् कथितं पूर्वं प्रथमश्रवणे सति ।
प्रत्याययति यस्मान्न शब्दोऽर्थं सहसात्मनः ॥

अस्य शब्दस्यायमर्थ इत्येवं कथिते सति ।
प्रत्याययति यस्माच्च तेनायं केनचित् कृतः ॥

सम्बन्धः पुरुषेणेति, तस्येदं सूत्रमुत्तरम् ।
'उपदेश' इति त्वेकपदं, तस्यार्थ उच्यते ॥

नास्यायमर्थ इत्येतत् सम्बन्धकरणं मतम् ।
किं तूपदेशः सिद्धस्य सम्बन्धस्य स्वभावतः ॥

सम्बन्धकथने तस्मात् सम्बन्धकरणभ्रमः ।
उपदेष्टार एवातः सम्बन्धस्य सदा नराः ॥

अधवत् कल्पनीयाः स्युर्न कर्तारः कदाचन ।
यद्येवमुच्यते सर्वजगदादौ महेश्वरः ॥

सम्बन्धव्यवहाराय कृत्वा शब्दार्थगोचरम् ।
शब्दैश्च कृतसम्बन्धैर्धर्माधर्मोपदेशकान् ॥

वेदांश्च कृत्वा पुत्रेभ्यो मरीच्यादिभ्य आदरात् ।
उपादिदेश तेऽन्येभ्यस्तेऽन्येभ्यश्चेति तच्च न ॥

न हि प्रमाणमस्त्येवं क्लृप्तौ, स्मर्येत चास्ति चेत् ।
कर्ता प्रयोजनाभावादस्मृतिश्चेन्न चापि तत् ॥

प्रयोजनस्य सद्भावाद् व्यवहारोदयात्मनः ।
न ह्यतोऽभ्यधिकं लोके वेदे चास्ति प्रयोजनम् ॥

यत् सर्वव्यवहाराणामनुच्छेदेन वर्तनम् ।
अतो यद्यस्ति सम्बन्धः स्मर्येतावश्यमेव सः ॥

यद्यपि स्याद् विस्मरणं न तथाप्यप्रमाणकम् ।
प्रतिपद्येमहि वयं सम्बन्धारं कथञ्चन ॥

न च प्रमाणमस्त्यर्थप्रत्ययानुपपत्तिजम् ।
सम्बन्धरि नृणामर्थापत्तिर्न ह्युपपद्यते ॥

---

१. 'तिः स हु' क. ख.

प्रत्ययोऽर्थस्यान्यथैव वृद्धानामुपदेशतः ।
इदं चान्यतिरेकश्चेत्येतत् सूत्रेण सूत्रितम् ॥

व्यतिरेकोऽत्र विरहो न कालस्यास्ति कस्यचित् ।
सम्बन्धविरहस्तस्मान्नित्यः स इति योजना ॥

अनर्थकमशक्यं च सम्बन्धकरणं क्वचित् ।
अलौकिकेन्द्रवरुणाद्यर्थशब्देषु केनचित् ॥

इत्येतदुक्तमत्रार्थेऽनुपलब्ध इति त्वतः ।
तस्यायमर्थसम्बन्धोऽनुपलब्धार्थगोचरः ॥

अशक्यकरणोऽसिद्धेः कृतश्चाप्यप्रयोजनः ।
उद्दिश्यार्थं हि सम्बन्धः सम्बन्धा क्रियते पदे ॥

असिद्धस्य च नोद्देशः कर्तुं शक्येत केनचित् ।
अतीन्द्रियार्थविषयोऽनर्थकश्च कृतोऽपि सन् ॥

इत्युपस्कृत्य सूत्रस्य द्विपदस्यास्य योजना ।
आक्षेपोक्तश्च यः सर्वसम्बन्धानामसम्भवः ॥

तत्रानङ्गीकार एवान्यसम्बन्धोत्तरं मतम् ।
संज्ञासंज्ञित्वरूपस्तु सम्बन्धोऽभ्युपगम्यते ॥

तस्यैव च प्रमाणत्वं ज्ञानमन्तेन कीर्तितम् ।
नित्यत्वं साधितं यच्च तच्च तस्यैव साधितम् ॥

इत्येवं साधितस्यार्थस्योपसंहारकं परम् ।
चतुर्थं सूत्रमुद्दिष्टं तदित्यादिचतुष्पदम् ॥

तस्यार्थोऽत्रापि तच्छब्दसम्बन्धः पूर्ववत् स्मृतः ।
तस्मात् सूत्रत्रयकृतात् सम्बन्धाक्षेपदूषणात् ॥

सिद्धादन्यानपेक्षत्वात् प्रमाणं चोदना भवेत् ।
एवमेतच्चतुःसूत्रीसिद्धा सम्बन्धनित्यता ॥

न शक्या बाधितुं कैश्चिद् युक्त्याभासैरिति स्थितम् ।
स्वतोऽर्थगमकत्वे यः प्रश्नः शब्दस्य वर्णितः ॥

किं न प्रत्याययत्यर्थं प्रथमश्रवणे त्विति ।
सोऽयुक्तो नोपयुज्येत सत्तयार्थमितिं प्रति ॥

प्रत्यायकत्वं ज्ञातं तु तस्मात् सर्वं समञ्जसम् ।
अथाधिकरणं चित्रापरिहाराभिधायकम् ॥

एकोनविंशं तत्रोक्ते सम्बन्धे सप्रकारके ।
अनन्तरादर्शनतश्चित्रादीनां फलस्य यत् ॥

वेदप्रामाण्यमाक्षिप्तं तत् समाधीयते स्फुटम् ।
न ह्यानन्तर्यवक्तात्र वाक्ये शब्दोऽस्ति कश्चन ॥

वाचकाभावतस्तस्मात् तदचोदितमिष्यते ।
पञ्चैव स्युः प्रमाणानि न शब्द इति चेत् स्थितिः ।

तददर्शनतस्तैः स्यात् फलाभावप्रकल्पना ।
तत्तु नैवं प्रमाणत्वं शब्दस्यापीह विद्यते ॥

प्रमितेर्जनकत्वेन प्रत्यक्षादिवदेव हि ।
तेन चोक्तं फलं चित्राकर्मणः पशवस्त्विति ॥

तच्च कालान्तरेऽपूर्वद्वारत्वेऽप्युपपद्यते ।
लोकेऽपि तैलपानादेः फलस्यैवंविधत्वतः ॥

अपूर्वसत्तापूर्वाधिकरणे साधयिष्यते
सूक्ष्मावस्था तत्फलस्य कर्मणो वेति च स्थितिः ॥

---

१. 'न' क., ख.

ननु सूत्रकृतस्याक्षेपस्यासूत्रः परिहारः कथं सङ्गच्छते? उत्सूत्रस्य पूर्वपक्षस्य ससूत्रसिद्धान्तत्वादिति ब्रूमः। तस्य सर्वत्र शास्त्रे दृष्टत्वान्नानुपपत्तिरिति चेत्—तर्ह्यसावप्यत्रैकत्र दृष्टत्वादुपपन्न एवेष्यताम्। न ह्येकत्रानेकत्र च दृष्टयोर्दृष्टत्वे कश्चिद्विशेषः। न च पूर्वपक्षेणैवोत्सूत्रेण भवितव्यं न सिद्धान्तेनेति वेदाज्ञा राजाज्ञा वास्ति। अतोऽत्र न कश्चिद्दोषः अथवा अस्त्येव 'तत्प्रमाणं बादरायणस्यानपेक्षत्वा'दिति। सूत्रखण्डस्यात्राप्यर्थावृत्तस्य योज्यमानत्वान्नोत्सूत्रसिद्धान्तत्वोपालम्भः। अयमेव च पक्षो न्यायनिर्णयकारस्याभिमतः। एवं हि स आह—'तत्र तावन्न साधकप्रमाणाभावश्चित्रादीनां पश्वादिहेतुत्वे, शब्दस्यापि प्रत्यक्षवत् स्वतः प्रामाण्यादित्याह 'तत्प्रमाणं बादरायणस्यानपेक्षत्वा'दिति। कथं तर्हि भाष्यकारोऽत्रापीदं सूत्रं नोदाजहार? उदाहरदेवार्थादिति ब्रूमः। एवं ह्यत्र भाष्यं 'न स्यात् प्रमाणं यदि पञ्चैव प्रमाणान्यभविष्यन्। येन प्रमीयते तत् प्रमाणम्। शब्देनापि प्रमीयते तेन शब्दोऽपि प्रमाणम् यथैव प्रत्यक्षम्' इत्यादि। अनेन च 'तत्प्रमाण'मिति सौत्रं पदद्वयं सोपस्कारं व्याख्यातमिति द्रष्टव्यम्। कण्ठोक्त्यभावात्तु सूत्रस्योत्सूत्रत्वभ्रमः। एवमेवोत्तराधिकरणेऽप्युत्सूत्रपरिहारत्वमावृत्तसूत्रपरिहारत्वं वोत्प्रेक्षितव्यम्। अस्मिंश्च पक्षे 'ऽनपेक्षत्वा'दिति सूत्रपदं प्रमाणानां प्रामाण्ये संवादानपेक्षत्वात् प्रत्यक्षादिषु तददर्शनादिति व्याख्येयमिति ॥

आत्मवादाधिकरणमथ विंशमुदाहृतम्।

आक्षेपयोर्द्वयोस्तत्र चित्रायज्ञायुधिस्थयोः ॥

आद्ये प्रत्यक्षसंवादाभावाक्षेपे समाहिते।
द्वितीयस्तद्विसंवादकृताक्षेपो निरस्यते ॥

---

१. 'प्र' ग.

तत्र यत्तावदुक्तं प्राक् प्रत्यक्षेण विरुध्यते ।
शरीरस्वर्गयानोक्तिरिति तत्राभिधीयते ॥

वाक्यस्यास्यार्थवादत्वाद् विध्यन्तरपरत्वतः ।
न स्वार्थबाधो दोषाय न च बाधोऽत्र विद्यते ॥

न ह्यनेन शरीरस्य स्वर्गयानमिहोच्यते ।
अपि तर्ह्यात्मनः सोऽपि ह्युपचारेण शक्यते ॥

एष इत्यपरोक्षेण वक्तुं यज्ञायुधीति च ।
यद्वात्मनः स्वर्गयानं शरीर उपचर्यते ॥

आत्मैव यागकर्तृत्वाद्यजमानश्च कथ्यते ।
न वयं स्पन्दमेवैकं क्रियामाचक्ष्महेऽपि तु ॥

सङ्कल्पं च प्रयत्नं च, स्यातां तावात्मनो विभोः ।
भवेद्वा स्पन्दकर्तृत्वं शरीरस्पन्दहेतुतः ॥
शरीरव्यतिरिक्तात्मसद्भावश्च प्रपञ्चितः ।
तेषां कर्तृत्वभोक्तृत्वनानात्वस्थायितादि च ॥
भाष्यवार्तिकयोः शास्त्रदीपिकाकाशिकादिषु ।
तस्माद्वाक्यद्वयाक्षेपात् सर्वाक्षेपोऽत्र यः कृतः ॥
स सम्यगुद्धृतस्तेन प्रमाणं चोदना स्वतः ।

नन्विदं वृत्तिकारकृतमन्यथा सूत्रत्रयव्याख्यानं भाष्यकारस्याभिमतमनभिमतं वेति वक्तव्यम् । एकदेशिनस्तावदनभिमतमेवेति वर्णयामासुः। सयूथ्येष्वपि न्यायनिर्णयकारस्तथाचष्ट । एष हि तेषामुपन्यासः—
'नन्वध्याहारस्ततस्ततोऽर्थव्यत्ययकल्पिरनिमित्तमिति अस्य प्रस्तुतप्रत्यक्षविषयत्वपरित्यागेनाध्याहृतशब्दविषयत्वमुत्तरसूत्रपञ्चके चाध्याहारप्रपञ्चकल्पना वृत्तिकारमतस्यायुक्ततां द्योतयति । तस्माद्वृत्तिकारकृता सूत्रव्याख्या न युक्तेति वक्तुं वृत्तिकारकीर्तनम् ' इति । अन्येषां त्वाचार्याणामभिमतमेवेति

पक्षः। तथा च तत्रभवन्तः षड्दर्शनीपारदृश्वत्वे सत्यपि विशेषतः कौमारिलतन्त्रस्वातन्त्र्यवत्तया विवृततत्त्वाविर्भाव – तत्त्वबिन्दु – स्फोटसिद्ध्योऽस्मत्पितामहपादा विभ्रमविवेकव्याख्यायाम्

'प्रमाणत्वाप्रमाणत्वे व्यतिरेकविपर्ययौ।
अनङ्गमिति मोघैव तयोरत्र विचारणा॥'

इति श्लोकव्याख्यानावसरे तन्मतोद्धारप्रकारमेवमाहुः—'यच्चोक्तम्—वृत्तिकारकृता सूत्रव्याख्या न युक्तेति; तदयुक्तम्। तथा सति वृत्तिकारग्रन्थाद्यात्मवादावसानस्य ग्रन्थस्यायुक्तत्वप्रसङ्गात्। वैपरीत्यं वा किं न स्यात् महाभाष्यकारवर्णितत्वात्। यथा 'गकारौकारविसर्जनीया इति भगवानुपवर्षः' इति, 'अत एवोक्तं वृत्तिकारेणे'ति, 'अत्र भगवान् वृत्तिकारः परिनिश्चिकाय' इत्यादौ भाष्यकारेण स्वयमुच्यमानस्यार्थस्य युक्ततरत्वद्योतनाय वृत्तिकाराङ्गीकृतत्वमुच्यते तथात्रापि व्याख्यानान्तरस्य युक्तत्वद्योतनाय वृत्तिकारग्रहणम्। व्यवहितान्वयाध्याहारादियुक्तापि व्याख्यान्या क्रियते, वृत्तिकारप्रामाण्यात्। किं पुनरेतादृश्येव व्याख्या वृत्तिकारेणाश्रीयते? अर्थबाहुल्यप्रदर्शनार्थमित्याहुः। यथोक्तम्—

'एतत्सूत्रत्रयं पूर्वव्याख्यानात् पुनरन्यथा।
इदानीमष्टधा कृत्वा बह्वर्थत्वाय वर्ण्यते॥

अल्पेनाल्पेन यत्नेन महतो महतो नराः।
अर्थौघान् साधयन्तीह सूत्रकारा विशेषतः॥'

इति। यच्च तैरुक्तं–नञध्याहारो हि स्मृतिविरोधादयुक्त इति। तस्यापि वार्तिके परिहार उक्तः।

या परीष्टिर्निमित्तानां कर्तव्येति निरूपिता ।
सा महाभाष्यकारेण न कर्तव्येति वर्णिता ॥

वाक्यस्यापरिपूर्णस्य द्वेधाध्याहारकल्पना ।
योग्यत्वाद् विधिना क्वाचित् प्रतिषेधेन वा क्वचित् ॥
विध्यध्याहारतस्तावन्मुख्या व्याख्या प्रदर्शिता ।
प्रतिषेधप्रकारोऽपि शक्यत्वात् किं न दृश्यते ॥
अप्राप्ते हि विधिर्युक्तः प्राप्ते तु प्रतिषेधनम् ।
तन्निमित्तपरीष्टिश्च प्राप्तत्वात् प्रतिषेधभाक् ॥

प्राप्तिश्च परीक्षणीयस्य धर्मनिमित्तस्य प्रसिद्धत्वम्—निर्णीतत्वमिति यावदित्यादि। एवं व्याख्याद्वयसाधुत्वमभिधायान्त उपसंहृतम्—'अतः शब्दाञ्जस्यलिप्सूनां पूर्वं व्याख्यानम्, अर्थबाहुल्यलिप्सूनामपरं व्याख्यानम्' इति। तस्माद्व्याख्याद्वयमप्यभिमतमेव भाष्यकारस्येति ॥

अथैकविंशं शब्दाधिकरणम्। तच्च शब्दानित्यताप्रतिपादनार्थम्, तत्प्रतिपादनं च सूत्रोक्तसम्बन्धौत्पत्तिकत्वसमर्थनार्थम्। तत्समर्थनं च प्रतिज्ञातवेदप्रामाण्यनिर्वाहाय।

तत्र चात्राधिकरणे पूर्वपक्षसूत्राणि तत्परिहारसूत्राणि सिद्धान्त सूत्राणि च षट्षट्सङ्ख्याकानि निर्दिष्टानि। तेषां च येषां व्याख्यानं काशिकादौ विद्यते तेषां तदेव केवलं लिख्यते। येषां तु न विद्यते, तेषां तदभिप्रेतोऽर्थो वर्ण्यते।

तत्र प्रथमं पूर्वपक्षसूत्रम्—

**कर्मैके तत्र दर्शनात् (१-१-६)**

इति।

चतुष्पदम्। तस्यार्थः—अत्र विशेष्यानिर्देशादौत्पत्तिकसूत्रगतः षष्ठ्यन्तः शब्दशब्दः प्रथमान्ततया विपरिणतो विशेष्यतया सम्बध्यते।

१. 'अर्थाञ्जस्यलि' ग.

इतिशब्दश्चाध्याह्रियते। शब्दः कर्मेत्येके, आहुरिति शेषः। कर्मण्यौणादिको मनिन् प्रत्ययः। क्रियानिर्वर्त्यः, कृतक इति यावत्। अनित्य इत्युक्तं भवति। कारणमाह—तत्र दर्शनादिति। तच्छब्दः कर्मपदप्रकृत्युपात्त-क्रियापरामर्शकः। सा च प्रयत्नात्मिकाभिमता। तस्यां सत्यां दर्शनात्, प्रयत्नानन्तरीयकत्वादित्यर्थः॥

अथ द्वितीयं सूत्रम्—

## अस्थानात् (१—१—७)

इति।

एकपदम्। अत्रापि सैव प्रतिज्ञा। तत्र हेतुः—अस्थानादिति। चशब्दोऽत्र द्रष्टव्यः अस्थानाच्चेति। शब्द उच्चरिते विद्युदादाविव प्रत्ययानवस्थानाच्चानित्यः शब्द इत्युक्तं भवति॥

अथ तृतीयं सूत्रम्—

## करोतिशब्दात् (१—१—८)

इति।

एकपदम्। शब्दगोचरात्, प्रयुज्यमानादिति शेषः। शब्दं कुरु, शब्दं मा कार्षीः, शब्दकार्ययं माणवक इति हि शब्दे करोतिशब्दः प्रयुज्यते लौकिकैः। अतश्चानित्यः शब्द इति। अत्रापि चशब्दो द्रष्टव्यः॥

अथ चतुर्थं सूत्रम्—

## सत्त्वान्तरे च यौगपद्यात् (१—१—९)

इति।

त्रिपदम्। तस्यार्थः—एकस्मादुच्चारयितृसत्त्वात् सत्त्वान्तरे च यौगपद्यं दृश्यते। नानावक्तृषु युगपद्दृश्यते च शब्द इति यावत्। यदि नित्य

एक एव गकारादिः शब्दः ततोऽस्य देशान्तरे युगपद्दर्शनं नोपपद्येत। तस्मादप्यनित्यः शब्द इति ॥

अथ पञ्चमं सूत्रम्—

## प्रकृतिविकृत्योश्च (१-१-१०)

इति।

द्विपदम्। तस्यार्थः—तत्र प्रकृतिविकृत्योरिति निमित्तसप्तमी। भावप्रधानश्च निर्देशः। स्मृतिसादृश्यासिद्धाभ्यां प्रकृतिविकृतित्वाभ्यां शब्दगोचराभ्यां निमित्ताभ्यां चानित्यः शब्द इत्यर्थः। प्रकृतिविकृतिभावश्च भाष्य एवं दर्शितः—'दध्यत्रेत्यत्रेकारः प्रकृतिः, यकारो विकृतिरिति उपदिशन्ति। इकारसादृश्यं च यकारे लक्ष्यते' इति ॥

अथ षष्ठं सूत्रम्—

## वृद्धिश्च कर्तृभूम्नास्य (१-१-११)

इति।

चतुष्पदम्। तस्यार्थः—यतोऽस्य शब्दस्य कर्तृभूम्ना कर्तृबहुत्वेन वृद्धिर्महत्त्वं दृश्यते। तद्धि ध्वनिभिः क्रियमाणत्व एवोपपद्यते न व्यज्यमानत्वे। न हि व्यञ्जकेषु बहुषु दीपेषु घटो वृद्धो दृश्यते। दृश्यते च मृदादिकारणवृद्धौ घटादिकार्यवृद्धिः। तस्मादपि च कार्यः शब्द इति।

अथ सप्तममाद्यपूर्वपक्षसूत्रपरिहारसूत्रम्—

## समं तु तत्र दर्शनम् (१-१-१२)

इति।

चतुष्पदम्। तुशब्दः कृतकत्वं व्यावर्तयति। व्यावर्तिते च कृतकत्वे शब्दानुक्तमप्यर्थसिद्धं नित्यत्वं हेतुवचनस्यानाश्रयत्वपरिहारार्थं प्रतिज्ञार्थत्वेन सम्बध्यते। तस्मिंश्च प्रतिज्ञार्थे समं तत्र दर्शनमिति हेतुरुपपद्यते।

---

१. 'यते' ग. २. पदम्। तत्र' क, ख.

तस्य चायमर्थः—यत उक्तार्थं तत्र दर्शनमुभयोरपि नित्यानित्यत्वपक्षयोः समानम्। नित्यस्यापि ह्यभिव्यज्यमानस्य प्रयत्नानन्तरदृष्टिर्न विरुध्यते। अतः प्रयत्नानन्तरदर्शनस्यानैकान्तिकत्वमिति ॥

अथाष्टमं द्वितीयपूर्वपक्षपरिहारसूत्रम्—

## सतः परमदर्शनं विषयानागमात् (१-१-१३)

इति।

चतुष्पदम्। तस्यार्थः—यत् परं कारणमुक्तं प्रत्ययानवस्थानात्मकं तत् सत एव पूर्वोत्तरकालयोः शब्दस्य नानुपपन्नमिति नानित्यतां साधयितुमलम्। तद्धि कूपाकाशस्यापि मृदादिना पूर्यमाणस्यास्त्येव। न च तदनित्यम्। अतोऽनैकान्तिकत्वमिति। यदि पूर्वमप्यस्ति शब्दः किं नोपलभ्यते, अत आह—विषयानागमादिति। असत्युच्चारयितरि कौष्ठ्यवायुना स्तिमितवाय्वपनयनाभावादिन्द्रियविषये शब्दस्यागमनाभावादित्यर्थः। अथवा भावप्रधानो निर्देशः—विषयत्वानागमादिति। तत एव च हेतोरिन्द्रियविषयत्वाप्राप्तेरित्यर्थः ॥

अथ नवमं तृतीयपूर्वपक्षसूत्रपरिहारसूत्रम्—

## प्रयोगस्य परम् (१-१-१४)

इति।

द्विपदम्। तस्यार्थः—यत् परं कारणमुक्तं करोतिकर्मत्वात्मकं तत् प्रयोगस्यैव, न शब्दस्य, तत्राभूतप्रादुर्भावनात्मकस्य करोत्यर्थस्यासमवायात्। अतः शब्दप्रयोगं कुर्वित्यर्थो भविष्यति, यथा—गोमयानि कुर्विति, समाहारं कुर्विति। अतोऽसिद्धोऽयं हेतुः। आकाशं कुर्विति च

अथ दशमं चतुर्थपूर्वपक्षसूत्रपरिहारसूत्रम् —

## आदित्यवद् यौगपद्यम् (१–१–१५)

इति ।

द्विपदम् । तस्यार्थः–यदुक्तमनेकत्र यौगपद्योपलम्भादनित्यत्वमिति, तदयुक्तम् । आदित्यवद् यौगपद्यं भविष्यति । स हि बहुभिरुदयसमये स्वस्वपुरस्तादेवावगम्यमानो भिन्नतया लक्ष्यते, न च भिन्नः, अतोऽनैकान्तिको नानात्वे देशभेदोपलम्भ इति ॥

अथैकादशं पञ्चमपूर्वपक्षसूत्रपरिहारसूत्रम् —

## शब्दान्तरं विकारः[1] (१–१–१६)

इति ।

द्विपदम् । तस्यार्थः–शब्दान्तरं प्रकृतित्वेनाभिमतादिकाराद् विकृतित्वेनाभिमतो यकारः, न त्विकार एव यकारात्मना परिणतः । तयोः कार्यकारणभावाभावात् । न हि घटचिकीर्षायां मृदमिव यकारोच्चिचारयिषायामिकारमुपाददाना दृश्यन्ते इति सूत्रानुक्तोऽपि हेतुरुन्नेयः । यत्तु स्मृतिसादृश्ययोः प्रकृतिविकारभावसाधकत्वमिति । तत्र स्मृतेः 'इको यणचि' इत्यस्या इकारविकारो यकार इत्यर्थस्य पाणिनेरनभिमतत्वेनासिद्धत्वात् । सादृश्यस्य च दधिकुन्दपिटकयोरपि दृष्टत्वेनानैकान्तिकत्वादसाधकत्वमिति ॥

अथ द्वादशं षष्ठपूर्वपक्षसूत्रपरिहारसूत्रम् —

## नादवृद्धिः[2] परा (१–१–१७)

इति ।

द्विपदम् । तस्यार्थः—या अत्र 'वृद्धिश्च कर्तृभूम्नास्ये'ति परा

---

१. 'वर्णान्तरं अविकारः', 'शब्दान्तरभविकारः'—इति मुद्रित भाष्यादिसम्मतः पाठः । २. 'नादवृद्धिपरा' इत्येकपदं सूत्रं दृश्यते भाष्यादिषु बृहत्यां तु द्विपदमेव ।

वृद्धिरनित्यत्वकारणत्वेनोक्ता सा नादानां ध्वनीनामेव वृद्धिः, न शब्द-वृद्धिः। अवयवोपचयो हि वृद्धिः, सा कथमनवयवस्य भविष्यतीति ॥

अथ त्रयोदशं सिद्धान्तसूत्रम् —

## नित्यस्तु स्याद् दर्शनस्य परार्थत्वात् (१-१-१८)

इति।

पञ्चपदम्। तुशब्दोऽनित्यत्वं व्यावर्तयति। 'समं तु तत्र दर्शन'मित्य-त्रत्येनैव वा तस्य कृतत्वान्नित्यत्वमवधारयति नित्य एव स्यादिति। शब्द इति शेषः। हेतुमाह —'दर्शनस्य परार्थत्वा'दिति। दर्शनमुच्चारणम्। दृश्यते हि तेन शब्द इति तत् परार्थं परेषामर्थप्रत्यायनार्थम्। अतोऽस्माद् दर्शनपारार्थ्यात् शब्दो नित्य इति। अथवा परशब्दोऽर्थप्रत्ययपरः। शब्दो-च्चारणात्मकं हीदं दर्शनं न स्वार्थम्, किन्तु परस्यार्थप्रत्ययस्य शेषभूतमेव। फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गभूतत्वाच्छब्दप्रयोगस्येत्यर्थः। अनित्यत्वे च तन्नावकल्पते। तदा हि क्षणिकत्वाच्छब्दस्य न सम्बन्धोऽनुभवितुं शक्यः। न चादृष्टार्थसम्बन्धो वाचक इत्यर्थप्रत्ययानुपपत्तिरिति ॥

अथ चतुर्दशं सिद्धान्ताभ्युच्चयसूत्रम् —

## सर्वत्र यौगपद्यात् (१-१-१९)

इति।

द्विपदम्। तस्यार्थः—यस्माद् गोशब्द उच्चारिते सर्वगवीषु प्रत्यययौग-पद्यमवगम्यते, तस्मादाकृतिवचनः शब्दः। तद्वचनत्वान्नित्यः सम्बन्धः, तन्नित्यत्वाच्छब्दोऽपि नित्यः। न ह्यनित्ये प्रतियोगिनि नित्ययाकृत्या नित्यः सम्बन्धोऽवकल्पते इति ॥

अथ पञ्चदशमपि सिद्धान्ताभ्युच्चयसूत्रम् —

## सङ्ख्याभावात् (१-१-२०)

इति।

एकपदम्। अत्रोत्तरत्र च सूत्रे तद्द्योतनार्थमध्याहृतस्तदुत्तरसूत्राद्वा अपकृष्टश्चशब्दो द्रष्टव्यः। तथासतीतश्च नित्यः स्याच्छब्द इति। प्रतिज्ञाहेतुसम्बन्धो भवति। पुनः पुनरुच्चारयत्सु गोशब्दं पुरुषेषु पृथक्त्वानिवेशित्वात् सङ्ख्यायाः शब्दभेदे सत्यष्टौ गोशब्दा उच्चारिता इति लोके प्रयोगो दृश्येत नाष्टकृत्व इति। दृश्यते चाष्टकृत्व इति क्रियाभ्यावृत्तिगणनार्थस्य कृत्वसुचः प्रयोगः। अत एवं शब्दे स्वरूपतः सङ्ख्याया अभावावगमादेकः शब्द इति निश्चीयते, एकत्वाच्च नित्यत्वसिद्धिरिति ॥

अथ षोडशमपि सिद्धान्ताभ्युच्चयसूत्रम्—

## अनपेक्षत्वात् (१--१--२१)

इति।

एकपदम्। अत्रापि सैव प्रतिज्ञाहेतुयोजना। अनपेक्षत्वात् कारणापेक्षाभावाच्च नित्यः शब्द इति। न हि शब्दस्य काचित् कारणापेक्षा विद्यते, पटादीनामिव तन्त्वादिव्यतिषङ्गापेक्षा, येन तद्विनाशाद् विनङ्क्ष्यतीत्यवगम्यत इति ॥

अथ सप्तदशं पदोत्तरं सूत्रम्—

## प्रख्याभावाच्च योगस्य (१--१--२२)

इति।

त्रिपदम्। इमानि च तानि पदानि—ननु शब्दोऽपि घटवदवयवव्यतिषङ्गजनित एव। वायुकारणको ह्ययं वायुसंयोगविभागात्मकत्वाच्छब्दस्य। यथाहुः शीक्षाकाराः—'वायुरापद्यते शब्दताम्' इति। अतोऽयमप्यवयवविश्लेषाद् विनङ्क्ष्यतीति सम्भाव्यत इति। अत उत्तरं सूत्रं। योगः विभागमप्युपलक्षयति। वाय्वाश्रययोः संयोगविभागयोः शब्दे मृदाश्रययोरिव घटे प्रख्याभावात्। नात्र वायोरवयवाः प्रख्यायन्ते। स्पार्शनिका हि ते। न च वायवीयानवयवाञ्छब्दगतान् स्पृशामः। तस्मान्न वायुकारणकः। अतो नित्य इति ॥

अथाष्टादशमपि सिद्धान्ताभ्युच्चयसूत्रम् —

**लिङ्गदर्शनाच्च (१–१–२३)**

इति ।

द्विपदम् । तस्यार्थः—यस्माद् 'वाचा विरूपनित्यया' इत्यन्यपरमपि वचनं वाचो नित्यतामनुवदति, एवंविधाल्लिङ्गदर्शनादपि नित्यः शब्द इति ॥

अत्र शब्दाधिकरणेऽष्टादश सूत्राणि ।

अथ द्वाविंशं तद्भूताधिकरणम् ।

तच्च शब्दार्थसम्बन्धनित्यत्वे साधिते सति ।
वाक्यार्थमूलवत्ताया अभिधानार्थमिष्यते ॥

तत्रादिमेन सूत्रेण वाक्यार्थामूलवत्तया ।
आक्षिप्यते चोदनायाः प्रामाण्यं पूर्वपक्षिणा ॥

तदर्थं चेदं सूत्रम् —

**उत्पत्तौ चावचनाः[1] स्युरर्थस्यातन्निमित्तत्वात् (१–१–२४)**

इति ।

षट्पदम् ।

शब्दलक्षणयोत्पत्तिशब्दोऽत्रौत्पत्तिकं वदेत् ।
द्यावोरिति यथा द्यावापृथिव्योरिति लक्ष्यते ॥

तथावचनशब्दस्य विशेष्यत्वेन योजना ।
उत्तरोत्तरसूत्रस्थवेदशब्दस्य कल्प्यते ॥

तेनायमर्थः सूत्रस्य पूर्वाधिकरणेष्विह ।
औत्पत्तिकत्वे शब्दार्थसम्बन्धानां स्थितेऽपि च ॥

---

१. 'वा' इति भाष्यादिसम्मतः पाठः ।

स्युर्वाक्यार्थस्य धर्मस्य वेदा अवचनाः, कुतः ? ।
अर्थस्यातन्निमित्तत्वात् पदार्थोऽत्रार्थ इष्यते ॥

असम्बन्धात् पदार्थानां वाक्यार्थे ह्यनिमित्तता ।
न निमित्तान्तरं चास्ति तस्माद् वाक्यार्थधीर्भ्रमः ॥

इत्येवं पूर्वपक्षेऽत्र मूलाभावेन वर्णिते ।
द्वितीयमथ सिद्धान्तं वक्तुं सूत्रमतः परम् ॥

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् (१-१-२५)**

इति ।

पञ्चपदम् । तस्यार्थः—पदानां तावत् पदार्थैर्नित्य एव सम्बन्धः । तेष्वेव पदार्थेषु भूतानां वर्तमानानां क्रियार्थेन समाम्नाय उच्चारणम् । क्रियेति च भावनां ब्रूमः । सैव चानेकविशेषणविशिष्टा वाक्यार्थ इत्युच्यते । एतदुक्तं भवति । पदान्येव पदार्थप्रतिपत्तिद्वारेण वाक्यार्थप्रतिपत्तौ मूलमिति न निर्मूलता । नचानपेक्षितपदार्थान्येव पदानि पृथगेव पदार्थवद् वाक्यार्थं प्रतिपादयन्तीति युक्तं, प्रमाणाभावात् । न हि नः किञ्चित् प्रमाणमस्ति, येनानपेक्षितपदार्थ एव वाक्यान्त्यवर्णः पूर्ववर्णजनितसंस्कारसहितोऽर्थान्तरभूतमेव वाक्यार्थं प्रतिपादयतीत्यभ्युपगच्छामः । नन्वर्थापत्तिरेव प्रमाणं, वाक्यार्थेऽपि हि कार्यदर्शनानुसारेण पदार्थ इव वर्णानां शक्तिं कल्पयिष्यामः । न, अर्थस्य तन्निमित्तत्वात् । पदार्थानामेवाकाङ्क्षायोग्यतासन्निधिबलप्रतिलब्धेतरेतरव्यतिषङ्गाणां वाक्यार्थबुद्धौ निमित्तत्वात् क्षीणार्थापत्तिर्न वर्णगामिनीमपरां शक्तिमुत्पादयितुमलमिति ॥

---

१. 'त्र' ग. २. 'वर्ति' ग.

अथ तृतीयं पदोत्तरं सूत्रम् —

**लोके सन्नियमात् प्रयोगः सन्निकर्षः स्यात् (१-१-२६)**

इति । पञ्चपदम् —

पदानि तानि चैतानिवेदानां पौरुषेयता ।
पदसङ्घातरूपत्वात् तत्सङ्घाता हि कृत्रिमाः ॥

दृष्टा नीलोत्पलाद्यर्थविषया इत्यथोत्तरम् ।
लोके प्रयोगो युक्तः सन्नियमः सन्निबन्धनः ॥

चक्षुरादिभिरर्थस्य सन्निकर्षान्निमित्ततः ।
वेदे त्वतीन्द्रियार्थत्वान्नैवं भवितुमर्हति ॥

इत्थं सन्नियमात् सन्निकर्ष इत्यपि चैतयोः ।
व्याख्या विपरिणामेन पञ्चमीप्रथमान्तयोः ॥

कर्तव्या प्रथमापञ्चम्यन्तत्वेनेह शब्दयोः ।
इति सूत्रत्रयोपेतं वाक्याधिकरणं त्विदम् ॥

अथ त्रयोविंशं वेदाधिकरणम् ।

तत्र वाक्याश्रये तावदाक्षेपे सुसमाहिते ।
समाख्याद्वारतः प्राप्तमप्रामाण्यं निरस्यते ॥

तत्र प्रथमं पूर्वपक्षसूत्रम् —

**वेदांश्चैके सन्निकर्षं पुरुषाख्याः (१-१-२७)**

इति ।

पञ्चपदम् । तस्यार्थः—काव्यनाटकादिग्रन्थानिव वेदांश्चैके वादिनः संनिकर्षं मन्यन्ते । सन्निकर्षमिति क्रियाविशेषणम् । सम्यङ्निकर्षो न्यूनत्वं कालस्य यथा भवति तथा मन्यन्ते । सन्निकृष्टकालानिति यावत् । कुत

१ 'प्रयोगसन्निकर्षः' इति भाष्यादिग्रन्थपाठः । २. 'कर्ष' क.

इत्याह—पुरुषाख्या इति। पुरुषैराख्या येषां ते तथोक्ताः। पुरुषैर्हि वेदा आख्यायन्ते कठादिभिः—काठकं कालापकमिति विसर्जनीयान्तपाठे व्याख्या। व्याख्यान्तरे तु यस्मात्पुरुषैरेषामाख्येति व्याख्येयम् ॥

अथ द्वितीयं पूर्वपक्षाभ्युच्चयसूत्रम् —

## अनित्यदर्शनाच्च (१–१–२८)

इति।

द्विपदम्। इतश्च सन्निकृष्टकाला वेदा इति चशब्दार्थः। कुत इत्याह—अनित्यदर्शनादिति। 'बबरः प्रावाहणिरकामयते'त्येवमादिवाक्यानां जननमरणवदर्थाभिधानदर्शनादनित्या वेदा इति ॥

अथ तृतीयं सिद्धान्तसूत्रम् —

## उक्तं तु शब्दपूर्वत्वम् (१–१–२९)

इति।

त्रिपदम्। तुशब्दः पक्षं व्यावर्तयति। शब्दस्य वेदात्मनः कठादिभ्यः पूर्वत्वमनादित्वं प्रागेवौत्पत्तिकसूत्रादारभ्य वाक्याधिकरणान्तैर्ग्रन्थैरुक्तमेवेत्यर्थः। अथवा उक्तमकर्तृस्मरणादिभिः शब्दपूर्वत्वमध्येतॄणाम्। शब्दपूर्व एव हि सर्वदा तेषां वेदार्थः न पुरुषपूर्वः, अपौरुषेयत्वाद् वेदस्येत्यर्थः ॥

अथ समाख्यानिर्वाहं वक्तुं चतुर्थं सूत्रम् —

## आख्या प्रवचनात् (१–१–३०)

इति।

द्विपदम्। तस्यार्थः—नावश्यं समाख्या कठादिकर्तृत्वं समाख्येयानामापादयति। अन्यथा प्रवचनादिनोपपत्तेः तत्कृतवत् तत्प्रोक्तेऽपि

तत्स्मरणस्य पाणिनेर्विद्यमानत्वात्, तेनासाधारणप्रवचनात् सम्प्रदाय-प्रवर्तकत्वात्मकात् समाख्योपपद्यते इति शेषः ॥

अथ पञ्चममनित्यसंयोगपरिहारसूत्रम्—

**पर[1]ं श्रुतिसामान्यमात्रम् (१--१--३१)**

इति ।

द्विपदम् । तस्यार्थः—

यत् परं बबराद्युक्तमनित्यत्वस्य कारणम् ।
श्रुतेः शब्दस्य सामान्यमात्रं तत्रेति गम्यताम् ॥

बबरध्वानियुक्तस्य वायोः प्रवहणोक्तितः ।
तस्मान्नानित्यसंयोगः पुरुषोक्त्या भवेदिति ॥

अथ षष्ठं सूत्रम्—

**कृ[2]ते चाविनियोगः स्यात् कर्मणः स[3]मत्वात् (१-१-३२)**

इति ।

षट्पदम् ॥

तच्च शङ्कोत्तरं सूत्रं सा च शङ्कैवमिष्यते ।
ननु सर्पकृतं सत्रं वनस्पतिकृतं वदन् ॥

जरद्गवादिवाक्येन वेदः सदृशतां व्रजेत् ।
तत् केनचित् कृतो वेद इतिः तस्येदमुत्तरम् ॥

चशब्दोऽयं तुशब्दस्य स्थाने पक्षनिवारणः ।
अथवानुक्तसिद्धान्तहेत्वन्तरसमुच्चये ॥

हेत्वन्तरं च सर्वज्ञनिषेधे वार्तिकेरितम् ।
कृते चाविनियोगः स्याद् वेदे सत्रादिकर्मणः ॥

---

१. 'परन्तु' इति भाष्यादिग्रन्थपाठः २. 'कृते वा' इति भाष्यादिग्रन्थपाठः ।
३. 'सम्बन्धात्' इति भाष्यादि ग्रन्थपाठः ।

फलसाधनभावेन तदतीन्द्रियभावतः ।
श्रूयते विनियोगश्च सत्राणामप्यकर्मवत् ॥

वनस्पतिकृतत्वादिवचसोऽतोऽर्थवादता ।
अचेतनैरविद्वद्भिरपि यस्मादिदं कृतम् ॥

विद्वद्ब्राह्मणकार्यत्वे कः सन्देह इति स्तुतिः ।
तत्र हेतुरयं सौत्रः समत्वात् कर्मणस्त्विति ॥

तत्रापि कर्मण इति पदं सम्बध्यते यतः ।
एकाहाहीनसत्रादेः कर्मणोऽस्य समत्वतः ॥

अप्रामाण्यं कुतो हेतोः सत्रवाक्यस्य शङ्क्यते ।
तस्मादपौरुषेयत्वसिद्धेर्वेदस्य चोदना ॥

धर्मे प्रमाणमित्येतदुपपन्नं प्रतिश्रुतम् ।
इति षट्सूत्रसहितं वेदाधिकरणं स्थितम् ॥

इति श्रीमदृषिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे प्रथमस्याध्यायस्य
प्रथमः पादः ।

अथ प्रथमस्याध्यायस्य द्वितीये पादे

## प्रथममर्थवादाधिकरणम् ।

तत्राद्यपादे वेदस्य प्रामाण्ये प्रतिपादिते ।
तत्प्रकारविशेषोऽर्थवादादेरधुनोच्यते ॥

विध्युद्देशे यथा त्र्यंशभावनाप्रतिपादनात् ।
प्रामाण्यं दृश्यते तद्वदर्थवादेष्वदर्शनात् ॥

किमप्रमाणमेते स्युः प्रमाणं वेति संशये ।
पूर्वपक्षं पूर्वपक्षं वक्तुं सूत्रमिदं स्मृतम् ॥

### आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते (१-२-१)

इति ।

सप्तपदम् । तस्यार्थः—आम्नायस्य स्वाध्यायाध्ययनविधिविहितत्वेनाम्नायमानस्य वेदस्य 'तद्भूतानां क्रियार्थेन समाम्नायः' इति क्रियार्थत्वावधारणाद् अतदर्थानामक्रियार्थानामानर्थक्यं तत्पर्यायं प्रत्यप्रामाण्यं स्यात् । ततश्च तस्मादेव धर्मप्रामाण्याभावाद्धेतोरनित्यमुच्यते । किमित्यपेक्षायामतदर्थमर्थवादादीति सम्बध्यते । उदाहरणं चात्र–'सोऽरोदीद् यदरोदीत् तद् रुद्रस्य रुद्रत्वम्','स आत्मनो वपामुदक्खिदत्',' देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्', इत्यादि । नित्यकार्यस्य धर्मप्रमितिजननस्याकरणादनित्यवाचोयुक्तिरिति ॥

---

१. क्रियार्थत्वेन-क. २. 'का' ग.

अथ द्वितीयं पूर्वपक्षाभ्युच्चयसूत्रम् —

## शास्त्रदृष्टविरोधाच्च (१–२–२)

इति ।

द्विपदम् । इतश्चानर्थक्यमिति चशब्दार्थः । यतः शास्त्रविरोधो दृष्टविरोधः, शास्त्रदृष्टविरोधश्चार्थवादेषूपलभ्यते । तत्र शास्त्रविरोधः— 'स्तेयं मनः', 'अनृतवादिनी वाग्' इत्यत्र विधिकल्पनायाम् । शास्त्रप्रतिषिद्धं हि 'न परस्वमाददीत' 'नानृतं वदेदि'ति स्तेयानृतकर्म । तथा दृष्टविरोधः— 'धूम एवाग्नेर्दिवा ददृशे नार्चिः, अर्चिरेवाग्नेर्नक्तं ददृशे न धूमः', इत्यत्र । द्वयमपि हीदं दृष्टविरुद्धम् । रात्रिन्दिवं धूमार्चिषोरव्यवस्थाया दर्शनात् । तथा 'ब्राह्मणा वयमब्राह्मणा वा स्म'इत्यज्ञानवचनं ब्राह्मण्यस्य दृष्टविरुद्धम्, प्रत्यक्षाद्यवगतोत्पाद्योत्पादकसम्बन्धस्मरणानुगृहीतेनेन्द्रियेण प्रत्यक्षतोऽवगम्यमानत्वात् । तस्मात् तद्विरुद्धं ब्राह्मण्याज्ञानवचनमिति । तथा 'अमुष्मिन् लोकेऽस्ति वा न वा इति'। अत्रामुष्मिकफलस्य निश्चितवेदप्रामाण्यैः शास्त्रादेव ज्ञायमानत्वादनवक्लृप्तिवचनं शास्त्रजनितेनामुष्मिकफलदर्शनेन विरुद्धमिति ॥

इहैतत्क्रमसङ्ख्यत्वं विरोधानां विवक्षितम् ।
यस्मात् समाधानसूत्रेष्वेवं संख्याक्रमौ श्रितौ ॥

अथ तृतीयमपि तादृशं सूत्रम् —

## तथा फलाभावात् (१-२-३)

इति ।

एकपदम् । इदमादिचतुस्सूत्र्यां चशब्दोऽनुषञ्जनीयोऽभ्युच्चयद्योतनार्थम् । तदयमर्थः—'शोभतेऽस्य मुखं य एवं वेद', 'आस्य प्रजायां

---

१. अथा, ख. २. 'णा व' ग.

वाजी जायते' इत्येतयोर्गर्गत्रिरात्रब्राह्मणवेदानुमन्त्रणज्ञानार्थवादयोस्तथा फलाभावाच्चानर्थक्यम्। यथा भूतं वर्तमानापदेशादनन्तरभावित्वेन प्रतीयमानमुखशोभादिफलत्वेन कीर्त्यते अत्र तथाभूतस्य तस्य फलस्य तदानीमभावादिति ॥

अथ चतुर्थमपि तादृशं सूत्रम्—

अन्यानर्थक्यात् (१-२-४)

इति।

एकपदम्। तस्यार्थः—'पूर्णाहुत्या सर्वान् कामानवाप्नोति', 'पशुबन्धयाजी सर्वान् लोकानभिजयति', 'तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इत्यत्राग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गत्वात् पूर्णाहुतेरग्निहोत्रादिभ्यः प्राग्भावादग्नीषोमीयस्य च पशोरौपवसथ्येऽहनि विहितत्वेन सोमयागात् प्राग्भावादश्वमेधस्य चाज्ञातस्यानुष्ठातुमशक्यत्वात् तज्ज्ञानस्य ततः प्राग्भावादवश्यभाविपूर्वानुष्ठानैस्तैरेवोत्तरभाविकर्मसमानफलैरभिमतफलसिद्धेरन्यानर्थक्यप्रसङ्गाच्चार्थवादानामानर्थक्यमिति ॥

अथ पञ्चममपि तादृशं सूत्रम्—

अभागिप्रतिषेधाद् (१-२-५)

इति।

एकपदम्। तस्यार्थः—यस्मात् 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इत्यप्रतिषेधभागिनमर्थं प्रतिषेधति। वाक्यत्रयमिदमर्थवादैकदेशभूतम्। तस्मादप्यानर्थक्यमर्थवादानामिति। भागो भजनं यस्यास्ति स भागी,

---

१. 'मन्त्रज्ञा' ख.

स न भवतीत्यभागी, तमर्थमित्यर्थः। अन्तरिक्षद्युचयनयोरप्राप्तत्वेन प्रतिषेधायोग्यत्वादभागित्वम्। पृथिवीचयनस्य तु प्रतिषेधे निराधार-चयनासम्भवाद् 'इष्टकाभिरग्निं चिनुते' इत्यादिविधिबाधप्रसङ्गादभागित्व-मर्थादस्ति इति त्रयोऽप्येतेऽभागिप्रतिषेधा इति॥

अथ षष्ठमपि तादृशं सूत्रम्—

**अनित्यसंयोगात् (१–२–६)**

इति।

एकपदम्। तस्यार्थः—'बबरः प्रावाहणिरकामयत' इत्याद्यनित्य-संयोगाच्चानर्थक्यमतदर्थानामिति॥

अथ सप्तमं सिद्धान्तसूत्रम्—

**विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः (१–२–७)**

इति।

षट्पदम्। तुशब्द आनर्थक्यं व्यावर्तयति। बहुवचनान्तोत्तरविधि-शब्दो वैरूप्यार्थमेकवचनान्तः, आद्यो विधिशब्दो जातिपरो व्याख्येयः। शब्दधर्मत्वाच्चैकवाक्यत्वस्य द्वावप्येतौ विधिशब्दौ शब्दपरौ द्रष्टव्यौ। तदयमर्थः—यद्यप्यर्थवादा अर्थभावनाङ्गं न भवन्ति तथापि विधिशब्दै-रेकवाक्यत्वाद् विधिशब्दानामेव पुरुषं प्रवर्तयतामङ्गं स्युः इत्युपस्कृत्य योजना कार्या। कथमित्याह—स्तुत्यर्थेनेति। विधिभिरर्थ्यमानत्वात् स्तुतिरर्थः, तद्द्वारेण इति। अथवा आद्यो विधिशब्दः शब्दपरः, उत्तरोऽर्थ-पर एवास्तु। ततश्च विधिशब्दैरेकवाक्यत्वात् तदर्थानां प्रवर्तनापरनामधे-यानां शब्दभावनानामितिकर्तव्यताः स्युरिति व्याख्या भवतीति॥

अथाष्टमं सिद्धान्ताभ्युच्चयसूत्रम् —

## तुल्यं च साम्प्रदायिकम् (१-२-८)

इति ।

त्रिपदम् । तत्र साम्प्रदायिकतुल्यत्वस्य स्तुत्यर्थत्वहेतुत्वाभावाच्च-शब्दस्य तद्धेतुभूतविध्येकवाक्यत्वसमुच्चयार्थत्वायोगात् तदभिमेतस्य प्रमादपाठशङ्कानिराकरणार्थस्यार्थवत्त्वावगमलक्षणस्य हेत्वन्तरस्य समुच्चयार्थश्चशब्दो व्याख्येयः । न केवलमर्थवत्त्वावगमान्न प्रमादपाठः, किन्तु साम्प्रदायिकतुल्यत्वाच्चेत्यर्थः । 'उपाध्यायेन शिष्यस्य प्रत्यक्षीकरणाय पाठः सम्प्रदायः' इति स्मृत्यधिकरणस्थाजिताग्रन्थात् सम्प्रदीयतेऽनेन वेद-इति वा, सम्प्रददात्यसौ वेदमिति वा, सम्प्रदानमेतद् वेदस्येति वाध्यापनं सम्प्रदायः । न च तदध्ययनं विना सम्भवतीत्युभयमत्र सम्प्रदायशब्देन विवक्षितम्, तत् प्रयोजनं प्रधानं यस्याध्यायानध्यायता शिष्योपाध्यायादेर्धर्मजातस्य तत् साम्प्रदायिकं, तद् यतो विध्यर्थवादयोस्तुल्यं तस्माच्चेत्यर्थः । अथवा सम्प्रदायोऽयमुक्तरूपः प्रयोजनं यस्य वाक्यस्य तदध्ययनविधिवाक्यं साम्प्रदायिकमित्युच्यते । तस्य विध्यर्थवादयोस्तुल्यत्वादित्यर्थः । ततश्च शक्त्यनुसारेणार्थवादानां स्तुतिद्वारेण विध्यङ्गत्वसिद्धिरिति भावः ॥

अथ नवममुक्तानुपपत्तिसामान्यपरिहारसूत्रम् —

## अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत (१-२-९)

इति ।

---

१. 'यद् साध्वा' ग.　२. 'कमित्युच्यते तस्य विध्य' ख.

द्वादशपदम् । तत्राप्राप्तां चानुपपत्तिमित्यत्र मन्यामह इति शेषः । अप्राप्तं चानुपपत्तिमित्यत्राऽस्मच्छ्राख्यानमिति, अप्राप्ता चानुपपत्तिरित्यत्रा-स्मत्पक्षे विज्ञेयेत्युक्तत्वात् ।

सूत्रे वार्तिककारेण त्रिधा पाठः प्रदर्शितः ।
तत्रार्थवादा विध्यङ्गं स्युरित्येतन्न केवलम् ॥

किन्तु नानुपपत्तिश्चेत्यर्थ उक्तश्चशब्दतः ।
अर्थो विरोधशब्दोक्तोऽनुपपत्तिपदोदितः ॥

शास्त्रदृष्टविरोधानां चतुर्णां च तदर्थता ।
तदेषोऽर्थः शास्त्रदृष्टविरोधप्राप्तिरत्र न ॥

प्रयोगे रोदनादीनामनुष्ठाने हि चोदिते ।
विरोधः स्यादप्रयोगभूतः शब्दार्थ एषु नः ॥

अविवक्षित इत्यर्थस्तस्मात् स्तुत्यर्थलक्षणा ।
पूर्वसूत्रद्वयोक्तार्थवादानामुपपद्यते ॥

शङ्काभासनिवृत्त्यर्थस्तुशब्दः पूर्ववाक्यगः ।
नन्वर्थस्य श्रुतस्यास्य फलवत्त्वाय कल्प्यताम् ॥

प्रयोग एव विधिना कल्पितेनेति संस्मृतिः[1] ।
क्रियते चोत्तरैः सूत्रैरस्य सूत्रस्य विस्तरः ॥

अथ दशमं पूर्वसूत्रोक्तानुपपत्त्यप्राप्तिनिर्वाहसूत्रम् —

## गुणवादस्तु (१–१–१०)

इति ।

द्विपदम् । तुशब्दो निर्वाहाभावशङ्कां[2] व्यावर्तयति । बहु चात्र सूत्रे प्रति-पाद्यमस्ति । तत्र प्रथमं तावत् 'शब्दार्थस्त्वप्रयोगभूतः' इत्यनेन श्रौतार्था-

१. 'स स्मृतः' ख. ग. २. 'हभाव' ख.

विवक्षयार्थभावनानुपयोग उक्ते कथं नामोपयोग इत्युपयोगापेक्षायां गुणस्य[1] वाद इति षष्ठीसमासाश्रयणेन स्तुत्यर्थत्वं सिद्धान्तसूत्रोक्तं पूर्वसूत्रनैराकाङ्क्ष्यायानेन स्मारितम् । ततः स्वार्थासत्यत्वे कथं स्तुतिरित्यपेक्षायां गुणाद्वाद इति पञ्चमीसमासाश्रयणेन स्वार्थासत्यत्वानादरोऽप्यनेनैवाभिहितः । तथा भवतु स्तुत्यर्थत्वं तथापि कथं क्वचिद् विधेयस्तुतिपरत्वमविधेयगताया 'आपो वै शान्ताः' इत्यादिकायाः स्तुतेरित्यपेक्षायां गुणाद् गौण्या वृत्त्या वाद इत्यप्यनेनैव पञ्चमीसमासाश्रयणेन दर्शितम् । तत्र षष्ठीसमासे गुणशब्दः स्तुतिवचनः, पञ्चमीसमासे त्वौपचारिकप्रवृत्तिनिमित्तवचनः । तदिह 'सोऽरोदीद्' इत्यादिः 'तस्माद्बर्हिषि रजतं न देयम्' इति प्रतिषेधस्य शेषः । तत्र रजतदानाभावे रोदनाभावरूपो गुणो विवक्षित इति षष्ठीसमासः । रोदनकर्तरि च रुद्रशब्दव्युत्पत्तेरीश्वरे च तच्छब्ददर्शनादवयवव्युत्पत्त्यात्मकाद्गुणादरोदीदिति शब्दः, शुक्लत्वादिसादृश्याच्च रजतस्य गौणोऽश्रुप्रभवत्ववादः । तस्माद्रजतदानप्रतिषेधेन तन्निन्दाद्वारकमस्यैकवाक्यत्वम् । तथा 'स आत्मनो वपामुदक्खिददि'ति 'यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्यमजं तूपरमालभेते'त्यस्य विधेः शेषः । यस्मात्प्रजापतिः स्ववपामप्युदखिद्याग्नौ प्रहृत्य ततो जातं तूपरमात्मार्थमालभ्य प्रजाः पशून् लब्धवान् तस्मात्प्रजादिसम्पादकोऽयं तूपरयाग इत्येवंरूपस्य गुणस्य वादोऽत्र विवक्षितः । 'देवा वै देवयजनमध्यवसाय दिशो न प्राजान'न्निति 'आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीय' इत्यस्य विधेश्शेषः । यदा हीयमदितिर्देवानां दिङ्मोहमप्यपनीतवती तदा सोमयागविषयं भ्रममपनयतीति किमु[2] वक्तव्यमित्येवमदितिदेवतागतस्य गुणस्य वादोऽत्र विवक्षितः । अत उपपन्नमेषां स्तुत्यर्थत्वेन विध्यङ्गत्वमिति ॥

---

१ 'णवा' ग. २. 'क्कि' ग.

अथैकादशं 'स्तेयं मनोऽनृतवादिनी वागि'ति शास्त्रविरोधोदाहरणपरिहारसूत्रम् —

## रूपात्प्रायात् (१–२–११)

इति।

द्विपदम्। 'हिरण्यं हस्ते भवत्यथ गृह्णाती'ति विधेरेष शेषः। यथा लोके किमृषिणा देवदत्त एव पूजयितव्य इत्यत्र देवदत्तपूजां स्तोतुमेवौदासीन्यमृषेरुपन्यस्यते न तु पूज्यत्वमृषेर्वारयितुम्। एवमत्रापि हस्ते हिरण्यग्रहणं प्रशंसितुं मनसः स्तेयरूपत्वं वाचोऽनृतवादिनीत्वं चोपन्यस्यते। तत्र गुणवादेन शब्दार्थो योजनीयः—यथा स्तेनाः प्रच्छन्नरूपा एवं मनोऽपीति। प्रच्छन्नरूपत्वमत्र गुणः। प्रायेण वागनृतं वक्तीति प्रायिकत्वं तत्र गुणः। हिरण्यं तु नोभयविधम्। अतस्तद्धस्तधारणं प्रशस्तमिति स्तूयते॥

अथ द्वादशं 'धूम एवाग्नेर्दिवा ददृशे नार्चि'रित्यादिदृष्टविरोधोदाहरणपरिहारसूत्रम् —

## दूरभूयस्त्वात् (१–२–१२)

इति।

एकपदम्। तस्यार्थः—धूमस्य दूरभूयस्त्वादर्चिषो दर्शने गौणः शब्दः। अर्चिषो दूरभूयस्त्वाद्धूमस्यादर्शने च गौणः शब्दः। एवं च यथा दूरत्वबाहुल्ये धूमे दिवा दृश्येते नैवमार्चिषि रात्रौ च यथार्चिषि नैवं धूम इत्यस्मात्कारणादुभयत्रादर्शनोक्तिरित्युक्तं भवति। 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं जुहोति', 'सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः' इत्यस्य मिश्रलिङ्गमन्त्रविधेश्चायं शेषः। तच्छेषत्वं च 'तस्माद्धूम

---

१. 'षात्वमुप' क. २. 'दृश्यते नैव'.

एवे'त्यादेर्दिवाग्निरादित्यं गच्छतीत्यादिमिश्रत्वप्रतिपादनोपपत्तित्वेन द्रष्टव्यमिति ॥

अथ त्रयोदशं 'न चैतद्विद्मः' इत्यादिदृष्टविरोधोदाहरणपरिहारसूत्रम् —

## स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात् (१–१–१३)

इति ।

चतुष्पदम् । 'प्रवरे प्राव्रियमाणेऽनुब्रूयाद् देवाः पितर' इत्यस्य विधेरयं शेषः । अब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेनेति । तत्र च प्रसिद्धब्राह्मण्यानामेव सतां ब्राह्मणत्वसिद्धिर्निष्प्रयोजनेति ब्राह्मण्याप्रसिद्धिप्रतिपादनद्वारेण स्तुत्युपपादकमेतद्वाक्यं 'न चैतद्विद्मः' इति । तेनायमर्थः—स्त्र्यपराधात्कर्तुर्निषेक्तुः पुत्रदर्शनाच्च ज्ञायमानेऽप्यज्ञानवचनं दुर्ज्ञानत्वाद्गौणमित्युपस्कृत्य योजना द्रष्टव्या । स्त्रीणां स्वभर्तृव्यतिक्रमलक्षणोऽपराधः स्त्र्यपराधः । कर्तुः पुत्रदर्शनम् ॥

'माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।'

इति स्मृतिसिद्धम् पुत्रदर्शनमिति पाठेऽप्यर्थः स एव । यस्मात्कर्तुः पुत्रदर्शनं तस्माच्च तथेति ॥

अथ चतुर्दशं 'को हि तद्वेदे'ति शास्त्रदृष्टविरोधोदाहरणपरिहारसूत्रम् —

## आकालिकेप्सा (१-२-१४)

इति ।

एकपदम् । 'दिक्ष्वतीकाशान्करोती'त्यस्य विधेरयं शेषः । एतद्विधिविहितं प्रवर्ग्यकाले प्राग्वंशे दिक्ष्वतीकाशपर्यायच्छिद्रकरणमनेन स्तूयते । तदयमर्थः—आकालिकडाद्यन्तवचन इति तदानीमेवोत्पद्यमानमा-

---

१ 'पुत्रदर्शनम्' इति मुद्रितभाष्यादिपाठः. २. 'णो ब्रा' ग.

कालिकं प्रत्यक्षदृष्टफलं, तच्च धूमाद्युपद्रवराहित्यं, तत्र येप्सेच्छा सा गुण-वादनिमित्तमित्यत्राप्युपस्कृत्य योजना । एतदुक्तं भवति—कर्मजन्यं फलं विप्रकृष्टकालत्वात् परोक्षम्, अतीकाशकरणफलं तु तदानींतनत्वात्प्रत्यक्ष-मित्यतीकाशकरणं स्तोतुं 'को ही'त्याक्षिप्यते इति । अकालिकेति ह्रस्वपाठे तु 'तत्र भवः (पा० सू० ४-३-५३), 'कालाट्ठञ्'(पा० सू० ४-३-११) इति कालिकं विप्रकृष्टकालीनं तन्न भवतीत्य कालिकं तदानीन्तनं तस्येच्छा 'को हि तद्वेदे'त्यनिश्चयोपन्यासे कारणम् । स्वर्गप्राप्तिर्हि भावि-कालीना निश्चेतुं न शक्यते, अतीकाशफलं तु प्रत्यक्षत्वान्निश्चीयत इति भावः ॥

अथ पञ्चदशं फलाभावसूत्रोक्तमनुपलब्धिविरोधं परिहर्तुं सूत्रम् —

## विद्याप्रशंसा (१-२-१५)

इति ।

एकपदम् । तस्यार्थः—यासौ गर्गत्रिरात्रवेदानुमन्त्रणविद्यायां मुखशोभावाजिजन्महेतुतोक्तात्र वाक्ये सा तस्याः प्रशंसैव, न फलविधि-रिति नानुपलब्धिविरोधः । विद्यास्तुतिश्च वेद्यस्तुतौ पर्यवस्यति । वेदन-मपि हि तयोर्मुखशोभादिकारणं किमुतानुष्ठानमिति स्तूयते 'शोभतेऽस्य मुखमि'ति गर्गत्रिरात्रविधिशेषः । वेदानुमन्त्रणविधे'रास्य प्रजायां वाजी जायते' इति । तत्र ह्येवं श्रुतं 'वेदो ददातु वाजिनमित्याहास्य प्रजायां वाजी जायते य एवं वेद' इति ॥

अथ षोडशं पूर्णाहुत्यादिवाक्येष्वनुपलब्धिविरोधं परिहर्तुं सूत्रम् —

## सर्वत्वमाधिकारिकम् (१-२-१६)

इति ।

द्विपदम् । तस्यार्थः—'पूर्णाहुत्या सर्वान् कामानवाप्नोती'ति 'पूर्णाहुतिं जुहोती'ति विधेः शेषः । 'पशुबन्धयाजी सर्वान् लोकानभिजयती'ति 'पशुमालभेते'ति विधेः शेषः । 'य उ चैनमेवं वेदे'ति 'तरति मृत्यु'मित्यादेरश्वमेधविधेः शेषः । तत्र च पूर्वसूत्रात् प्रशंसापदमादाय सर्वत्वमिति सूत्रांशोऽनुपलब्धिविरोधं परिहर्तुमेवं व्याख्येयः—पूर्णाहुतिपशुबन्धयोः सर्वकामलोकफलत्ववचनमश्वमेधविद्यायाश्च मृत्युतरणादिसर्वफलत्ववचनं प्रशंसार्थत्वान्नानुपलब्धिविरुद्धमिति । पुनरपि सर्वशब्दस्य वाक्यद्वये सालम्बनत्वं दर्शयितुं सर्वत्वमित्यस्यावृत्त्या सूत्रशेषयोजना कर्तव्या । तत्र पूर्णाहुतिवाक्ये सर्वत्वं सर्वकामावाप्तिवचनम् । आधिकारिकमधिकारे भवमधिकाराभिप्रायमिति यावत् । कामशब्दश्च कारणे कार्यवदुपचारादग्निवचनः । ततश्च पूर्णाहुत्या सर्वकामनिमित्तकर्मसाधनभूतानग्नीनवाप्नोतीति कर्माधिकारप्रतिपादनं श्रुत्यर्थ इत्युक्तं भवति । पशुबन्धवाक्येऽपि लोकशब्दस्य फलपर्यायत्वात् 'एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते', 'अथैष सर्वेभ्यो ज्योतिष्टोमः' इत्यधिकृतस्य ज्योतिष्टोमस्य सर्वलोकसाधनत्वात्तदङ्गभूतस्य पशुबन्धस्यापि तद्द्वारा सर्वलोकसाधनत्वं स्तुत्यर्थमुपचारादुक्तमिति योज्यम् । अधिकारशब्दोऽत्राधिकृतज्योतिष्टोमवचनः । ततश्च पशुबन्धस्य सर्वफलत्वं ज्यौतिष्टौमिकमित्युक्तं भवति । अश्वमेधविद्योदाहरणे तु सर्वमृत्युतरणादिफलत्वमश्वमेधविद्याया आधिकारिकमधिकृताश्वमेधभवमश्वमेधस्य तत्फलत्वादौपचारिकमिति व्याख्येयम् । नन्वाधिकारिकमपि सर्वफलत्वमेतेषां न युज्यते, अधिकृतानामप्याकाशगमनसुरकन्यालाभाद्यसाधनत्वेनासर्वफलत्वादित्याशङ्कां परिहर्तुमप्येतदेव सूत्रमावृत्त्या योज्यं—यथा लोके सर्वमन्नं भुक्तमित्यादौ सर्व-

१. 'त्तकधर्मसाधन' ख.

शब्दोऽधिकृतापेक्षः, एवमत्रापि वैदिककर्मसाध्यत्वेनाधिकृतफलग्राही भविष्यतीति न दोष इति ।

एवं स्तुत्यर्थत्वेनान्यानर्थक्यं परिहृत्याधुना फलविधित्वमभ्युपेत्यापि तन्निराकरणं शक्यमिति वक्तुं सप्तदशं सूत्रमाह —

**फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् (१–२–१७)**

इति ।

सप्तपदम् । तस्यार्थः—फलस्य कर्मभ्यो निष्पत्तेः श्रुतत्वात्, तेषां कर्मणां परिमाणतोऽल्पत्वमहत्त्वात्मकात् फलविशेषः फलपरिमाणविशेषः स्यात् । कारणानुरूप्यात् कार्यस्य । ततश्च कर्मपरिमाणतारतम्येन फलपरिमाणतारतम्यसम्भवात् पूर्णाहुत्यादिभिः स्तोकफलावाप्तावपि न महतां कर्मणामानर्थक्यमित्युक्तं भवति । अत्र दृष्टान्तमाह—लोकवदिति । यथा लोके कृष्यादिजन्येषु व्रीह्यादिफलेषु कर्मानुरूप्यं दृश्यते, एवं वैदिककर्मजनितेषु स्वर्गादिफलेष्वपि कर्मानुरूप्यनुमानं नानुपपन्नम् । तस्मात् फलाधिक्यार्थिनो महाकर्मविधिरर्थवान् भविष्यतीति नान्यानर्थक्यदोष इति । कैश्चित्तु 'परिमाणतः' इत्यस्यानन्तरं 'सारतो वे'त्यपि सूत्रे पठ्यते तत् परिमाणतः सारतो वा फलविशेषः स्यात्'इति भाष्यग्रन्थव्याख्यानत्वेन 'साधनानुरूपत्वात् साध्यानाम्'इत्यादिवार्तिकग्रन्थं सूत्रातिरेकणापि सारग्रहणमुपपादयतीत्यवतारयता न्यायसुधाकारेणानङ्गीकृतत्वादशोभनमिति ।

अथाभागिप्रतिषेधानित्यसंयोगयोः परिहारार्थमेकमेवाष्टादशं सूत्रम्—

**अन्त्ययोर्यथोक्तम् (१–२–१८)**

इति ।

---

१. 'त्य' ग. २. 'रूप्यानुमानं' ख. ३. 'फलादिक्यार्थिनो' ख.

द्विपदम्। तस्यार्थः—अन्त्ययोरभागिप्रतिषेधानित्यसंयोगयोर्यथोक्तमुक्तानुसारेण समाधानं द्रष्टव्यं—यथा वाङ्मनसयोर्निन्दा हिरण्यस्तुत्यर्थेत्युक्तमेवमयमपि प्रतिषेधो 'हिरण्यं निधाय चेतव्यमि'ति विहितहिरण्यस्तुत्यर्थः। अनित्यसङ्गस्यापि 'परं श्रुतिसामान्यमात्र'मित्युक्तमेव समाधानं द्रष्टव्यमित्यनेनोच्यत इति ॥

अत्रार्थवादाधिकरणेऽष्टादश सूत्राणि ॥

अथ द्वितीयमौदुम्बराधिकरणम्। तत्र 'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जोऽवरुध्यै' इत्यादिविधिवन्निगदार्थवादानुदाहृत्य किमेषामपि स्तुतिः प्रयोजनमुत विधिरिति सन्दिह्य विधित्वं पूर्वपक्षयितुमाद्यसूत्रम्[1] —

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् (१–२–१९)**

इति।

सप्तपदम्। वाशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः। विधिरेवैषां कार्यं स्यात् न स्तुतिः। स च विधिः फलस्य। कुत इत्याह— अपूर्वत्वादिति। अपूर्वार्थविधिसम्भवादित्यर्थः। स्तुतिपक्षे दोषमाह—वादमात्रं ह्यनर्थकमिति। हिरवधारणे। स्तुतश्चास्तुतश्च तावानेवार्थ इति, तदर्थं भूतानुवादमात्रं क्रियमाणमनर्थकमेव स्यादिति ॥

अथ द्वितीयं परिचोदनासूत्रम् —

**लोकवदिति चेत् (१–२–२०)**

इति।

---

१. 'माद्यं सूत्रं' ख, ग.

त्रिपदम् । तस्यार्थः—इति चेत्पश्यासि फलविधिरिति । तन्न । स्तुतिरेवैषा भवितुमर्हति लोकवत् । यथा लोके क्रय्येयं गौरिति विहिते स्तुतिः—एषा हि बहुक्षीरा स्त्र्यपत्येत्यादिभिः क्रियते, एवमत्रापि स्यात् इति ॥

अथ तृतीयं परिहारसूत्रम् —

## न पूर्वत्वात् (१–२–२१)

इति ।

द्विपदम् । तस्यार्थः—नायं दृष्टान्तः यल्लोकवदिति । कुत इत्याह—पूर्वत्वादिति । लोके बहुक्षीरत्वादीनां प्रमाणान्तरेण ज्ञातपूर्वत्वाज्ज्ञातज्ञान-प्रयोजनाभावेन युक्तं प्ररोचनार्थमभिधानमिति । नैवं वेदे मानान्तरा-पूर्वार्थे । तस्मात्फलविधिरेवायमिति ॥

अथ चतुर्थं सिद्धान्तसूत्रम् ।

## उक्तं तु वाक्यशेषत्वम् (१–२–२२)

इति ।

त्रिपदम् । तुशब्दः फलविधित्वं व्यावर्तयति । उक्तमर्थवादानां स्तुतिद्वारा विध्यङ्गत्वापरपर्यायं त्र्यंशभावनाविधायकविधिवाक्यशेषत्वं 'विधिना त्वेकवाक्यत्वादि'त्यत्र । न खलु तस्य क्वचिदपि बाधः शङ्क-नीयः । तस्मान्न फलविधिरिति ॥

अथ पञ्चमं सिद्धान्ताभ्युच्चयसूत्रम् —

## विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् (१–२–२३)

इति ।

दशपदम् । इतश्च न फलविधिरिति चशब्दार्थः, यतः क्वचित्कल्प्यमानोऽपि विधिरनर्थकः । यथा—'अप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः' इत्यत्र । अत्र ह्यप्सुयोनिरश्वः कर्तव्य इति विधेरशक्यत्वादानर्थक्यम् । तत्रावश्यं स्तुतिः कल्पयितव्या, तत्सामान्यादितरेष्वपि वाक्येषु तथात्वमनुमीयते । तस्मात्फलार्थवादा एवैते इति ॥

अथ षष्ठमपि सिद्धान्ताभ्युच्चयसूत्रम्—

**प्रकरणे च सम्भवन्नपकर्षो न कल्प्येत**
**विध्यानर्थक्यं हि तं प्रति (१-२-२४)**

इति ।

दशपदम् । इतश्चैवमिति चशब्दार्थः । कुत इत्याह—प्रकरणे सम्भवन्नपकर्षो न कल्प्येतेति यतः । स्तुतिपक्षे 'यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता श्रपयितव्यं सदेवत्वाये'ति प्रकरणेऽर्थवादः सम्भवन् वाक्यशेषो यत्र नैर्ऋतस्तत्रापकृष्यमाणो न कल्प्येत । विधिपक्षे तु यो नैर्ऋतः स विदग्धः कर्तव्य इति विधानात्तत्कल्पना स्यात् । प्रकरणे नैर्ऋताभावात् । प्रकरणे सम्भवन्नग्न्यादिरपकृष्यमाणो न कल्प्यत इति वा योजना । दर्शपूर्णमासगतविदग्धोद्देशेन देवतान्तरविधावभ्युदितेष्टिवदुत्पत्तिवाक्यशिष्टदेवतापकर्षणं स्यादिति । यदि त्वेतद्दोषपरिहारार्थं प्रकरण एव विधिः कल्प्येत तदप्ययुक्तमित्याह—विध्यानर्थक्यं हि तं प्रतीति । हिर्हेतौ । यतस्तं प्रकरणिनं दर्शपूर्णमासयागं प्रति नैर्ऋताभावाद्विदग्धताविधानं देवतान्तरसद्भावाद्देवताविधानं चानर्थकं स्यात् । तस्मादर्थवाद एवायमिति ॥

---

१. 'कल्प्येत इति' ख, ग.

अथ सप्तममपि तादृशं सूत्रम् —

## विधौ च वाक्यभेदः स्यात् (१-१-२५)

इति ।

चतुष्पदम् । चशब्द उक्तार्थः । यत औदुम्बरो यूपो भवति, ऊर्जोऽवरुध्यै च तद्भवतीति विधावाश्रीयमाणे वाक्यभेदः प्रत्ययावृत्तिलक्षणः प्रसज्येत । अतोऽप्यर्थवाद एवायमिति ।

अत्रौदुम्बराधिकरणे सप्त सूत्राणि ॥

अथ तृतीयं हेत्वधिकरणम् । तत्र 'शूर्पेण जुहोति', 'तेन ह्यन्नं क्रियते' इत्यादिहेतुवन्निगदार्थवादानुदाहृत्य हेत्वर्थत्वस्तुत्यर्थत्वे सन्दिह्य हेत्वर्थत्वं पूर्वपक्षयितुमाद्यं सूत्रम् —

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् (१-१-२६)

इति ।

चतुष्पदम् । वाशब्दोऽत्रापि पूर्वाधिकरणपूर्वपक्षसूत्रस्थतुशब्दवद्व्याख्येयः । अत्र च सूत्रे हेतुप्रतिज्ञायामुक्तस्यार्थवत्त्वोपपत्तिहेतोः साक्षाद्धेतुत्वासम्भवादन्यस्य च हेतोरनुक्तत्वाद्धेत्वनभिधानात्मकं तावन्न्यूनत्वमस्ति । तथार्थवत्त्वोपपत्तिभ्यामित्यस्य हेतोः साध्यानुक्तेः साध्यानभिधानात्मकम् । तत्कथं परिहर्तव्यमिति चेत् एवमिति ब्रूमः । पूर्वाधिकरणपूर्वपक्षहेतोरपूर्वत्वादित्यस्यात्राप्यनुषङ्गेण योजनाद्धेत्वनुक्त्या न्यूनत्वं तावन्नास्ति । नाप्यर्थवत्त्वोपपत्तिहेतोः साध्यानुक्त्या, स्यादिति पदेन सोपस्कारेण साध्यस्योक्तत्वात् । कथमिति चेत्तदुच्यते । एवं ह्यत्रानुषक्तविधिपदेन हेतुशब्देन प्रथमं प्रतिज्ञायते । 'तेन ह्यन्नं क्रियते' इति हेतुः । हेतुत्वविधि-

---

१. 'त्वर्थपू' ग. २. 'न्य' क, ग. ३. 'पक्षे हेतो' ख.

रन्नकरणस्य होमसम्बन्धं प्रति, नार्थवाद इति। तत्र हेतुरपूर्वत्वादिति। शूर्पव्यतिरेकेण दर्वीपिठरादेरप्यपूर्वस्यार्थस्यार्थापत्तिलभ्याद्वचनाद्विधिसिद्धेरित्यर्थः। तत्रेयमाशङ्का— ननु यद्यदन्नकरणं तेन तेन होतव्यमित्यन्वयाभावाद् भावे वा तस्य दर्व्यादिप्राप्तिफलत्वासिद्धेः कथं दर्व्यादिविधिरर्थापत्तिलभ्याद्वचनादिति। तत्रोत्तरं स्यादिति। स्यादुपपद्यत इत्यर्थः। किमित्यपेक्षायामन्वयवाक्यं तस्य च दर्व्यादिप्राप्तिफलत्वमित्युपस्कृत्य योजना कर्तव्या, तत्र हेतुरर्थवत्त्वोपपत्तिभ्यामिति। अर्थवत्त्वमन्नक्रियायामुपयोगित्वम्। तद्धि दर्वीपिठरादेरप्यस्ति तस्योपयोगित्वमात्रस्य साधकतमत्वेन विवक्षायां कारकप्रवृत्तेर्वैवक्षिकत्वमुपपत्तिः। तदयमर्थः—दर्व्यादेरप्यन्नक्रियायामुपयोगित्वाद्व्यवहितकाङ्क्षाद्यपेक्षया साधकतमत्वेन विवक्षाया अप्युपपद्यमानत्वादस्त्येवान्वयवाक्यम्। तस्य दर्व्यादिप्राप्तिफलत्वं चेति। सङ्कच्छत एव वा साक्षाद्धेतुविधित्वप्रतिज्ञायामर्थवत्त्वोपपत्तिभ्यामिति हेत्वभिधानम्। तथाहि—अर्थवत्त्वादर्थवादात्प्रयोजनवत्तरत्वादुपपत्तेरप्रसिद्धहोमसम्बन्धेऽपि काल्पनिकवाक्यसम्बन्धाश्रयणस्योपपन्नत्वाच्च हेतुविधिरेवायं नार्थवाद इति योजनासम्भवात्। अतः श्रुतानुमितैकदेशमिदं वाक्यं शूर्पमन्यद्वा यदन्नकरणं तेन होतव्यमिति॥

अथ द्वितीयं सिद्धान्तसूत्रम्—

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य (१-२-२७)**

इति।

षट्पदम्। तुशब्दो हेतुविधिं व्यावर्तयति। अत्र 'तेन ह्यन्नं क्रियते' इति स्तुतिः तस्य दर्व्यादेरन्नकरणस्याचोदना च स्यादिति द्वयी प्रतिज्ञा। उभयत्र

१. 'त्तरं स्यादु' ग. २. 'फलं' क.

शब्दपूर्वत्वादिति हेतुः। तेनायमर्थः—अन्नकरणताया हेतुत्वस्य प्रमाणान्तरानवसेयत्वेन शब्दैकसमधिगम्यत्वाच्छब्देन च शूर्पेण होमे कर्तव्येऽन्नकरणत्वस्य हेतुत्वाभिधानात्, तस्य च 'शूर्पेण जुहोती'ति विधिसिद्धत्वेन हेत्वनपेक्षतया स्तुतिमात्रार्थित्वावगतेः स्तुतिः। शूर्पस्यैव शब्दविहितत्वात्तदवरुद्धे होमे दर्व्यादेरचोदना च स्यादिति ॥

अथ तृतीयं परिचोदनासूत्रम्—

## व्यर्थे स्तुतिरन्याय्येति चेत् (१–२–२८)

इति।

पञ्चपदम्। तस्यार्थः—इति चेत्पश्यसि शूर्पस्य स्तुतिः 'तेन ह्यन्नं क्रियते'[1] इति। तदयुक्तम्। व्यर्थेऽन्नकरणत्वात्मकेनार्थेन रहिते शूर्पे सति तस्य तेन स्तुतिरन्याय्या न युज्यते। तस्यापि हि न साक्षादन्नकरणत्वमस्ति। नापि वर्तमानान्नक्रियत्वम्। अतः को विशेषो दर्वीपिठरादिभ्य इति ॥

अथ चतुर्थं परिहारसूत्रम्—

## अर्थस्तु विधिशेषत्वाद्यथा लोके (१–२–२९)

इति।

पञ्चपदम्। तुशब्दश्चोद्यव्यावृत्तौ। स्तुतिपक्षेऽर्थोऽस्ति स्तुत्यालम्बनमन्नकरणत्वं[2] नाम, न व्यर्थत्वम्। कुत इत्याह—विधिशेषत्वादिति। 'शूर्पेण जुहोति' इत्यस्य विधेः शेषत्वादस्य वाक्यस्य।

विधिद्वयं चैकवाक्ये तदा यस्मादसम्भवि।
अवश्यमनुवादेन भवितव्यमनेन तत् ॥

---

१. 'ति इत्थं ल' ग. २. 'स्तुत्यालम्बम' ख.

अनुवादश्च विज्ञातानुसारेण भवेदतः ।
शूर्पेऽन्नकरणं यादृग्दृष्टं तादृगिहोदितम् ॥

वर्तमानापदेशोऽपि व्याख्यातव्योऽनया दिशा ।
कृतं करिष्यमाणं वा स्तोतुं सोऽपि कृतो यतः ॥

वर्तमानादरात्पुंसां वर्तमानतया स्तुतिः ।
स्वतोऽसतोरन्नकरणवर्तमानत्वयोर्ग्रहे ॥

विधावेव भवेद् दोषो न स्तुतौ तादियं स्तुतिः ।
यथा लोके देवदत्तो बलवानित्युदीरणा ॥

ततो न्यूनबलानेव पुंसोऽपेक्ष्य भविष्यति ।
न प्रकृष्टबलान् सिंहव्याघ्रादीनप्यपेक्षते ॥

एवं निकृष्टान्नहेतून् लाङ्गलादीनपेक्ष्य तु ।
स्तोतुं प्रकृष्टान्नहेतुभावः शूर्पस्य कथ्यते ॥

अथान्वारुह्यवादेन सिद्धान्तप्रतिपादकम् ।
सूत्रमेकादशपदं यदि चेत्यादि पञ्चमम् ॥

**यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेदव्यवस्था विधीनां स्यात् (१-२-३०)**

इति ।

अभ्युपेत्योच्यते हेतुर्यद्यपि स्यात्तथाप्ययम् ।
व्यवातिष्ठेत शूर्पेऽत्र न दर्व्यादौ प्रसज्यते ॥

कुत इत्याह निर्देशादिति निर्दिश्यतेऽत्र तत् ।
विधाय ह्यन्नकरणं हेतुरत्राभिधीयते ॥

१. 'धाय तद्यत्र' क. 'ना तद्यत्र' ग.

न दर्वीपिठरादीनि तस्मात्तत्र व्यवस्थितिः ।

एवं शूर्पेणेतिपदश्रुत्या शूर्पव्यवस्थायां हेतोरुक्तायां प्रत्यय-श्रुतिबलेन पदश्रुतिबाधात्सामान्यमात्रस्य हेतुत्वशङ्कार्थं सामान्यादिति चेदिति सूत्रावयवोऽवतारणीयः[1] । नात्र शूर्पगतान्नकरणविशेषापेक्ष-यान्नकरणं हेतुरुच्यते, किन्तु सर्वदर्वीपिठरादिसाधारणान्नकरणमहा-सामान्यापेक्षया । ततश्च तैरपि होमः प्राप्नोतीति चेद् ब्रूष इत्यर्थः । अनन्तरमस्योत्तरत्वेन पदश्रुत्या प्रत्ययश्रुतिबाधाभिधानार्थमव्यवस्था विधीनां स्यादिति सूत्रावयवोऽवतार्यः । तस्मिन् पक्षे सर्वैरपि लाङ्गल-मुसलादिभिः प्रणाड्यान्नस्य क्रियमाणत्वाद्धेतुसामर्थ्यकल्पितानां विधी-नामव्यवस्था विधेयानेकत्ववशेनानेकत्वं स्यात्, ततश्च शूर्पश्रुतिरनर्थिकैव भवेत्, तस्मात्तदर्थवत्त्वाय हेतुश्चेच्छूर्प एव व्यवस्थाङ्गीकर्तव्या, न चासौ हेतुः । उक्तप्रकारेण स्तुतित्वस्यैवोपपन्नत्वादिति । अत्र हेत्वधिकरणे पञ्च सूत्राणि ॥

अथ चतुर्थं मन्त्राधिकरणम् —

तत्रार्थवादः कः को वा नेत्येवं कोष्ठशोधने ।
कृते[2] ह्यधिकरण्याथ क्रियते मन्त्रचिन्तनम् ॥

स्वाध्यायविधिसामर्थ्यात्तेषामप्युपपादिते ।
आद्याधिकरणेनार्थे, तदाक्षिप्य समर्थ्यते ॥

किं क्रतावुपकर्तव्यं मन्त्रैरर्थप्रकाशनात् ।
किं वोच्चारण[3]मात्रेण यदार्थस्य प्रकाशनात् ॥

तदार्थवत्त्वं प्रागुक्तं सिद्धं तैरेव हेतुभिः ।
अथोच्चारण[4]मात्रेण तदानर्थक्यमर्थतः ॥

---

१. 'तार्यः' ग. २. 'कृता'. ख, ग. ३. 'चरण' ख. ४. 'चरण' ख.

तत्र वक्तुं पूर्वपक्षमाद्यं सूत्रमिदं कृतम् ।

**तदर्थशास्त्रात् (१--२--३१)**

इति एकपदं, तस्यार्थ ईदृशः ॥

मन्त्रो यदर्थः शास्त्रं च तदर्थं दृश्यते यतः ।
ततोऽर्थवर्जिता मन्त्राः सत्यऽर्थे तन्न युज्यते ॥

अभ्र्यादानसमर्था हि मन्त्राः प्रत्यक्षवाक्यतः ।
विधीयन्ते 'तां चतुर्भिरभ्रिमादत्त' इत्यतः ॥

रशनादानशक्तस्य रशनादान एव हि ।
चोदने'मामगृभ्णन्नि'त्यस्य मन्त्रस्य विद्यते ॥

तथा प्रथनशक्तस्य प्रथने दृश्यते विधिः ।
'उरुप्रथस्वेति पुरोडाशं प्रथयती'त्ययम् ॥

विवक्षितेऽर्थे सत्येषां लिङ्गादेव विधिर्भवेत् ।
तेनाविवक्षितार्थत्वं शास्त्रतादर्थ्यतः स्थितम् ॥

द्वितीयं

**वाक्यनियमात् (१--२--३२)**

इति सूत्रमतः परम् ।

अस्यार्थो वार्त्तिके पञ्चविध उक्तोऽस्ति तद्यथा ॥

वाक्ये क्रमस्य नियमादर्थो नास्तीति गम्यते ।
अग्निर्मूर्धेति मूर्धाग्निरिति चार्थो न भिद्यते ॥

उच्चारणार्थतायां तु तदन्यत्वात्क्रमोऽर्थवान् ।
इत्याद्योऽर्थो, द्वितीयस्तु मन्त्रत्वस्य प्रसिद्धये ॥

---

१. 'नरत्नस्य' क.

वाक्ये क्रमस्य नियमादित्यर्थे हि विवक्षिते ।
क्रमान्यत्वेऽप्यर्थसिद्धेर्मन्त्रत्वं न विनश्यति ॥

तृतीयस्तु स्वीयमन्त्रवाक्यस्य नियमादिति ।
न ह्यर्थास्तित्वेऽन्यदीयस्वीययोर्भेद इष्यते ॥

चतुर्थोऽर्थोक्तिसामर्थ्ये मन्त्रलौकिकवाक्ययोः ।
तुल्येऽपि मन्त्रवाक्यस्य नियमात् तत्स्मृताविति ॥

पञ्चमः स्मरणोपाये ध्यानादौ प्रसजत्यपि ।
तदर्थं वाक्यनियमान्मन्त्रेणैव स्मरेदिति ॥

अथ सूत्रं तृतीयं स्यात्

**बुद्धशास्त्रात् (१–२–३३)**

इतीदृशम् ।

बुद्धेऽर्थे पाठतः कार्यं शास्त्रं प्रैषात्मकं यतः ॥

अत्र'ग्नीदग्नीन्विहर बर्हि'रित्यादि विद्यते ।
तस्मादुच्चारणार्थत्वं मन्त्राणां नाभिधार्थता ॥

**अविद्यमानवचनात् (१–२–३४)**

इति सूत्रं चतुर्थकम् ।

यस्मादविद्यमानस्य यज्ञेऽर्थस्याभिधेक्ष्यते ॥

'चत्वारि शृङ्गे'त्येतस्मिन्मन्त्रे न ह्यस्ति तादृशः ।
यज्ञसाधनभूतोऽर्थस्तस्मादुच्चारणार्थता ॥

'मा मा हिंसी'रित्यपि च 'मा मा सन्ताप्त'मित्यपि ।
अविद्यमानवचनं हिंसासन्तापवर्जिते ॥

सूत्रं तथा

(अ)चेतनेऽर्थबन्धनात् (१-२-३५)

इति पञ्चमम् ।

द्विपदं दृश्यते ह्यर्थे चेतनेऽर्थस्य बन्धनम् ।।

कार्योक्ति'रोषधे त्रायस्वैनमि'त्योषधिं प्रति ।
तथा 'शृणोत ग्रावाण' इति ग्राव्णः प्रति क्रमात् ॥

त्राणे पशोः श्रुतौ प्रातरनुवाकस्य चोक्तितः ।
तस्मादर्थविवक्षायामानर्थक्यं प्रसज्यते ॥

अर्थविप्रतिषेधात् (१-२-३६)

इत्यथ सूत्रं तु षष्ठकम् ।

यस्माद्विप्रतिषिद्धत्वं मन्त्रार्थे क्वापि दृश्यते ॥

यथा'दितिर्द्यौरदितिरन्तरिक्ष'मितीह तु ।
तथा रुद्रस्यैकतोक्तिरसङ्ख्यातोक्तिरेव च ॥

नहि द्युत्वान्तरिक्षत्वान्येकस्या युज्यतेऽदितेः ।
एकतासङ्ख्यातते च स्यातां रुद्रगते कथम् ॥

अतोऽप्यर्थाविवक्षा स्यान्मन्त्राणामिति गम्यते ।

स्वाध्यायवदवचनाद् (१-२-३७)

इति सूत्रं तु सप्तमम् ॥

द्विपदं वेदवाक्यं स्यात् स्वाध्याय इह तद्यथा ।
वटुनाभ्यस्यते पाठेनार्थस्य वचनं तथा ॥

तद्विवक्षिततायां तु तदेतन्नैव युज्यते ।
यदा हि पूर्णिका हन्ति व्रीहीणां कुरुते क्वचित् ॥

---

१. 'त्व' ग.

हन्तिमन्त्रं माणवकोऽधीते चापि तदा यथा ।
स्वाध्यायोऽभ्यस्यते तेन तद्वदर्थाभिधात्मनः ॥

वचनस्याभ्यस्यमानस्याभावादिति योज्यते ।
तेन सन्निहितेऽप्यर्थे तदभ्यासानपेक्षणात् ॥

नान्यदुच्चारणान्मन्त्रफलमस्तीति गम्यते ।
अथाष्टमम्

अविज्ञेयात् (१–२–३८)

इति सूत्रं यतः खलु ॥

केषाञ्चिदर्थो मन्त्राणां ज्ञातुमेव न शक्यते ।
सृण्येवाभ्यक्काणुकेति तस्मान्नार्थस्मृतिः फलम् ॥

स्मृतेनार्थेनोपकारः क्रतोर्नार्थस्य सत्तया ।
सूत्रं तु

अनित्यसंयोगात् (१–२–३९)

इत्येतन्नवमं परम् ॥

यस्मादर्थविवक्षायामनित्यैः कीकटादिभिः ।
'किन्त'इत्यादिमन्त्रस्य संयोगोऽर्थैः प्रसज्यते ॥

तस्मादुच्चारणार्थत्वं मन्त्राणां नाभिधार्थता ।
इत्यानर्थक्यशब्दस्यात्राम्नायस्येति सूत्रतः ॥

अनुषङ्गात्साध्यसिद्धिः सूत्रपाठेऽजिताकृतः ।
मन्त्रानर्थक्यमित्यन्ते पदं साध्यतयान्वितम् ॥

अस्ति न्यायसुधाकारपाठे भेदोऽनयोरयम् ।
एवमुक्ते पूर्वपक्षे सूत्रैर्नवभिरन्विते ॥

---

१. 'बं न' ग. २. 'त्वि' ग.

सिद्धान्तसूत्रं दशममथ त्रिपदमुत्तरम् ।

**अविशिष्टस्तु वाक्यार्थः (१–२–४०)**

इति तुः पक्षवारणः ॥

यस्माल्लोके च वेदे च पदार्थज्ञानपूर्वकः ।
वाक्यादर्थप्रत्ययोऽयमविशेषेण दृश्यते ॥
यद्वा यस्माद्ब्राह्मणे च मन्त्रे चापि पदार्थतः ।
वाक्यार्थप्रत्ययस्तुल्यः सर्वेषामुपजायते ॥
तस्माद्विवक्ष्यो मन्त्रार्थस्तद्वदेव भविष्यति ।
अथ पूर्वोक्तदोषाणां परिहारेऽभिधित्सिते ॥
परिहर्तुं 'तां चतुर्भि'रित्यत्रोक्तं तु दूषणम् ।
एकादशं

**गुणार्थेन पुनःश्रुतिः (१–२–४१)**

इतीदृशम् ॥

सूत्रं द्विपदमस्यार्थश्चतुष्टस्य गुणस्य तु ।
विधानार्थेन वाक्यस्य पुनः श्रवणमिष्यताम् ॥
अभावे त्वस्य वाक्यस्य चतुर्ष्वेकेन केनचित् ।
आदानमर्थात्प्राप्नोति न चतुर्णां समुच्चयः ॥
अतः सफलमेतस्य वाक्यस्योपेयतामिति ।
अथान्यद् दूषणं प्रोक्तं यदुदाहरणान्तरे ॥

तत्क्षेप्तुं

**परिसङ्ख्या (१–२–४२)**

इति सूत्रं द्वादशमुत्तरम् ।

तस्याऽर्थो नाभिसम्बन्ध इत्यादत्त इतीदृशम् ॥

---

१. 'शः' ग.

किन्त्विव 'त्यश्वाभिधानी' मित्येवं तत्र च लिङ्गतः ।
रशनामात्रगो मन्त्रोऽश्वाभिधान्यां विधीयते ॥

ततश्चाश्वाभिधानीमित्यस्यान्योऽर्थः फलिष्यति ।
न गर्दभाभिधानीमित्येषोऽन्यपरिसङ्ख्यया ॥

अतो न दोषः प्राप्तस्य पुनरुक्तिरसाविति ।
अत्र[1] त्रयोदशं सूत्रं द्विपदं दूषणान्तरम् ॥

उद्धर्तुं

**अर्थवादो वा (१-२-४३)**

इत्येतद्धेत्युपदेशनेम् ।
'उरु प्रथस्वेति पुरोडाशं प्रथयती'त्यदः ॥
वाक्यं भवेदर्थवादो न मन्त्रस्योपदेशकम् ।
स्तुतिश्चात्र पुरोडाशप्रथनस्यैवमिष्यते ॥
प्रजया पशुभिर्यज्ञपतेः प्रथनवाचिना ।
यस्मादनेन मन्त्रेण प्रथनं क्रियते ततः ॥
प्रशस्तमेतत्प्रथनमिति नानर्थकं वचः ।
चतुर्दशं सूत्रमथ दूषणान्तरदूषकम् ॥

**अविरुद्धं परम् (१-२-४४)**

इति द्विपदं तत्प्रपञ्च्यते ।
कारणं वचनार्थत्वे यद्वाक्यनियमात्मकम् ॥

उक्तं तत्स्मरणार्थत्वेऽप्यविरुद्धं भवेदिह ।
तथा ह्युच्चारणादृष्टवक्त्रा दृष्टान्तरं यथा ॥

कल्प्यं क्रमस्य नियमात्तथार्थास्तित्ववादिना ।
कल्प्यमानमदृष्टं[2] तन्नियमान्न विरुध्यते ॥

---

१. 'अथ', ख. ग. २. 'तुत्' ख. ग.

एवमुच्चार्यमाणस्ते मन्त्रोऽभ्युदयकृत्तथा ।
एवं प्रत्याय्यमानोऽर्थोऽभ्युदयाय तथैव नः ॥

इति नास्त्यावयोः कश्चिद्विशेषो नियमात्क्रमे ।
मन्त्रत्वनियमादीनामूह्यैवमविरुद्धता ॥

अथ पञ्चदशं बुद्धशास्त्रानर्थक्यपरिहारार्थं सूत्रम्—

**सम्प्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् (१—२—४५)**

इति ।

'चतुष्पदम् । तस्यार्थः—सम्प्रैषे 'अग्नीदग्नीन् विहरे'त्यादौ यार्थाभिधानकर्मगर्हा बुद्धबोधनात्मिका पूर्वपक्षिणा कथिता सानुपालम्भः दूषणं न भवति । कुत इत्याह—संस्कारत्वादिति । अनुष्ठेयपदार्थस्मृतिलक्षणदृष्टप्रयोजनपुरुषसंस्कारत्वात् सम्प्रैषेणानुष्ठानकालेऽर्थबोधनस्य । अथवा उपायान्तरे सति मन्त्रेण क्रियमाणस्य स्मरणस्यादृष्टरूपपुरुषसंस्कारात्मकत्वात् । यद्वा स्वाध्यायकालोत्पन्नज्ञानसंस्कारमात्रस्यैव तदानीं विद्यमानत्वात्, ततश्च तदुद्बोधनाय प्रैषवचनमर्थवद्भवतीति ॥

अथ षोडशमविद्यमानवचनपरिहारार्थं सूत्रम्—

**अभिधानेऽर्थवादः (१—२—४६)**

इति ।

द्विपदम् । तस्यार्थः—'चत्वारि शृङ्गे'त्यसदभिधानेऽपि नानर्थक्यम्, यतोऽर्थवादोऽयं मन्त्रः । गुणवादेन यज्ञसाधनस्तुतिपर इत्यर्थः । तद्द्वारेण चानुष्ठेयस्मृतिरविरुद्धा । एवं ह्यस्यार्थो यास्केनोक्तः—चत्वारि शृङ्गेति वेदा

१. 'नुवादक' ग.

वा एत उक्ताः । त्रयो अस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये। सप्त हस्तासः सप्त च्छन्दांसि । त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः। वृषभो रोरवीति । रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिः—यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति । महो देव इत्येष हि महान् देवो यद्यज्ञो मर्त्यानाविवेशेत्येष हि मनुष्याना· विशति यजनायेत्यधियज्ञमिति । अचेतनेऽर्थबन्धनस्याप्येतदेवोत्तरं— औषधिप्रभृतावचेतने चैतन्याभिधानेऽप्यर्थवादः शब्द इति ॥

अथ सप्तदशमर्थविप्रतिषेधपरिहारसूत्रम् —

## गुणादविप्रतिषेधः स्यात् (१–२–४७)

इति ॥

त्रिपदम् । तस्यार्थः—अदितेस्तत्तत्कार्यकारित्वेन गुणेन योगाद्द्युत्वादिव्यपदेशः त्वमेव माता त्वमेव पितेत्यादिवद्गौणो द्रष्टव्यः । अतो न विप्रतिषेधः । रुद्रैकत्वानेकत्वोक्तावप्येतदेवोत्तरम् । गुणाद्विशेषणादित्यर्थः । कर्मभेदलक्षणं विशेषणं निमित्तीकृत्यायं व्यपदेशः । अत एकदैवत्ये कर्मण्येको रुद्रः, बहुदैवत्ये बहव इत्यविप्रतिषेधः स्यादिति ॥

अथाष्टादशं स्वाध्यायवदवचनेनाभ्यासदोषं परिहर्तुं सूत्रम्—

## विद्यावचनमसंयोगात् (१–२–४८)

इति ।

द्विपदम् । तस्यार्थः—विद्याकाले मन्त्रेणार्थस्यावचनमप्रकाशनं पूर्णिकाहन्तेरयज्ञाङ्गत्वेन यज्ञसंयोगाभावान्माणवकहन्तिमन्त्राध्ययनस्य । तस्माद[१]प्ययमदोष इति ॥

१. 'दयमप्यदोष', ख, ग.

अथैकोनविंशमविज्ञेयत्वपरिहारसूत्रम् —

## सतः परमविज्ञानम् (१-२-४९)

इति ।

त्रिपदम् । तस्यार्थः—यत्परं कारणमुक्तं अम्यक्सृण्येवकाप्युकेत्यविज्ञेयत्वमिति । तदविज्ञानं सत एवार्थस्य पुरुषापराधान्नासतः । उक्तं हि यास्केन—'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति । यथा जानपदीषु विद्यातः पुरुषविशेषो भवती'ति । तस्मादनभियोगादेवाज्ञानमिति ॥

अथ विंशमनित्यसंयोगपरिहारसूत्रम् —

## उक्तश्चानित्यसंयोगः (१-२-५०)

इति ।

त्रिपदम् । चस्त्वर्थे । प्रतिशब्दोऽत्र द्रष्टव्यः । अनित्यसंयोगस्तु प्रत्युक्त एव 'परं श्रुतिसामान्यमात्र'मिति । अतो नेदानीं प्रतिवचनीय इत्यर्थः ॥

एवं तदर्थशास्त्रादीनि पूर्वपक्षलिङ्गानि परिहृत्य सिद्धान्ते लिङ्गत्रयं दर्शितं सूत्रत्रयेण । तत्र प्रथमं लिङ्गं दर्शयितुमेकविंशं सूत्रम् —

## लिङ्गोपदेशश्च तदर्थवत् (१-२-५१)

इति ।

त्रिपदम् । तस्यार्थः—यथा तेषां मन्त्राणामर्थविवक्षास्ति, तथा लिङ्गोपदेशो लिङ्गेनाग्न्यादीनां मन्त्राणा'माग्नेय्याग्नीध्रमुपतिष्ठते' इत्येवमादिको विनियोगश्च दृश्यते इति ॥

अथ द्वितीयं लिङ्गं दर्शयितुं द्वाविंशं सूत्रम् —

## ऊहः (१-२-५२)

इति ।

एकपदम् । तत्पूर्वसूत्राच्चशब्दमर्थवच्छब्दं चानुकृष्य व्याख्येयम् । ऊहदर्शनं च तदर्थवत्त्वेषां मन्त्राणामर्थोऽस्तित्ववत्तदनुगुणं दृश्यते इत्यर्थः । अर्थाभावे हि निर्वापमन्त्रः सौर्येऽप्याग्नेयवदविकृत एव प्रयोक्तव्यः स्यात् । तत्रोहदर्शनं विरुध्येत । अनूहितेनाप्युच्चारणादृष्टसिद्धेरूहस्यानर्थकत्वात् । प्रकृतावाम्नातस्य मन्त्रस्य विकृतौ समवेतार्थत्वाय तदुचितस्य पदान्तरस्य प्रक्षेपणं पाठो ऽूहः[1][2], स कथमर्थाविवक्षायां भवेदिति ॥

अथ तृतीयं लिङ्गं दर्शयितुं त्रयोविंशं सूत्रम् —

## विधिशब्दाच्च[3] (१-२-५३)

इति ।

द्विपदम् । तस्यार्थः– विधिशब्दो ब्राह्मणं तद्यस्मादेवंरूपमस्ति 'शतं हिमाः शतं वर्षाणि जीव्याः स्मेत्येव तदाहे'ति । तस्माच्चार्थविवक्षा-स्तीति गम्यते इति । तथा प्रथमाबहुवचनैकवचनान्तपाठयोस्तु तदर्थवादि-त्यनुषज्य यथा मन्त्रा अर्थवन्तः तथा भवन्ति भवतीति वा योज्यमिति ॥

अत्रानिर्दिष्टसङ्ख्याकं सूत्रमेकपदं भवेत् ।
त्रयोविंशतिरुक्तानि सूत्राण्यत्रेति च स्थितम् ॥

इति श्रीमदृषिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे प्रथमस्याध्यायस्य
द्वितीयः पादः समाप्तः ।

---

१. 'मै', २. 'व्यूहः' ग. ३. 'शब्दाश्च' इति भाष्यादिपाठः.

अथ प्रथमस्याध्यायस्य तृतीये पादे

## प्रथमं स्मृत्यधिकरणम्

—:०:—

तत्र द्विपाद्या प्रत्यक्षवेदप्रामाण्य ईरिते ।
चिन्तानुमेयवेदासु स्मृतिषु क्रियतेऽधुना ॥

अप्रमाणं प्रमाणं वा स्मृतयास्त्विति संशये ।
अप्रामाण्यं पूर्वपक्षं वक्तुं सूत्रमिदं स्मृतम् ॥

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् (१–३–१)**

इति । पञ्चपदम् ।

द्वावप्येतौ शब्दशब्दौ सूत्रस्थौ वेदगोचरौ ।
धर्मस्य वेदमूलत्वादवेदमनपेक्षितम् ॥

प्रमाणत्वेन मन्वादिवाक्यमित्यर्थ इष्यते ।
अवेदत्वं च मूलस्य भ्रान्त्यादेरपि सम्भवात् ॥

वेदोऽस्ति चेन्मूलभूत उपलभ्येत नो ह्यसौ ।
तदभावात्तु नास्त्येवेत्येवं मन्यामहे वयम् ॥

इत्युक्ते पूर्वपक्षे तद्वेदमूलत्वसम्भवम् ।
सिद्धान्तत्वेन विदितं द्वितीयं सूत्रमुच्यते ॥

**अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् (१–३–२)**

इति । षट्पदम् ।

अपिवेति स्मृतेर्मूलश्रुत्यभावो निवार्यते ।
स्मृतिश्रुत्यर्थयोः कर्तृसमानत्वेन हेतुना ॥

---

१. 'अनपेक्षं' इति भाष्यादिसम्मतः पाठः. २. 'प्यसौ' ग.

प्रमाणमनुमानं स्याच्छ्रुतिमूलत्वकल्पने ।
अदर्शनं विप्रकीर्णशाखास्थत्वेन च श्रुतेः ॥
दृष्ट्वा मन्वादिभिर्विप्रकीर्णशाखास्थिताश्श्रुतीः ।
भविष्यत्पुरुषप्रज्ञाह्रासभीतैः कृपावशात् ॥
तदर्थमात्रमेकत्र निबद्धं स्मृतिरूपतः ।
तस्मात्स्मृतिप्रमाणत्वं श्रुतिमूलत्वतः स्थितम् ॥

अत्र स्मृत्यधिकरणे द्वे सूत्रे ।

स्याद्विरोधाधिकरणं द्वितीयमथ तत्पुनः ।
प्रागुत्सृष्टस्मृतिप्रामाण्यापवादार्थमिष्यते ॥
तत्र श्रुतिविरुद्धानां स्मृतीनां किं प्रमाणता ।
उताप्रमाणतेत्येवं सन्दिह्योत्सूत्रमादिमम् ॥
पक्षं कृत्वा पूर्वपक्षं श्रुतिस्मृतिविकल्पतः ।
सिद्धान्तमप्रमाणत्वं वक्तुं सूत्रमिदं स्मृतम् ॥

## विरोधे त्वनपेक्ष्यं[1] स्यादसति ह्यनुमानम् (१-३-३)

इति ।

सप्तपदम् । तुशब्दः पक्षबाधार्थो हिशब्दो हेतुवाचकः ।

औदुम्बरीस्पर्शसर्ववेष्टनादिक्रियार्थयोः ।
श्रुतिस्मृत्योर्विरोधेऽत्र स्मृतेरौत्सर्गिकं स्थितम् ॥
प्रामाण्यमनपेक्ष्यं स्याद्विरोधेनापवादतः ।
यतोऽसति विरोधे प्रागनुमानं श्रुतेः स्थितम् ॥
विकल्पस्तुल्यकल्पेषु दृष्टो व्रीहियवादिषु ।
न चात्र तुल्यकल्पत्वं श्रुतिव्यवधितस्मृतेः ॥
अगत्यैवाष्टदोषत्वाद्विकल्पोऽप्यभ्युपेयते ।
अस्ति चात्र गतिः श्रुत्या स्मृतिबाधो बलिष्ठया ॥

---

१. 'त्वनपेक्षं' इति भाष्यादिसम्मतः पाठः.

तस्मात्स एवात्र युक्त इत्युक्तेऽभ्युच्चयात्मकम् ।
सूत्रं द्विपदवत्

हेतुदर्शनाच्च (१—३—४)

इत्यनन्तरम् ॥

चशब्दस्यानपेक्ष्यं स्यादितश्चेत्यर्थ इष्यते ।
दृश्यन्ते हेतवो यस्मादत्र लोभादयः स्फुटाः ॥

सर्ववेष्टनवाक्यस्य मूलं वाससि लुब्धता ।
बुभुक्षायाः क्रीतराजभोज्यान्नस्मृतिमूलता ॥

प्रतिवेदं द्वादशाब्दब्रह्मचर्यस्मृतेः पुनः ।
अपुंस्त्वच्छादनं मूलमतो नासां प्रमाणता ॥

अत्र विरोधाधिकरणे द्वे सूत्रे ।

अथास्यैव सूत्रस्य वर्णकान्तरकरणाद् द्वितीयं हेतुदर्शनाधिकरणम् । तत्र 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती'त्यादिगृह्यमाणकारणं श्रुत्याविरुद्धं वाक्यमुदाहृत्य प्रामाण्याप्रामाण्ये सन्दिह्य कर्तृसामान्याच्छ्रुत्यविरोधाच्च प्रामाण्यं पूर्वपक्षयित्वा तदभावं सिद्धान्तयितुमिदं सूत्रम् । तस्यार्थः—नतु श्रुतिविरोधादेव केवलमनपेक्ष्यत्वं स्मृतिप्रामाण्यस्य, किन्तु लोभादिहेतुदर्शनाच्चेति चशब्देनाऽनुषज्यते ।

दृष्टे हेतावदृष्टस्य न हेतोरनुमेयता ।
दृष्टश्च हेतुर्लोभादिस्तदासामप्रमाणता ॥

इति ।

अत्र हेतुदर्शनाधिकरण एकं सूत्रम् ।

एवं भाष्यकारमतेन सूत्रद्वयव्याख्या कृता । वार्तिककारस्तु श्रुत्योरिव श्रुतिस्मृत्योरपि विरोधे प्रामाण्यमस्त्येवेति मन्वानोऽन्यथाकारं द्वेधा व्याचकार, एवं ह्युक्तम्—

---

१. 'दृष्टत्वहेतु', ख.

'तेनेह[1] यदि वा कर्मप्रयोगोऽयं निरूप्यते ।
यदि वा बाध्यमानत्वमुक्तं बाह्यस्मृतीः प्रति ॥'

इति ।

तत्र पूर्वार्धकृता व्याख्या तेनैवैवं विवृता—

'यावदेकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते ।
तावद्द्वयोर्विरुद्धत्वे[2] श्रौतानुष्ठानमिष्यते ॥'

इति ।

सूत्रं चैवं व्याख्यातं 'श्रौतस्मार्तविज्ञानविरोधे यदपेक्षावर्जितं यस्य वापेक्षणीयमन्यन्नास्तीत्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणपदमनुषङ्गेण सम्बन्ध्य यदनपेक्ष्यं तत्तावत्प्रमाणं स्यादिति तदानींतनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते' इति । पुनर्द्वितीयार्धकृतव्याख्याविवरणमप्येवं कृतम् —'यद्वा यान्येतानि त्रयीविद्भिर्ना परिगृहीतानि म्लेच्छस्मृत्याचारनिबन्धनानि तेषामेव श्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यत' इति । तस्मिंश्च पक्षे बाह्यस्मृतीनामसत्यापि कर्तृसामान्येऽग्निहोत्रादिभिर्भिन्नप्रस्थानवेदमूलत्वसम्भावनया सम्भवति प्रामाण्ये नाप्रामाण्यकल्पना युक्तेति पूर्वपक्षं प्रतिक्षेप्तुं सूत्रत्रयम् । तत्राद्यसूत्रस्यार्थः बाह्यस्मृतिग्रन्थजातं वेदविरोधादनपेक्ष्यं प्रमाणतयेति । वेदविरोधश्च ग्रन्थस्य ग्रन्थकर्तॄणां ग्रन्थगृहीतॄणां ग्रन्थार्थाचरितॄणां वास्तु । सर्वस्याप्यप्रामाण्यापादकत्वात् 'असति ह्यनुमानम्' इत्युक्तार्थमेव । द्वितीयसूत्रमपि वार्तिककारेणैवं व्याख्यातम्—

'शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।
हेतुजालविनिर्मुक्तां न कदाचन कुर्वते ॥
न[3] चैतैर्वेदमूलत्वमुच्यते गौतमादिवत् ।
हेतवश्चाभिधीयन्ते ये धर्मा दूरतः स्थिताः ॥'

इति ।

१. 'तेनात्र' मुद्रितवार्तिकपाठः ।　　२. 'तावत्तयोः' मुद्रितवार्तिकपाठः ।
३. 'न च तैः' मुद्रितवार्तिकपाठः ।

अथ चतुर्थं शिष्टाकोपाधिकरणम्। तत्र 'चान्तेन कर्तव्यं', 'दक्षिणाचारेण कर्तव्यं', 'यज्ञोपवीतिना कर्तव्य'मित्यादिक्रत्वर्थाङ्गस्मरणान्युदाहृत्य किमेतद्विहितं कर्म श्रुतिविरुद्धत्वान्न कर्तव्यमुताविरुद्धत्वात् कर्तव्यमिति सन्दिह्य सिद्धान्तेनोपक्रमितुमाद्यं सूत्रम्—

## शिष्टाकोपेऽविरुद्धमिति चेत् (१-३-५)

इति।

चतुष्पदम्। तस्यार्थः—इति चेत्सन्देहं भवान् पश्यति तर्ह्यविरुद्धमेवंजातीयकमिति[1] ब्रूमः। ततश्च कर्तव्यम्। कुत इत्याह—शिष्टाकोप इति। निमित्तसप्तमीयम्। शिष्टाकोपादित्यर्थः। न हि श्रुतिशिष्टानां क्रमादीनां स्मार्तैराचमनादिपदार्थैः कोपोऽन्यथात्वमनुष्ठीयमानैरस्ति। तस्मादविरुद्धतेति॥

अथ द्वितीयं पूर्वपक्षसूत्रम्—

## न शास्त्रपरिमाणत्वात् (१-३-६)

इति।

द्विपदम्। तस्यार्थः—यदुक्तमविरुद्धमिति, तन्न। कुत इत्याह—शास्त्रपरिमाणत्वाद् इति। परिमीयतेऽनेनेति परिमाणं शास्त्रं, परिमाणं परिमापकं येषां पदार्थानां ते शास्त्रपरिमाणाः। शास्त्रेण परिमितत्वात् पदार्थानामित्यर्थः। शास्त्रसिद्धपरिमाणत्वादिति मध्यमपदलोपी वा समासः, व्यधिकरणबहुव्रीहिर्वा शास्त्रेण कृतं परिमाणं येषामस्तीति। परिमाणग्रहणमुपलक्षणार्थं कालक्रमयोरपि। शास्त्रेण क्रमकालपरिमाणानां नियतत्वादित्यर्थः। वेदं कृत्वा वेदिं कुर्यादिति क्रमः। कालः पूर्वाह्णादिः प्रधानाविप्रकर्षः प्रयोगप्राशुभावश्च इति त्रिविधः। परिमाणं

---

१. 'मेतज्जातीयक' ख.

पदार्थानामियत्ता। तदेतत्त्रयं क्षुतादिनिमित्ताचमनाद्यनुष्ठानेऽन्यथात्वं प्रतिपद्यते। तथा च विरोधोऽस्त्येवेति श्रुतिबलीयस्त्वात् स्मृतिबाधेनाचमनादेरननुष्ठानमापद्यते इति ॥

अथ तृतीयं सिद्धान्तस्थापनासूत्रम् —

## अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् (१–३–७)

इति।

पञ्चपदं भाष्यकारमते, वार्तिककारमते तु 'तेष्वदर्शनाद्विरोधस्ये'ति समासैरष्टपदम्। अपि वेति विरोधं व्यावर्तयति। दृष्टस्य कारणस्याग्रहणे सति प्रयुक्तानि शिष्टैरनुष्ठीयमानानि प्रतीयेरन्नाचमनादीनि कर्माणि। कारणाग्रहणं चाचमनादिस्मृतेः लोभादिमूलत्वस्यासम्भाव्यत्वात्। स्पष्टं हेतुमाह–'तेष्वदर्शनाद्विरोधस्ये'ति। तेषु क्रमकालपरिमाणेष्वाचमनाद्यनुष्ठाने विरोधस्यादर्शनात्। अथवा तेष्वाचमनादिषु क्रियमाणेषु क्रमकालपरिमाणानां विरोधस्यादर्शनात्, तेषां पदार्थधर्मत्वेन नैमित्तिकाचमनादिपदार्थप्राप्त्युत्तरकालभावित्वात्, तच्च पदार्थधर्मेभ्यः पदार्थानां बलीयस्त्वात्, क्रतुश्च वेदिकरणानन्तरं क्षुते सत्यनाचम्य वेदं कुर्वतो विगुणीभवेत्। अतः शुद्ध्यर्थं क्रियमाणमाचमनादि न विरुध्यत इति ॥

अत्र शिष्टाकोपाधिकरणे त्रीणि सूत्राणि ॥

अथैतत्सूत्रत्रयं वार्तिककारोऽन्यथा व्याख्यत्। पूर्वाधिकरणाक्षेपपरिहारत्वेन पूर्वसूत्रे व्याख्येये, तृतीयं तु स्वयमेवाधिकरणान्तरार्थमिति। तच्चैवम्–यत्तर्हि शाक्यादिग्रन्थेषु वेदविहितं न बाधते शिष्टान् वा वेदविदो न कोपयति सत्यवचनाहिंसादमदानदयादि तत् बुद्धभाषितमविरुद्धं प्रमाणमिति चेदित्याक्षेपः। तत्परिहारः–'न शास्त्रपरिमा-

---

१. 'विरुध्येतेति'. ख. ग.

णत्वादि'ति। नैतदेवम्। परिमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि शास्त्राणि। न च तेषां मध्ये बौद्धादिग्रन्थाः स्मृताः। तस्मात्तदुपदर्शितमहिंसाद्यपि श्वदृतिप्रक्षिप्तक्षीरवदग्राह्यमेवेति। एवं च विरोधाधिकरणं चतुःसूत्रं भवति॥

अथ पञ्चममाचाराधिकरणम्। तत्र सदाचारानुदाहृत्य प्रमाणमप्रमाणं वेति सन्दिह्य निर्निबन्धनत्वाद्व्यतिक्रमसाहससङ्कराच्चाप्रमाणमिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुमपिवेत्यष्टपदं सूत्रम्। अपिवेत्यप्रामाण्यं व्यावर्तयति। दृष्टस्य कारणस्य शरीरस्थितिसुखादेरग्रहणे सति शिष्टैः प्रयुक्तानि कर्माणि धर्मत्वेन प्रतीयेरन्, तेषु वेदविरोधस्यादर्शनात्। व्यतिक्रमसाहसानां तु रागद्वेषादिकारणग्रहणेन तेषामपि धर्मबुद्ध्यानुष्ठीयमानत्वाभावाच्चाप्रामाण्यमनुमतमेव इत्ययमपि नोपालम्भः[1]। निर्निबन्धनत्वमपि 'तद्विदां च स्मृतिशीले', 'आचाराश्चैव साधूना'मित्यादिनिबन्धनस्य विद्यमानत्वान्नाप्रामाण्यमावहतीति॥

अत्राचाराधिकरण एकं सूत्रम्।

अथ षष्ठं यववराहाधिकरणम्। तत्राचारप्रसङ्गाच्छब्दप्रयोगात्मकाचारविप्रतिपत्तौ बलाबलं चिन्त्यते। तच्च भाष्यकारेण 'यवमयश्चरुः, वाराही उपानहौ वैतसे कटे प्राजापत्यान्निर्वपेदि'ति वाक्यगतान् यववराहवेतसशब्दानार्यप्रसिद्ध्या दीर्घशूकसूकरवञ्जुलविषयान्, म्लेच्छप्रसिद्ध्या प्रियङ्गुवायसजम्बूविषयानुदाहृत्य तुल्यातुल्यबलत्वे विचार्य वाक्यशेषान्निर्णयः सिद्धान्ते सिद्ध्यतीत्येवमभिधाय कृतम्। वार्तिककारस्तु तस्य 'सन्दिग्धे तु वाक्यशेषा'दित्यनेन गतार्थत्वादयुक्तं मत्वा पील्वादिशब्दमार्यप्रसिद्ध्या वृक्षविशेषविषयं म्लेच्छप्रसिद्ध्या हस्त्यादिविषयमुदाहृत्य तुल्यातुल्यबलत्वे विचार्यार्यप्रसिद्धिर्बलीयस्त्वं सिद्धान्तितवान्। तत्रोभयत्रापि पूर्वपक्षसूत्रम् —

---

१. 'लम्भान्निर्नि' क.

## तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् (१-३-८)

इति ।

षट्पदम् । तस्यार्थः—तेषु पदार्थेषु शिष्टम्लेच्छप्रसिद्ध्योः परिग्रहे कस्यचिद्विरोधस्यादर्शनात् समा समबलैव स्यात् विप्रतिपत्तिर्विरुद्धप्रतिपत्तिः न त्वेका प्रबला अन्या दुर्बलेति विषमा, ततश्च विकल्पो न्याय्य इति ॥

अथ द्वितीयं सिद्धान्तसूत्रम्—

## शास्त्रस्था वा तन्निमित्तत्वात् (१-३-९)

इति ।

त्रिपदम् । वाशब्दः समबलत्वं व्यावर्तयति । शास्त्रस्था शास्त्रानुगुणार्थप्रतिपत्तिः बलीयसी ग्राह्या, प्रमाणमिति वा शेषः । कुत इत्याह—तन्निमित्तत्वादिति । आर्यपरिग्रहव्यतिरेकेण नित्याच्छास्त्रादप्यस्याः प्रतिपत्तेरुपजायमानत्वादित्यर्थः । तच्च वाक्यशेषादौ विद्यमानत्वादिति । अथवा शास्त्रस्थाः—श्रौतस्मार्तकर्माभियुक्ताः पुरुषाः प्रमाणमिति सम्बन्धः । ते यमाहुः स एवार्थो ग्राह्य इत्युक्तं भवति । तन्निमित्तत्वादित्यस्य च तदानीमविप्लुतशास्त्रार्थानुष्ठाननिमित्तत्वात्तेषामित्यर्थो द्रष्टव्य इति ।

एवं भाष्यानुसारेणाधिकरणं व्याख्याय, स्वमतेन द्वेधा वार्तिककारेण व्याख्यातम् । तत्राद्यं तावद्व्याख्यानमेवम्—

'स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद् द्वयोरपि' ॥ इति ।

तत्रायं सूत्रार्थः-विरोधशब्देन साहचर्याद्वैषम्यं लक्ष्यते । तेषु स्मृत्याचारेषु विरुद्धेषु श्रुतिस्मृत्योरिव स्मृतेः श्रुत्यनुमानान्तरितप्रामाण्याया

---

१. 'भादर्शनात्' क. २. 'कर्मस्वभियुक्ताः' ख, ग.

आचारस्य विरोधस्य वैषम्यस्य विशेषस्येति यावत्, अदर्शनात्समा विप्रतिपत्तिः स्यादिति। उत्तरसूत्रस्याप्ययमर्थः—वाशब्दः साम्यं व्यावर्तयति। शास्त्रस्थशब्देन स्मृतिरुच्यते। सा हि सोपनिबन्धनत्वाच्छास्त्रे शब्दे स्थिता। आचारस्तु निर्निबन्धनत्वादशास्त्रस्थः। अतः स्मृतिः प्रमाणमाचारादित्युक्तं भवति। तत्र हेतुः तन्निमित्तत्वादिति, शास्त्रनिमित्तत्वादित्यर्थः। स्मृतेर्हि प्रामाण्यनिमित्तत्वेन शास्त्रं श्रुतिरेवानुमातव्या। आचारस्य तु द्वे अपि श्रुतिस्मृती इति। तयोर्विरोधे स्मृतेरेव प्रामाण्यमिति॥

अथ द्वितीयं वार्तिककारव्याख्यानम्। यत्र लोके वाक्यशेषे चार्थभेदो गम्यते—यथा 'त्रिवृद् बहिष्पवमान'मित्यत्र वाक्यशेषे स्तोत्रीयनवकमर्थो गम्यते। त्रिवृच्छब्दस्य लोके तु त्रैगुण्यम्। 'आदित्यः प्रायणीयश्चरु'रित्यत्र चरुशब्दस्य वाक्यशेष ओदनोऽर्थः। लोके तु स्थाली। 'आश्ववालः प्रस्तर' इत्यत्राश्ववालशब्दस्य वाक्यशेषे काशोऽर्थः लोकेऽश्वस्य लाङ्गूलम्। तत्र किं लोकवाक्यशेषस्थयोस्तुल्यबलत्वमुत वाक्यशेषस्था प्रतिपत्तिर्बलीयसीति सन्दिह्याद्यसूत्रेण पूर्वपक्षं परिगृह्योत्तरसूत्रेण सिद्धान्त उक्तः। तयोराद्यस्यायमर्थः—तेषु लौकिकेषु पदार्थेषु पूर्वभावित्वेन विरोधस्यादर्शनादर्थात्स्तुतिपरत्वेन संज्ञासंज्ञिसम्बन्धकरणव्यापाररहितत्वेन च चरमभाविवाक्यशेषावगतपदार्थाश्रयणे विरोधदर्शनाच्च लौकिक्येव प्रसिद्धिर्बलीयसी। तथापि समापि तावद्भवत्विति। द्वितीयस्य तु—

> 'शास्त्रस्था प्रतिपत्तिर्या सैव तु ज्यायसी भवेत्।
> धर्मस्य तन्निमित्तत्वात्ससाधनफलात्मनः॥'

इति स्वयमुक्ता योजना द्रष्टव्या। तस्मात्स्तोत्रीयनवकानास्त्रावितान्तरुष्मपक्वौदनकाशवचनास्त्रिवृच्चर्वाश्ववालशब्दा इति॥

अत्र यववराहाधिकरणे द्वे सूत्रे॥

---

१. 'यावद्दर्शनात्' ख.

अथ सप्तमं पिकनेमाधिकरणम् ।

तत्र म्लेच्छप्रसिद्धीनामप्रामाण्ये स्थिते सति ।
किमेष एव सर्वत्रोत्सर्गो नो वेति चिन्त्यते ॥

तत्र पिकनेमसततामरसशब्दानुदाहृत्य किमेषामार्यप्रसिद्ध्यभावात् म्लेच्छप्रसिद्धकोकिलार्धदारुपात्रपद्मार्थता ग्रहीतव्या उत निगमनिरुक्तव्याकरणवशादर्थः कल्पनीय इति सन्दिह्य, शिष्टाचारप्रामाण्योक्तेः म्लेच्छानां चाशिष्टत्वात् कल्पयितव्य[1] इति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम्—

**चोदितं तु प्रतीयेताविरोधात् प्रमाणेन (१–३–१०)**

इति ।

पञ्चपदम् । तुशब्दोऽर्थकल्पनां व्यावर्तयति । चोदितमभिहितमशिष्टैरपि शिष्टानवगतमर्थतत्त्वं प्रतीयेत, न चेत्प्रमाणेन वेदेनाविरुद्धम् । विरोधे तु न ग्राह्यमेव । न चेह विरोधोऽस्तीत्यर्थः । अथवा यत्पदं म्लेच्छैरर्थविशेषे चोदितं प्रयुक्तं तच्छिष्टैरनवगततदर्थसम्बन्धमपि प्रतीयेत तथैवाश्रीयेत । तस्मिन्नर्थे प्रमाणमिति यावत् । तत्र हेतुरविरोधात् प्रमाणेनेति । यद्यपि न शास्त्रमूलाय म्लेच्छप्रसिद्धिस्तथापि शास्त्रस्थप्रसिद्धिप्रमाणेन वेदेन विरोधाभावाद्वेदतदङ्गादिप्रयुक्तपिकादिपदार्थाकाङ्क्षायां तत्सिद्धकोकिलाद्यर्थपरिग्रहसम्भवे नार्थान्तरकल्पना युक्ता इत्यर्थः । यद्वा तत्प्रमाणेन वेदेन चोदितमिति प्रतीयेत तस्यार्यप्रसिद्ध्या सहाविरुद्धत्वादिति ।

अत्र पिकनमाधिकरण एकं सूत्रम् ॥

अथाष्टमं कल्पसूत्राधिकरणम् । अनेनोत्सर्गतः स्मृत्यधिकरणोक्तयोः स्मृत्याचारप्रामाण्ययोराचारप्रामाण्यस्यार्यप्रसिद्धिविरोधे म्लेच्छप्रसिद्धिरूप आचारेऽपवादे तदविरोधे चोत्सर्गतः स्थितावभिहितायां

---

1. 'कल्पयितव्य' ग.

स्मृतीनामपि वेदव्यतिरिक्तविद्यास्थानरूपाणां औत्सर्गिकं[1] श्रुतिमूलत्वेन प्रामाण्यं स्मृत्यधिकरणसिद्धमेवाक्षिप्य समाधीयते। अथवा नैषा प्रामाण्याप्रामाण्यचिन्ता, किन्तु किं स्वतन्त्राणामेव वेदवत्प्रामाण्यमुत परतन्त्राणामिति। यद्वा नैवेह स्मृतय उदाहरणम्, किं तु अङ्गान्येव। तेषां च 'मन्त्रब्राह्मणयोर्वेदनामधेयम्, षडङ्गमेके' इति स्मरणात् किं वेदत्वनित्यत्वे भवत उत मौशकादिसमाख्यानान्नेति[2] विचार्यते। अपि वा शाक्यादिस्मृतीनां श्रुतिमूलत्वेन प्रामाण्ये तदसम्भवान्निरस्ते सम्प्रति श्रुतिवत्स्वातन्त्र्येण प्रामाण्यमाशङ्क्य निराक्रियते। तदिह चत्वारो विचारा न्यायसाम्यात्सहक्रियन्ते। तत्र पूर्वपक्षसूत्रम् —

## प्रयोगशास्त्रमिति चेत् (१-३-११)

इति।

त्रिपदम्। तस्यार्थः—इति चेत्सन्देहं भवान् पश्यति तर्ह्येवं ब्रूमः—यस्मादेवंजातीयकं ग्रन्थजातं प्रयोगस्य धर्मानुष्ठानस्य शास्त्रं शासकं तस्मात्स्वयमेव वेदवत्प्रमाणमिति। अथवा प्रयोगशास्त्रं वेद एवेति ब्रूम इत्यर्थः। पौरुषेयवाक्यस्यातीन्द्रियधर्मानुष्ठापकत्वाभावेन प्रयोगशास्त्रत्वाभावात्। ततश्च नित्यानि कल्पसूत्राणि सर्वा वा स्मृतयोऽङ्गानि वा षट् शाक्यादिस्मृतयो वा वेदवत्स्युरित्युक्तं भवति॥

अथ द्वितीयम् सिद्धान्तसूत्रम् —

## नासन्नियमात् (१-३-१२)

इति।

द्विपदम्। तस्यार्थः—न वेदव्यतिरिक्तविद्यास्थानानां कल्पसूत्राणामङ्गानां शाक्यागमानां वा वेदत्वं वेदवत्प्रामाण्यं वा युक्तं वक्तुम्। कारणमाह—असन्नियमादिति। सच्छब्दः संशब्दो वायं सम्यगर्थः। नियमशब्दस्तु

---

१. 'कश्रुति' क. २. 'माशङ्कादि' ख, ग.

निबन्धनार्थः । भावप्रधानश्च निर्देशः । असमीचीननिबन्धनत्वादेतेषां सर्वेषामित्यर्थः । असमीचीनत्वं[1] च निबन्धनस्य वेदवत्स्वराद्यभावात् । शाक्यागमविषये त्वसद्भिरसाधुभिरपभ्रंशप्रायैः शब्दैर्निबन्धनादिति वा, व्याकरणोक्तशब्दनियमाभावादिति वा असतां क्षणभङ्गशून्यानात्मत्वीदानामसद्धेतुभिर्वा प्रतिपादननियमादिति वा, हेत्वर्थविकल्पाः शक्यवचना इति ॥

अथ तृतीयं सिद्धान्ताभ्युच्चयसूत्रम् —

## अवाक्यशेषात्[2] (१–३–१३)

इति ।

एकपदम् । उत्तरसूत्रगतश्चशब्दोऽत्राप्यपकृष्टव्यः । क्वचित् तु चशब्दोऽपि पठ्यते । भावप्रधानश्च निर्देशः अवाक्यशेषत्वाच्चेति । शेषशब्दश्चायं विधानार्थाच्छिषेः शिष्यते विधीयतेऽनेनेत्यस्मिन्नर्थे घञ्युत्पत्तेर्विधायकवचनो द्रष्टव्यः । वाक्यं विधायकं यत्र न भवति 'ऋत्विजो वृणीते' 'वृता यजन्ती'त्यादिवर्तमानापदेशात् तत् कल्पसूत्राद्यवाक्यशेषं ततश्च कल्पसूत्रादीनामविधायकशब्दवत्त्वाच्च न प्रयोगशास्त्रत्वमित्युक्तं भवति । स्यादेतत्, 'समिधो यजती'त्यादेर्वर्त्तमानापदेशस्यापि विधित्वाङ्गीकरणान्न तन्मात्रेण विध्यभावः शक्योऽवगन्तुमिति । उच्यते । एतदेव तर्हि सूत्रमस्यापि चोद्यस्योत्तरत्वेनान्यथा व्याख्यायते । स्तावकवाक्यशेषान्वयानुपपत्त्यैव हि तत्र विधिपरत्वं कल्प्यते । न च कल्पनादिष्वसावस्तीति ॥

अथ चतुर्थमपि सिद्धान्ताभ्युच्चयसूत्रम् —

## सर्वत्र च प्रयोगात् सन्निधानशास्त्राच्च (१–३–१४)

इति ।

---

१. 'असमीचीनत्वे निबन्धनं तस्य' ग. २. 'शेषाच्च'—इति मुद्रित भाष्यपाठः ।

पञ्चपदम् । तस्य शाखान्तरवत् संवादाद्वेदत्वमित्यपि नास्ति, क्वचिद्वेदविसंवादस्यापि दर्शनादिति तात्पर्यार्थः । अवयवयोस्त्वाद्यस्य सर्वत्र च प्रयोगादित्यस्य सर्वत्र शुक्लपक्षे कृष्णपक्षे च सर्वासु तिथिषु क्रमेणामावास्यापौर्णमास्याख्ययोः कर्मणोः कल्पसूत्रकारैः प्रयोगात्, प्रयोगस्योक्तत्वादित्यर्थः । तच्च आ पौर्णमास्या अमावास्याकालो नात्येति, आ अमावास्यायाः पौर्णमासीकालो नात्येतीत्येवं रूपम् । द्वितीयस्य तु सन्निधानशास्त्राच्चेत्यस्यावयवस्यायमर्थः—सन्निधानशब्दः कर्मव्युत्पन्नः सन्निहितवाची प्रत्यक्षत्वं लक्षयति । ततश्च कल्पकारादिवचनविरुद्धस्य प्रत्यक्षस्य शास्त्रस्य विद्यमानत्वाच्चेत्यर्थः सम्पद्यते । तच्च शास्त्रम् ‘अमावास्यायाममावास्यया यजेत, पौर्णमास्यां पौर्णमास्या यजेते’ति । अथवा सन्निधानं सन्निधिः, स च सन्धिरेव, नेः समुपक्षीणत्वात् । तेन पर्वसन्धौ कर्मविधायकाच्छास्त्राच्चेत्युक्तं भवति । अतश्च वेदविसंवादान्न संवादाद्वेदत्वं सिध्यति । तस्माद्वेदव्यतिरिक्तविद्यास्थानानां कल्पसूत्राणामन्येषां चाङ्गानां श्रुतिमूलत्वेनैव प्रामाण्यमभ्युपगन्तव्यं, न स्वतः । शाक्यादिस्मृतेस्तु सर्वथैवाप्रामाण्यमित्येव निर्णयो युक्त इति ॥

अत्र कल्पसूत्राधिकरणे चत्वारि सूत्राणि ॥

अथ नवमं होलाकाधिकरणम् । तत्र स्मृत्याचारयोः श्रुतिमूलत्वेन प्रामाण्ये स्थापिते, केषांचित्स्मृत्याचाराणां व्यवस्थादर्शनात् किं तन्मूलभूतापि श्रुतिर्व्यवस्थितविषया कल्पयितव्या, उताव्यवस्थितविषयेति सन्दिह्य, व्यवस्थितविषयेति पूर्वपक्षं वक्तुमाद्यं सूत्रम् —

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् (१-३-१५)**

इति ।

---

१. ‘शास्त्रान्तर’ ख. २. ‘त्र च शु’ ग. ३. ‘मूलकत्वेनैव’ ख. ४. ‘पि’ ग.

चतुष्पदम् । तस्यार्थः—अनुमीयतेऽनेन श्रुतिरित्यनुमानं लिङ्गं स्मृत्याचारात्मकमनुमापकं तस्य व्यवस्थानात् दिग्देशादिव्यवस्थितधर्मिनिष्ठत्वात्, तेनानुमीयमानमपि प्रमाणं श्रुतिः तत्सयुक्तं धर्मिविशेषनिष्ठमेव स्यात् नाव्यवस्थितम्, लिङ्गिव्यवस्थाव्यवस्थयोर्लिङ्गव्यवस्थाव्यवस्थाविनाभावात् । अत एव च यत्र धूमस्तत्राग्निरनुमीयते नान्यत्र । तस्माद् व्यवस्थितविषया होलाकादयो गृह्याणि मानवातिरिक्ताः स्मृतयश्चेति सिद्धमिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

**अपि वा सर्वधर्मः[1] स्यात्तन्न्यायत्वाद्विधानस्य (१–३–१६)**

इति ।

षट्पदम् । अपिवेति व्यवस्थितधर्मत्वं व्यावर्तयति । होलाकादिः सर्वधर्मः स्यान्न व्यवस्थितधर्मः । कुत इत्याह—तन्न्यायत्वाद्विधानस्येति । विधीयतेऽनुष्ठाप्यतेऽशत्रयविशिष्टा भावना अनेनेति विधिवाक्यं विधानशब्दार्थः । तस्य सर्वधर्मत्वस्य न्यायो यस्मिन् विधाने तत् तन्न्यायमिति व्यधिकरणबहुव्रीहिः । वाक्यस्य स्मृत्याचारकल्पस्य व्यवस्थापकविशेषणासम्भवेन सर्वधर्मत्वसाधकन्यायोपेतत्वादित्यर्थः ॥

अथ तृतीयं पदोत्तरं सूत्रम् —

**दर्शनाद्विनियोगः स्यात् (१–३–१७)**

इति ।

त्रिपदम् । इमानि च तानि पदानि । ननु कस्माच्छिखाकल्पवदेतेषां व्यवस्था नाश्रीयते—केचित्त्रिशिखाः, केचित्पञ्चशिखा इति । अत उत्तरं सूत्रम् । तत्र गोत्रादेरेकैकस्य व्यवस्थापकधर्मस्य दर्शनाद् गोत्रादिवाच्युपपदोपेतश्रुत्यनुमानोपपत्तेः कर्तृविशेषविनियोगः त्रिशिखत्वादेः

---

१. 'धर्म' ग.

स्यात्। अत्र तु कर्तृविशेषासम्भवेन[1] तद्वाच्युपपदानुमानस्याप्यसम्भवान्न कर्तृविशेषविनियोगः सिध्यति। तस्मात्सर्वधर्मत्वमेव युक्तमिति ॥

अथ चतुर्थमपि पदोत्तरं सूत्रम् —

## लिङ्गा[2]भावाच्च नित्यस्य (१-३-१८)

इति।

त्रिपदम्। ननु शुक्लत्वलोहिताक्षत्वश्यामत्वादीनां कर्तृविशेषणानां व्यवस्थितानां सम्भवात्तद्वाच्युपपदयुक्तया श्रुत्या विशेषविनियोगः कस्मान्न स्यादिति पदानि। तत्रोत्तरं—नित्यस्य नियतस्य व्यवस्थितस्य कर्तुर्यल्लिङ्गं नियतं[3]व्यवस्थितं तस्याभावाच्च 'सर्वधर्मः स्या'दिति चशब्देन पूर्वसूत्रादनुषज्यते, वर्णसंस्थानादेश्चोक्तस्यानेवंविधत्वान्न व्यवस्थितालिङ्गत्वमिति ॥

अथ पञ्चममपि पदोत्तरं सूत्रम् —

## आख्या हि देशसंयोगात् (१-३-१९)

इति।

त्रिपदम्। ननु प्राच्यादिसमाख्[4]यया कर्तृनियमोऽस्तु, अतश्च तत्समाख्[5]याविशिष्टमूलश्रुत्यनुमानाद्व्यवस्थितधर्मत्वसिद्धिरिति पदानि। तत उत्तरं—न समाख्यया कर्तृनियमः सम्भवति। यतः समाख्या देशसंयोगादेव प्राच्यादिका प्रवृत्ता, न जात्यादिनिमित्ता। देशश्चानवस्थितदिगुपलक्षितत्वादनवस्थितः। अतः क[6]थं तन्निमित्ता समाख्या नियामिका

---

१. 'नात' ग. २. 'ङ्गभा' ग. ३. 'तं व्यव' ग, ४. 'ख्यायाः' क,ख. ५. 'ख्यापिवि' ग. ६. 'कथं निमित्त' ख.

भवति। व्यभिचरति चाचारो देशसम्बन्धम्, निर्गतेषु दर्शनात्, आगतेषु अदर्शनाच्च। तस्मान्न समाख्याधीना कर्तृव्यवस्थेति ॥

अथ षष्ठं परिचोदनासूत्रम् —

**न स्याद्देशान्तरेष्विति चेत् (१–३–२०)**

इति।

पञ्चपदम्। तस्यार्थः—इति चेत्पश्यसि देशसंयोगनिमित्ता समाख्येति तर्हि देशान्तरेषु गतस्य न स्याद्, दृश्यते च। तस्मान्न देशसंयोगनिमित्ता, किन्तु प्राच्यत्वादिजातिनिमित्ता निर्निमित्ता वा इति भावः ॥

अथ सप्तमं परिहारसूत्रम् —

**स्याद्योगाख्या हि माथुरवत् (१–३–२१)**

इति।

चतुष्पदम्। हिशब्दोऽवधारणे। योगः सम्बन्धः। योगैराख्या योगाख्या। बहवो हि देशयोगप्रकाराः-सोऽस्य निवासः, तत्र भवः, तत्र जातः, तत आगत इत्यादयः। एषामेकं निमित्तीकृत्य प्राच्यादिसमाख्याः प्रवर्तेरन्। अतो यौगिक्येव समाख्या। नचैतत्समाख्यायुक्तैः सर्वैरप्येतत्कर्मानुष्ठीयते। तद्गतामपि केषांचिदनुष्ठानदर्शनात्। चिरनिर्गतपुत्रपौत्रादीनां चासत्यामपि समाख्यायामनुष्ठानदर्शनाच्च। तस्मान्न समाख्यया नियमः सिध्यतीति। अस्याः प्राच्यादिसमाख्याया योगाख्यात्वे दृष्टान्तमाह—माथुरवदिति। यथा माथुर इति समाख्या न जात्यादिनिमित्ता, किं तु मथुरासम्बन्धमात्रप्रवृत्तत्वात्तद्योगनिमित्ता, एवमेषामपीति ॥

अथाष्टममपि परिचोदनासूत्रम् —

---

१. 'न्तरग' ग. २. 'दनुष्ठान' ख, ग. ३. 'यामनुष्ठानादर्शनाच्च' ख. ४. 'माख्यायां', ख.

## कर्मधर्मो वा प्रवणवत् (१-३-२२)

इति ।

त्रिपदम् । वाशब्दः कर्तृधर्मत्वं व्यावर्तयति । कर्मधर्म एवायं प्राग्देशादिरस्तु, न कर्तृधर्मः । यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेते'ति प्राचीनप्रवणत्वम् । एतदुक्तं भवति । कर्तृविशेषणत्वेन श्यामत्वादीनां प्राच्यादिसमाख्यायाश्चासम्भवेऽपि कर्माङ्गभूतदेशविशेषणत्वेन प्राक्कृष्णमृत्तिकाप्रायत्वादीनां सम्भवात्तद्युक्ता श्रुतिरनुमेया भवति । एवमपि व्यवस्थितधर्मत्वसिद्धिरिति ॥

अथ नवमं परिहारसूत्रम् —

## तुल्यं तु कर्तृधर्मेण (१—३—२३)

इति ।

त्रिपदम्[3] । तुशब्द इममपि पक्षं व्यावर्तयति । यथा श्यामत्वादिः कर्तृधर्मो न व्यवस्थितः एवं देशधर्मोऽपि कृष्णमृत्तिकाप्रायत्वादिरव्यवस्थित एव । अतः सोऽपि न होलाकादिव्यवस्थाकारणम् । प्राचीनप्रवणत्वादि तु प्रत्यक्षश्रुत्या वैश्वदेवादेर्नियतमिति वैषम्यम् । तेन कर्तृविशेषणस्य कर्मविशेषणस्य वा व्यवस्थितस्य कस्यचिदभावान्न तद्वाच्युपपदयुक्तयानुमीयमानया श्रुत्या होलाकादीनां व्यवस्थितधर्मत्वसिद्धिरिति भावः ॥

अत्र होलाकाधिकरणे नव सूत्राणि ॥

अथ दशमं व्याकरणाधिकरणम् । तत्र स्मृत्याचारयोः प्रामाण्ये सिद्धे तदन्तर्गताया व्याकरणस्मृतेरपि सामान्यतः स्मृत्यधिकरणसिद्धमपि श्रुतिमूलतया प्रामाण्यं होलाकाधिकरणप्रसङ्गेनैवानन्तसाध्वसाधु-

---

१. 'कात्र श्रु' ग. २. 'भवतु' ख, ग. ३. 'म् । 'तस्यार्थः तु' ग.

निष्ठैकगुणजात्यादिवाचकोपपदयुक्तश्रुत्यनुमानसम्भवेन निर्मूलतयाक्षिप्य समाधीयत इति सङ्गतिः। उदाहरणं चैकस्मिन्नर्थे प्रयुज्यमाना व्याकरणेनानुगता अननुगताश्च शब्दाः सर्व एव । संशयस्तु किं सर्वे प्रयोक्तव्याः साधवश्च उत व्याकरणानुगता एव तथाविधाः इतरेऽपभ्रंशा इति ॥

ततश्च व्याकरणप्रामाण्याप्रामाण्ये एवात्र तदर्थं चिन्तयितव्ये। यदि तत्प्रमाणं ततस्तदनुगताः साधवः, प्रयोक्तव्याश्च। अथाप्रमाणं ततः सर्वे। तत्राप्रामाण्यं पूर्वपक्षयितुमाद्यं सूत्रम् —

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न**

**व्यवस्था स्यात् (१–३–२४)**

इति।

पञ्चपदम् । तस्यार्थः—शब्देषु गोगाव्यादिषु व्याकरणानुगतो गवादिरेवानादित्वेन साधुः प्रयोक्तव्यश्च, इतरेऽपभ्रंशत्वादसाधवोऽप्रयोक्तव्याश्च इति या सिद्धान्त्यभिमता व्यवस्था सा न स्यान्न सम्भवति। कुत इत्याह—प्रयोगोत्पत्त्यशास्त्रत्वादिति। प्रयोगोत्पत्तेर्गवादिशब्दोच्चारणनियमोत्पत्तेरशास्त्रत्वात् शास्त्ररहितत्वात् शास्त्रविषयत्वाभावादिति यावत्। न च व्याकरणविषयतया शास्त्रविषयत्वमाशङ्कनीयम् । व्याकरणस्य निर्मूलतया प्रामाण्यासम्भवेन साधव एव प्रयोक्तव्या इति प्रयोगनियमस्य, गवादय एव साधव इति साधुरूपनियमस्य चाशास्त्रीयत्वादिति भावः । अथवा व्याकरणस्य निर्मूलत्वेन शब्दप्रयोगोत्पत्तिं प्रति शास्त्रत्वाभावाच्छब्देषूक्ता व्यवस्था न स्यादित्यर्थः ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

---

१. 'याभावादिति' ख.

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् (१-३-२५)

इति ।

चतुष्पदम् । अनेन 'शब्देषु न व्यवस्था स्या'दित्यत्राभिप्रेताया असाधुप्रयोगार्थप्रतीत्यन्यथानुपपत्तिप्रसूताया अर्थापत्तेरन्यथोपपत्त्या बाधो वर्ण्यते । असाधूनां प्रयोगस्यार्थप्रतीतेश्चान्यथोपपत्तिरस्ति, यतोऽपराधस्य भागित्वं शब्दे विद्यते । अपराधो हि शब्दे भागी भजनवान् सम्भावित एवेत्यर्थः । कथमित्याह—प्रयत्ननिष्पत्तेरिति । प्रयत्नेन हि शब्दो निष्पद्यतेऽभिव्यज्यते । अतस्तदन्यथात्वे शब्दोऽपभ्रंश्यते अभिव्यञ्जकदोषादभिव्यङ्ग्यदोषस्य दीपादौ दृष्टत्वात् । तस्मादपभ्रंशभूता असाधवो गाव्यादयः शब्दाः । अथवा शब्दे प्रयत्नेन निष्पत्तेर्दर्शनात् प्रयतमानस्यापराधभागित्वमिति व्याख्या । यद्वा शब्दविषयायाः प्रयत्ननिष्पत्तेरपराधस्य भागित्वं सुनिपुणानाम[1]विकलकरणानामपि दृश्यते, प्रयत्ननिष्पत्तिगतश्चापराधस्तदभिव्यङ्ग्ये शब्देऽपि प्रसजत्येव इत्यपराधजा गाव्यादय इति । अपि वा अप्रयत्ननिष्पत्तेरिति च्छेदः, यतोऽप्रयत्ननिष्पत्तिरपि शब्दे सम्भाव्यते ततस्तत्रापराधजरूपान्तरापत्तिप्रसक्त इत्यर्थः । एवमन्यथोपपत्तेः प्रयोगार्थप्रत्यययोर्नानादिवाचकत्वकल्पना युक्ता गाव्यादीनामिति भावः ।

तदेवमनेन सूत्रेणापराधप्रवृत्तत्वसम्भावनया सर्वेषां साधुत्वकल्पना निराकृता । अथैक एव साधुरितरेऽपभ्रंशा इत्यत्रैवोपपत्त्यन्तरं वक्तुं तृतीयं सूत्रम् —

अन्यायश्चानेकशब्दत्वम् (१-३-२६)

इति ।

---

१. 'मपि विकल' ख.

त्रिपदम् । इतश्च न सर्वे साधव इति चशब्दार्थः, यत एकस्यार्थस्यानेकशब्दत्वमन्यायः न्यायो न भवति, अयुक्तमित्यर्थः । न्यायन्यायिनोरभेदोपचारादेवं[1] निर्देशः । अर्थप्रतीतिस्तु गाव्यादिशब्देभ्यः सादृश्याद्गवादिशब्दस्मृतेर्घटते । तेन यतोऽर्थप्रत्ययः स एवैकोऽनादिर्न तु सर्वेषामविच्छिन्नपारम्पर्यत्वम् । हस्तः कर इत्यादिषु तु सादृश्याभावेन गत्यन्तराभावादनादित्वकल्पना न दोषाय स्यादिति ।

अथ मा भूत्सर्वेऽनादयस्तथाप्ययं साधुरितरेऽसाधव इति तत्त्वं न शक्यते ज्ञातुं, नियामकाभावादिति शङ्कां निवर्तयितुं चतुर्थं सूत्रम्—

**तत्र तत्त्वमभियोगविशेषात् स्यात् (१–३–२७)**

इति ।

चतुष्पदम् । अभियोगो व्याकरणशास्त्राभ्यासः, तद्विशेषस्तल्लक्षितांल्लक्ष्याल्लक्ष्यान्तरसञ्चरणक्षमत्वम् । तदयमर्थः—तत्र साध्वसाधुशब्दसङ्करे तत्त्वं पारमार्थिकं रूपम्, तस्य साधोर्वा भाव उक्तादभियोगविशेषात्स्यात् ज्ञायेत, न त्वशक्यज्ञानमित्यर्थः । ततश्च व्याकरणाभ्यासानुगृहीतमयमेव साधुरितरेऽपशब्दा इति यत्प्रत्यक्षं तत्साधुस्वरूपनियमस्य मूलम् । प्रयोगनियमस्तु वेदमूल इत्येकस्या व्याकरणस्मृतेरेकदेशे प्रत्यक्षमूलत्वाद्वेदमूलत्वाच्च प्रामाण्यमविहतम्, अनादित्वाच्च प्रत्यक्षव्याकरणस्मृत्योः । परस्परमूलत्वेऽप्यन्धपरम्परान्यायः परिह्रियते । तस्मान्न कश्चिद्दोष इति ।

अथ गाव्यादिशब्दस्य शक्त्या विना कथमर्थप्रतिपादकतेति शङ्कां निराकर्तुं पञ्चमं सूत्रम्—

---

१. 'व' ग. २. 'षु सादृश्या' ख, ग. ३. 'ताल्लक्ष्यान्तर' क. ४. 'रूपम्' ग.

## तदशक्तिश्चानुरूपत्वात् (१-३-२८)

इति ॥

त्रिपदम् । चशब्दोऽवधारणार्थः । तेषां गाव्यादिशब्दानां अशक्तिरेवार्थं प्रतिपादयितुम्, यतः प्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्तीति स्थितमिति ॥

अथापभ्रंशानां प्राकृतशब्दस्मरणेनार्थ[1]प्रत्यायकत्वं दृष्टान्तेन दर्शयितुं षष्ठं सूत्रम् —

## एकदे[2]शाच्च विभक्तिव्यत्यये[3] प्रत्ययः स्याद् (१-३-२९)

इति ।

पञ्चपदम् । चशब्दोऽप्यर्थो भिन्नक्रमश्च । एवञ्च सत्यश्मकैरायात इति विभक्तिव्यत्ययेऽप्यश्मकेभ्य इत्यस्यैकदेशात्तच्छब्दे स्मृते ततस्तदर्थप्रत्ययो जायमानः स्यादुपपद्येत । तेन गाव्यादिशब्दस्मृतानां गवादिशब्दानामेव वाचकत्वात् तेषामेव शास्त्रादिमति साधुत्वं न गाव्यादीनामिति युक्ता शब्देषु व्यवस्था इति ॥

अत्र व्याकरणाधिकरणे षट् सूत्राणि ॥

अथैकादशं लोकवेदाधिकरणम् । तच्च व्याकरणाधिकरणेन व्याकरणानुगतानामेव गवादिशब्दानां वाचकत्वसाधुत्वयोर्निरूपितयोः प्रासङ्गिकस्य तेषामेव वाच्यनिरूपणस्याकृत्यधिकरणेन करिष्यमाणस्योपोद्घाततया लोकवेदयोः पदपदार्थानां भेदाभेदविचारार्थत्वेनावतीर्णम् । तत्र लौकिको वैदिक इति व्यपदेशस्य स्वरसत्त्वासत्त्व-

---

१. 'स्वदृष्टान्तेन' ख. २. 'देशत्वाच्च' मुद्रितभाष्यपाठः । ३. 'व्यत्यये स्यात्' मुद्रितभाष्यपाठः ।

शूद्रानध्यायवर्जनावर्जनादिधर्माणां च भेदात् पदानि तावद्भिन्नानि। पदभेदादुत्तानवहनादिदर्शनाच्चार्था अपि[1] भिन्ना एवेति पूर्वपक्षे प्राप्ते, सिद्धान्तं वक्तुं सूत्रम्—

**प्रयोगचोदनाभावादर्थैकत्वमविभागाद् (१-३-३०)**

इति।

त्रिपदम्। अत्रार्थपदं शब्दस्याप्युपलक्षणार्थम्। लोकवेदयोः शब्दार्थैकत्वं प्रत्येतव्यमिति। कारणमाह—प्रयोगचोदनाभावादिति। भेदे सत्यपूर्वत्वेन सर्ववैदिकपदानामनवगतसम्बन्धत्वेनाबोधकत्वात् क्रियाकारकसंसर्गात्मकः प्रयोगरूपोऽर्थो न प्रतीयेत। अतश्च प्रयोगचोदनाया अभाव एव स्यादिति। अथवा एकत्वे सत्युक्तरूपवैपरीत्येन प्रयोगचोदनाया भावात् सम्भवादिति योजना। अस्य हेतोः फलरूपत्वेनापरितोषाद्धेत्वन्तरमाह—अविभागादिति। अनेन प्रत्यक्षप्रत्यभिज्ञानं हेतुरुच्यते। लौकिकवैदिकशब्दार्थयोः स एवायमिति प्रत्यक्षप्रत्यभिज्ञारूपस्याविभागज्ञानस्य भावादिति। ततश्च व्यपदेशादिभिर्भेदानुमानमनेन प्रत्यक्षप्रत्यभिज्ञानेन बाध्यते। स्वरभेदस्तूच्चारणधर्म एव, न शब्दधर्मः। स च वेदत्वकारितः। एवं शूद्रानध्यायवर्जनमपि वाचनिकवदधर्मत्वान्न भेदमावहति। उत्तानवहनादिवचनं तु विध्यन्तरशेषत्वात् स्तुत्यर्थम्। तस्माल्लौकिकावेव शब्दार्थौ वैदिकावपीति सिद्धमिति॥

अत्र लोकवेदाधिकरण एकं सूत्रम्॥

अथ द्वादशमाकृत्यधिकरणम्। तत्र किमाकृतिः शब्दार्थ उत व्यक्तिः, अथाकृतिविशिष्टा व्यक्तिरुत व्यक्तिविशिष्टाकृतिरिति प्राधान्येन विचार्यते। अन्ये तु विकल्पसमुच्चयसमुदायसम्बन्धादिपक्षा व्यक्तितद्विशिष्टा-

---

१. 'वि' ग.

कृतिपक्षानिराकरणेनैव तुल्यन्यायतया निराकृता भवन्तीति न पृथङ्नि-राक्रियन्ते। तत्र पूर्वपक्षाभिधायकत्वेनैतदेव सूत्रमावृत्त्या योज्यते। आलम्भ-प्रोक्षणविशसनादीनां प्रयोगस्यानुष्ठानस्य याश्चोदनास्तासामाकृत्यर्थत्वे-ऽभावप्रसङ्गाद्व्यक्त्यर्थत्वे सम्भवाद्वा व्यक्तिः शब्दार्थ इति साध्योपस्कारः कर्तव्यः। अर्थैकत्वमित्यस्योक्तहेतुसाध्यत्वाभावात्। तस्य त्वेवं योजना—तर्हि यत्रैव प्रयोगानुपपत्तिस्तत्रैव व्यक्त्यर्थत्वमाश्रीयताम्, अन्यत्राकृत्य-र्थत्वमेवास्तु, अत आह—अर्थैकत्वमिति। न्याय्यमिति शेषः। एकस्य हि शब्दस्यैक एवार्थो न्याय्यः, नापेक्षावशेनाव्यवस्थितार्थकल्पना, अनेक-शक्तिकल्पनाप्रसङ्गादिति। कथं तर्ह्याकृतिप्रत्यय इति चेदत आह—अवि-भागादिति। आकृतिव्यक्त्योर्नित्यमविभागादविनाभावादभिहिता व्यक्तिः स्वसम्बन्धिनीमाकृतिमर्थाद्गमयिष्यतीति नाभिधेयत्वाभावे प्रत्ययाभाव-प्रसङ्ग इति ॥

अथ द्वितीयं पूर्वपक्षाभ्युच्चयसूत्रम् —

## अद्रव्यशब्दत्वाद् (१-३-३१)

इति।

एकपदम्। चशब्द उत्तरसूत्रस्थोऽत्रापि द्रष्टव्यः। अस्मत्पक्षे 'अरुणयैक-हायिन्या सोमं क्रीणाति', 'एकां गां दद्यात्', 'षड् देया, द्वादश देया' इत्या-दिषु द्वयोर्जातिगुणशब्दयोर्जातिगुणविशिष्टद्रव्यवचनत्वेन द्रव्यशब्दत्वात् सामानाधिकरण्यं सिध्यत्येव। सिद्धान्ते तु जातिगुणमात्राभिधायित्वेना-द्रव्यशब्दत्वान्न सामानाधिकरण्यसिद्धिः। अतोऽपि व्यक्तिरर्थो युक्त इति विशिष्टाभिधानपक्षमाश्रित्यैतत्सूत्रं योजयितव्यमिति। अथवा द्रव्यशब्देन द्रव्याश्रयो गुणो लक्ष्यते। द्रव्याश्रयस्यारुण्यष(डा?द्वा)देर्गुणस्य वाचकः शब्दो नोपपद्येत, आकृतिवचनत्वे जातिगुणशब्दयोः सामानाधिकरण्या-भावादित्यर्थ इति ॥

---

१. 'न स्याच्चोपपद्येत' क.

अथ तृतीयमपि पूर्वपक्षाभ्युच्चयसूत्रम् —

## अन्यदर्शनाच्च (१–३–३२)

इति ।

द्विपदम् । तस्यार्थः—'यदि पशुरुपाकृतः पलायेताथान्यं तद्वर्णं तद्वयसमालभेते'त्यन्यस्य प्रतिनिधेर्विधानदर्शनाच्च व्यक्तिः शब्दार्थत्वेनाङ्गीकर्तव्येति निश्चीयते । आकृतेरन्यत्वतद्वर्णत्वादेरसंभवादिति ॥

अथ चतुर्थं सिद्धान्तसूत्रम् —

## आकृतिस्तु क्रियार्थत्वात् (१–३–३३)

इति ।

त्रिपदम् । तुशब्दः पक्षं व्यावर्तयति । आकृतिरेव शब्दार्थो न व्यक्तिः । कुत इत्याह—क्रियार्थत्वादिति । श्येनचितं चिन्वीत इत्यादावाकृतेरेव क्रियार्थत्वसम्भवादित्यर्थः । एवं ह्यस्य वाक्यस्यार्थः—श्येनमिव चितमग्निस्थलं चयनेन भावयेदिति । यद्यपि 'कर्मण्यण्'(पा. ३-२-१) इत्यतः 'कर्माणि हनः' (पा. ३-२-७६) इत्यतो वा कर्मणीत्यनुवर्तमाने 'कर्मण्यग्न्याख्यायाम्' (पा. ३-२-९१) इति सूत्रेण कर्मण्युपपदे कर्मणि च वाच्ये चिनोतेः क्विप्प्रत्ययविधानाच्चयनेन श्येनो निर्वर्तयितव्य इत्यर्थोऽवगम्यते तथापि मुख्ययोः श्येनाकृतिव्यक्त्योश्चयनेन सम्पादयितुमशक्यत्वाल्लक्षणया सादृश्यसम्पादनमर्थो भवति । तत्रापि[1] व्यक्तिसादृश्यस्य व्यक्त्यानन्त्येन नियन्तुमशक्यत्वादाकृतिसादृश्यं गृह्यते । अत[2] एवंविधां सादृश्यसंपादनात्मिकां क्रियां प्रत्याकृतेरेव शेषत्वात्सैव शब्दार्थ इति ॥

---

१. 'तत्र व्यक्ति' ख. २. 'अथैवंविधां' ख.

अथ पञ्चममनुभाषणसूत्रम् —

**न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् (१-३-३४)**

इति ।

एकादशपदम् । तत्र प्रथमेनेतिचेच्छब्देनाकृतिवचनत्वपक्षः पूर्वपक्षिणा परामृश्यते स्वोक्तानां हेतूनां अपरिहृतत्वेन पुनरपि तैरेव प्रत्यवस्थातुम् । द्वितीयस्तु तेषामेव परिहाराय सिद्धान्तिनोऽनुभाषणद्योतनार्थः । अर्थान्तरे विधानमित्यत्र 'न स्या'दिति पदद्वयमप्यनुषज्यते । न द्रव्यमित्यत्र नञः श्रुतत्वात् 'स्या'दित्येकं, एतैश्च त्रिभिर्वाक्यैः प्रयोगचोदनाभावादद्रव्यशब्दत्वादन्यदर्शनाच्चेति हेतुत्रयानुवादः कृतः । क्रमभेदस्त्वविवक्षितत्वान्न दोषाय । तेनायमर्थः— हे सिद्धान्तवादिन्! इति चेत्पश्यसि आकृतिः शब्दार्थ इति, तन्न । यत आकृतिवाचितायामालम्भनादिक्रिया न स्यात्, आलब्धपशुनाशेऽर्थान्तरे विधानमालम्भस्य[1] न स्यात् 'अन्यं तद्वर्ण'मिति द्रव्यम् । द्रव्यशब्दो द्रव्याश्रयस्य गुणस्य वाचकः । अरुणयैकां षडित्यादिको न स्यात् । जातिगुणशब्दयोर्वा जातिगुणविशिष्टद्रव्यवाचित्वाभावेनास्मत्पक्ष इव द्रव्यमर्थो न स्यात् । ततश्च तयोः सामानाधिकरण्यासिद्धिरित्यस्माभिरुक्तास्त्रयोऽपि हेतवोऽपरिहृतास्तिष्ठन्ति इति चेन्मां प्रति पूर्वपक्षिन्! ब्रूषे, तर्हि तेषां परिहारमुत्तरसूत्रे वक्ष्यमाणं शृणु इति सिद्धान्तिनोऽनुभाषणप्रकार इति ॥

अथ षष्ठं परिहारसूत्रम् —

**तदर्थत्वात्प्रयोगस्याविभागः (१-३-३५)**

इति ।

---

१ 'मालम्भनस्य' ख, ग.

त्रिपदम् । तस्यार्थः– शब्दस्य न्यायेनाकृत्यर्थत्वावधारणादालंभनादिक्रियाया द्रव्ये प्रयोगस्यानुष्ठानस्याविभागो द्रव्यस्याकृत्या सह नित्यसम्बन्धः कारणमिति । अथवा प्रयुज्यमानक्रियाप्रयोजनत्वेनानिर्दिष्टमप्यपूर्वं बुद्धिस्थत्वात् तच्छब्देन परामृश्यापूर्वार्थत्वादालम्भनादेर्द्रव्यस्य च तत्साधनत्वाद्व्यक्तिपक्षवदाकृतिपक्षेऽपि प्रयोगस्यानुष्ठानस्य द्रव्यगतत्वेनाविभागो विशेषाभाव इत्युच्यते । न द्रव्यं स्यादित्यस्याप्युत्तरत्वेनैतदेव सूत्रं योज्यम् । आकृत्यर्थत्वाच्छब्दस्य[1] स्वरूपसंख्याशब्दानामपि द्रव्ये प्रयोगस्य प्रकर्षकत्वेन विशेषणत्वेन योगस्य व्यक्त्याकृत्योरविभागः कारणमिति । तथार्थान्तरे विधानं न स्यादित्यस्याप्युत्तरत्वेन योजनीयम् । उक्तादाकृत्यर्थत्वाच्छब्दस्य प्रतिनिहिते द्रव्यान्तरेऽन्यत्वादिधर्मवति प्रयोगस्यालम्भनक्रियाया व्यक्त्याकृत्योरुक्त एवाविभागः कारणमिति ।

तेनैवं पुर्वपक्षोक्तहेतुत्रयनिराक्रिया ।
सिद्धान्तिना कृतैकेन सूत्रेणेति प्रतीयताम् ॥ इति ।

अत्राकृत्यधिकरणे षट् सूत्राणि ॥

इति श्रीमदृषिपुत्रश्रीपरमेश्वरविरचिते[3]
सूत्रार्थसङ्ग्रहे प्रथमस्याध्यायस्य
तृतीयः पादः समाप्तः ।

---

१. 'इत्युक्तं तेन-द्रव्यं' ख. २. 'स्य रूपशब्दानामपि द्रव्यप्र' ख. ३. 'रोपाध्यायविरचिते' ख.

अथ प्रथमस्याध्यायस्य चतुर्थे पादे

## प्रथमं नामधेयाधिकरणम्

तत्र पादैस्त्रिभिर्धर्मप्रामाण्ये सप्रकारके ।
विध्यर्थवादमन्त्रस्मृत्याचाराणां निरूपिते ॥

उद्भिच्चित्राग्यपृष्ठादिनाम्नां तद्वदपेक्षिते ।
प्रामाण्यकथने तस्य प्रकारकथनेऽपि च ॥

प्रामाण्यकथनं पूर्वमनेन क्रियते ततः ।
अनन्तराधिकरणैः प्रकारः[1] कथयिष्यते ॥

अयं चात्र संशयः—किमेतानि कस्यचिद्धर्मस्य प्रमाणान्युत नेति । तत्र विध्यर्थवादमन्त्राणामेव धर्मप्रामाण्यप्रतिपादनादुद्भिदादीनां तदन्त-[2]र्भावाभावाच्चानर्थक्यमर्थादापतितम् । तदन्तर्भावाभावश्च भावनांशत्रय-प्रतिपादनाशक्तेः स्तुतिसामर्थ्याभावादस्यन्तत्वादिविरहाच्च । न च शुद्ध-[3]गुणविधित्वमेतेषां सम्भवति, अप्रसिद्धत्वान्मत्वर्थलक्षणादिदोषाच्च । न च नामधेयत्वम्, तत[4] एवाप्रसिद्धत्वाद्विशेषत आनर्थक्यादप्रवृत्तिविशेषकर-[5]त्वाच्च । तस्मादप्रमाणान्येवंजातीयकानि इत्युत्सूत्रे पूर्वपक्षे प्राप्ते, सिद्धान्त-प्रतिपादनार्थं सूत्रम् —

---

* ‘ वाणि प्राणसमेष्वपि त्रिदिवमायातेषु बाणादिषु
श्रेयः किन्नु विमृश्य हन्त हतके ! तैरेव न प्रस्थिता ।
तस्यैतत्फलमद्य कद्वदकविश्रेणीभिरभ्यर्थिता
वीथ्यां त्वं बलवन्निबद्धचरणा वन्दीव विक्रीयसे ’ ॥

इत्यधिकं ख पाठे.

१. ‘ प्रकारः प्रथयिष्यते ’ ख. ‘ प्रकारैः कथयिष्यते ’ ग. २. ‘ न्तर्भावाच्च ’ ग. ३. ‘ शुद्धविधित्वमेतेषां ’ ग. गुणविधित्वमेषां ’ ख. ४. ‘ तव एवाप्र ’ ख. ५. ‘ करणत्वा ’ ग.

## उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् (१-४-१)

इति ।

षट्पदम् । तस्यार्थः—यस्मात् कृत्स्नस्य समाम्नायस्य प्रागैदमर्थ्यमिदमर्थत्वमज्ञातज्ञप्तिः स्तुतिस्मृतिप्रयोजनत्वमस्माभिरुक्तं तस्मादुद्भिदाद्यपि सर्वं तदर्थं तदन्यतमार्थमेव स्याद्भवितुमर्हति नानर्थकम् । अनेन च त्र्यंशवेदान्तर्भाव उक्तो भवति । तत्रापि च कुत्रेत्यपेक्षायां त्वदुक्तादेव हेतोरर्थवादमन्त्रान्तर्भावासम्भवात्पारिशेष्याद्विध्यन्तर्भावः सिद्धो भवति इति सूत्रे तदनुक्तिर्न दोषाय । स च द्वेधा सम्भावितः—गुणविधित्वेन नामधेयत्वेन वा । ततश्च तदन्यतरत्वेन प्रामाण्यान्नोद्भिदादीनां अक्रियार्थत्वेनानर्थक्यं वक्तुं युक्तमिति ॥

अत्र नामधेयाधिकरण एकं सूत्रम् ॥

अथ द्वितीयमुद्भिदधिकरणम् । तत्र पूर्वाधिकरणेन विध्युद्देशान्तर्गतत्वे सिद्धे गुणविधिर्नामधेयमिति विचार्यते । प्रथमं तावद्यौगिकेषूद्भिदादिपदेषु विचारः । तत्र प्रसिद्धेरर्थवत्त्वात् प्रवृत्तिविशेषकरत्वाच्च गुणविधिरिति पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रम् —

## अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् (१-४-२)

इति ।

अष्टपदम् । अपि वेति पक्षो व्यावर्त्यते । यदुद्भिदादिपदमुत्पत्तौ प्रथमश्रवणे सत्यपूर्वमप्रसिद्धार्थं तत् कर्मणो नामधेयं स्यान्न गुणविधिः ।

---

१. 'यैदतदुक्ता' ग. २. 'ताभ्यामन्य' ख.

कुत इत्याह—अविधायकत्वादिति। आख्यातप्रत्ययस्य श्रौतधात्वर्थपरित्यागेन पदान्तरोपात्तगुणविधायकत्वाभावात्। अथवा औत्पत्तिकसोमबाधेन फले कर्मणि वा नदनीयखनित्रादिगुणविधायकत्वाभावात्। यद्वा, मत्वर्थलक्षणानेकविधिशक्तिकल्पनादिदोषप्रसङ्गात् फले गुणविशिष्टकर्मविधायकत्वाभावादित्यर्थः। यदुत्पत्तावपूर्वमित्यस्यान्या व्याख्या—यदित्यव्ययं यस्मादित्यस्यार्थे। यस्मान्नामधेयत्वे सत्यपूर्वं कर्म फलोत्पत्तौ विदधदर्थवद्भविष्यति वाक्यम्, तस्मात् तदेव युक्तमिति। एवं वा—नामधेयं स्यादित्युक्ते कस्येत्यपेक्षायामुक्तम्—यदुत्पत्तावपूर्वमिति। यस्योत्पत्तावपूर्वं निष्पद्यते तस्येत्यर्थः। एवं च यागस्येत्युक्तं भवति। तदा च सप्तपदं सूत्रम्। प्रसिध्यादयस्तु कर्मण्यपि विद्यन्त एव। तदपि भूमेः खनित्रमिव पशोरुद्भेदने प्रकाशने समर्थमित्यवयवप्रसिद्धिस्तुल्या। अर्थवत्त्वं च गुणशब्दस्य गुणेनेव नाम्नो नामिनार्थेनास्ति। प्रवृत्तिविशेषकरत्वमपि गुणफलोपबन्धस्य नामाधीनत्वाद्विद्यत एव। 'समे दर्शपूर्णमासाभ्या'मित्यादिगुणोपबन्धो 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इत्यादिफलोपबन्धश्च यागविशेषस्यान्यथा न स्यात्। सर्वेषामेकस्मिन् कर्मणि गुणविधित्वेन नामधेयत्वाभावादेककर्म्यर्थप्रसक्तौ कुत्र वा समादिर्गुणः, किं वा स्वर्गादौ फले विधीयेत। अतः प्रसिद्ध्यादेस्तुल्यत्वात् सामानाधिकरण्यस्य च नामधेयत्वसाधकस्याधिक्यात् तत्कल्पनैव न्याय्या इति॥

अत्रोद्भिदधिकरण एकमेव सूत्रम्॥

अथ तृतीयं चित्राधिकरणम्। 'तत्र चित्रया यजेत पशुकामः' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' इति चित्राज्यपृष्ठशब्दा गुण-

---

१. 'कर्म विदधद' ख.　२. 'प्रसक्तेः कुत्र' ख.

जातिवाचित्वेन निरूढा उदाहरणम्। तेषु गुणविधिनामधेयत्वाभ्यां सन्दिह्य प्रसिद्ध्यादिभिरग्नीषोमीये पशौ यागानुवादेन चित्रत्वस्त्रीत्वे विधीयेते। 'पञ्चदशान्याज्यानी'ति सङ्ख्यासंयुक्तं घृतं स्तोत्राङ्गत्वेन विधीयते। एवं 'सप्तदशानि पृष्ठानी'ति सङ्ख्यासंयुक्तपृष्ठविधिर्द्रष्टव्यः। तस्मान्नैतानि कर्मनामधेयानि इत्युत्सूत्रं पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम्—

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः (१-४-३)**

इति।

चतुष्पदम्। तस्यार्थः—यस्मिंश्चित्राशब्दादौ गुणोपदेशो गुणस्यापरस्य स्त्रीत्वपञ्चदशत्वादिरूपस्योपदेशः श्रवणमस्ति तस्य चित्रादिशब्दस्य प्रधानेन गुणप्रतियोगिभूतेन कर्मणा सहाभिसम्बन्ध उपपत्तिमान्। स च नामधेयत्वेन विना प्रकारान्तरेण नोपपद्यते इत्यर्थात्तत्सिद्धिः। हेतुश्च गुणोपदेश इति सूत्रावयवसूचितो गुणविधित्वे सत्यनेकगुणविधानाद्वाक्यभेदप्रसङ्गो द्रष्टव्यः। न चैकशब्दोपात्तत्वाद्वाक्यभेदः। तथा हि—

> एकशब्दोपात्तयोश्च चित्रत्वस्त्रीत्वयोर्विधौ।
> वाक्यभेदोऽनेकशब्दोपात्तयोरिव विद्यते॥
>
> तुल्यो ह्यत्रोभयत्रापि विध्यावृत्त्यनतिक्रमः।
> चित्रत्वस्त्रीत्वयुक्तस्य कारकस्य विधावपि॥
>
> न विशेषस्तथा मुख्यः कामशब्दश्च सन् फले।
> कल्प्येत साधने गौणो नानिच्छोस्तद्भवेदिति॥
>
> न च तद्युज्यते तस्मात् फलत्वेनैव कामना।
> पशुकामपदोपात्ता कर्मणस्तत्फले विधिः॥

चित्रयेति च दध्यादिचित्रद्रव्यस्य कर्मणः ।
सामानाधिकरण्येन नामधेयतया स्थितम् ॥

एवमाज्यादिशब्दानां नामत्वं न गुणार्थता ।
नहि पञ्चदशाज्यानीत्युक्ते सङ्ख्याविशिष्टधीः ॥

यथा तथा पञ्चदशान्याज्यानीत्युक्तितो भवेत् ।
तस्मात् सङ्ख्याविशिष्टस्य द्रव्यस्यात्राप्रतीतितः ॥

प्रतीतौ वाक्यभेदाच्च द्रव्यतत्सङ्ख्ययोर्विधौ ।
आज्यपृष्ठादिशब्दोक्तस्तोत्रभेदानुवादतः ॥

सङ्ख्यामात्रविधानेन युक्तैवाज्यादिनामता ।
ततश्चा'ज्यैः स्तुवत' इत्यादिकोत्पत्तिवाक्यगम् ॥

अप्याज्यादिपदं नामेत्यर्थादुक्तं भविष्यति ।
सामानाधिकरण्यं च स्फुटं तत्रास्य साधकम् ॥

'यदाजिमीयु'रित्यादिवाक्यशेषाच्च तत् स्थितम् ॥

अत्र चित्राधिकरण एकं सूत्रम् ॥

अथ चतुर्थं तत्प्रख्याधिकरणम् ।

तत्र यौगिकानां निरूढानां च शब्दानां गुणविधित्वनिरासेन कर्मनामधेयत्वे साधितेऽनन्तरं यौगिकेष्वेव केषुचिद्विशेषेण गुणविधित्वमाशङ्क्य निरस्यते । 'अग्निहोत्रं जुहोति', 'आघारमाघारयती'ति वाक्यगतावग्निहोत्राघारशब्दौ चोदाहरणम् । तयोर्गुणविधित्वनामधेयत्वे सन्दिह्य प्रसिद्ध्यादिभिर्गुणविधिः । न च मत्वर्थलक्षणादोषः ।

अग्नये होत्रमत्रेति विग्रहाश्रयणाद्यतः ।
बहुव्रीहिसमासेन मत्वर्थोऽभिहितः श्रुतेः ॥

---

१. 'तिः' ख.

तत्रोपसर्जनार्थो[1]ऽग्निर्देवतात्वेन चोद्यते ।
आघार इति चाज्यादि द्रव्यं क्षरितृ कथ्यते ॥

तच्च द्वितीयानिर्देशात् संस्कार्यत्वेन संमतम् ।
साक्षात्प्रयोजनापेक्षं द्रव्यापेक्षे निवेक्ष्यते ॥

उपांशुयाजे तस्माच्चावुभौ गुणविधी मतौ ।
इत्युत्सूत्रं पूर्वपक्षं कृत्वा त्रिपदमुच्यते ॥

सिद्धान्तसूत्रं

## तत्प्रख्यं चान्यशास्त्रम् (१-४-४)

इतीदृशम् ।
तच्छब्दः पूर्वसूत्रस्थगुणवाच्ययमिष्यते ॥

यस्मिन्निति चात्रानुषज्यते । यस्मिन् गुणविधिर्नामधेयमिति सन्दिग्धे तस्य गुणस्य प्रख्यापकमन्यच्छास्त्रमस्ति, तदपि नामधेयमित्यर्थः । तच्चात्रान्यशास्त्रं 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यग्नेः प्रख्यापकमग्निहोत्रे तावदस्ति । उपांशुयाजेऽपि 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्', 'तस्याघारमाघार्ये'त्याज्यस्य प्रापकमस्त्येव । ततश्च तेनैवाग्नेराज्यस्य च प्राप्तत्वान्नोपसर्जनार्थाग्निविधिरग्निहोत्रशब्दे, क्षरणसमर्थाज्यपयःप्रभृतिद्रव्यविधिराघारशब्दे च न कल्पयितव्यः । तस्माद् द्वयमप्येतन्नामधेयमिति ॥

अत्र तत्प्रख्याधिकरणमेकं सूत्रम् ॥

अथ पञ्चमं तद्व्यपदेशाधिकरणम् ।

तत्रैकेषां यौगिकानां विना मत्वर्थलक्षणाम् ।
गुणोपदेशशङ्कायाः प्राप्तिं तत्प्रख्यशास्त्रतः ॥

---

१. 'र्थोऽग्निः' ख.

निराकृत्य निरूढानामपि केषांचिदन्यथा ।
उक्तस्य वाक्यभेदस्य परिहारादुपस्थिता ॥

गुणोपदेशशङ्का तद्व्यपदेशार्थवादतः ।
'यथा वै श्येन' इत्यादिरूपा तद्वन्निरस्यते ॥

उदाहरणं च 'श्येनेनाभिचरन् यजेत,' 'सन्दंशेनाभिचरन् यजेते'-त्यादि । तत्र श्येनसन्दंशशब्दयोर्गुणविधित्वनामधेयत्वसन्देहेऽत्यन्तनिरूढत्वाद्गुणविधिः, स च ज्योतिष्टोमे काम्यत्वाच्च श्येनादिरुत्पत्तिशिष्टमपि सोमं बाधते । अथवा सोमादाविव मत्वर्थलक्षणां सोढ्वाप्यप्रसिद्धार्थकल्पनापरिहारेण गुणविशिष्टकर्मविधानमाश्रयणीयमित्युत्सूत्रं पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम् —

## तद्व्यपदेशं च (१–४–५)

इति ।

द्विपदम् । अत्रापि यस्मिन्नित्यनुषज्यते । तच्छब्दश्च गुणपरामर्शकः, तेन गुणेन व्यपदेशस्तद्व्यपदेशः । स यस्मिन्नस्ति, तच्च नामधेयमिति योजना । एतदुक्तं भवति—यस्य श्येनादिपदस्य पूर्वपक्षिणा गुणत्वेनाभिमतेन प्रसिद्धेन श्येनादिद्रव्येण सादृश्यमुपादायार्थवादे व्यपदेशः सङ्कीर्तनं व्युत्पादनं क्रियते, तच्छ्येनादिपदमपि नामधेयमिति । एवं ह्यर्थवादे व्युत्पादनं—'यथा वै श्येनो निपत्यादत्त एवमसौ द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इति । अनेन च श्येनगुणयोगात् स्तोतुं श्येनशब्दः प्रयुक्त इत्युक्तम् । न चात्मनैवात्मनः स्तुतिरुपपद्यते । गुणविधिपक्षे च श्येनद्रव्यस्य विधेयत्वात् स्तुतिरपि तस्यैव कर्तव्येति वाक्यशेषस्तत्स्तुत्यर्थोऽभ्युपगन्तव्यः । ततश्चात्मनैवात्मनः स्तुतिरन्यत्रादृष्टा

१. 'देशश्च' इति मातृका पाठः.

कल्प्येत । नामधेयपक्षे तु यागश्येनस्य द्रव्यश्येनेन स्तुतिरुपपद्यते । सन्दंशेऽपि 'यथा वै सन्दंशेन दुरादानमादत्ते एवमनेन भ्रातृव्य'मिति यागसन्दंशस्य द्रव्यसन्दंशेन । यद्यपि चात्रापि वत्यर्थो लक्षयितव्यः तथापि गुणविधौ वत्यर्थो मत्वर्थश्च लक्षयितव्य इत्यतिगौरवम् । तस्मादेवमादीनि नामधेयानीति ॥

अत्र तद्व्यपदेशाधिकरण एकं सूत्रम् ।

अथ षष्ठं वाजपेयाधिकरणम् । तच्च सर्वपूर्वाधिकरणाक्षेपेणावतरति । ततश्च तदुदाहृताः सर्व एवोद्भिदादयोऽप्यत्रोदाहरणानि । 'वाजपेयेन स्वाराज्यकामो यजेते'ति तु प्रदर्शनार्थमुदाहृतम् । तत्र गुणविधिनामधेयत्वसन्देहे गुणविधिं पूर्वपक्षयितुमाद्यं सूत्रम्—

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् (१—४—६)

इति ।

षट्पदम् । तस्यार्थः—इति चेद्वाजपेयशब्दे सन्देहः, तर्हि न केवलं तत्र, किन्तु नामधेये नामधेयत्वेन सिद्धान्तिना परिकल्पिते सर्वत्रोद्भिदादिवाजपेयान्ते शब्दे गुणश्रुतेः प्रसिद्ध्यादिभिः श्रूयमाणस्य गुणस्यापह्नोतुमशक्यत्वात्तद्विधानमेव स्यात्, अलं नामधेयत्वव्यसनेन इत्याक्षेपः । न च मत्वर्थलक्षणादोषोऽस्ति । आख्यातस्य तन्त्रसम्बन्धे सति तदर्थस्य यागेन स्वाराज्यमिति फलं प्रति करणतया, वाजपेयेन यागमिति गुणं प्रति साध्यतया च सम्बन्धसिद्धेः । वाजपेयशब्दो नियोगात्[1] पानार्हान्नवाची सन् यवागूमाचष्टे । अतः प्रसिद्ध्यादिभिर्गुणविधिरिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

## तुल्यत्वात् क्रिययोर्न (१—४—७)

इति ।

---

१. 'द्वियोगात्' क.

त्रिपदम् । तत्र नञा गुणविधौ प्रतिषिद्धे नामधेयमित्यर्थात् प्रतिज्ञातं भवति । कारणमाह—तुल्यत्वात् क्रिययोरिति । वाजपेयदर्शपूर्णमास-क्रिययोस्तुल्यत्वात्, तच्चौषधद्रव्यत्वेन । ततश्च दर्शपूर्णमासप्रकृतिको वाज-पेय इति तदीयं एव विध्यन्तः स्यात् । तत्र वाजपेयप्रकरणे सौमिकावि-ध्यन्तानां दीक्षोपसदादीनां दर्शनं नावकल्पेत इति पूर्वपक्षनिरासलिङ्ग-त्वेनैतद्व्याख्येयम् । अथवा सिद्धान्तलिङ्गाभिधानमेवास्तु । गुणविधि-त्वाभावे सत्यौषधद्रव्यत्वाभावादव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोम-क्रियातुल्यत्वाद्वाजपेयक्रियायाः सौमिकदीक्षोपसदादिविध्यन्तदर्शनमव-कल्पेत । तस्मान्नामधेयमेव वाजपेयशब्द इति । यद्यप्यनेन लिङ्गवचनेन वाजपेयवाक्यमेवात्रोदाहरणं प्रतीयते तथाप्युत्तरसूत्रवक्ष्यमाणवैरूप्यलक्ष-णन्यायमूलत्वाल्लिङ्गन्यायस्य च साधारण्यान्न लिङ्गमात्रेण सङ्कोचो युक्त इति नानुदाहरणत्वमुद्भिदादीनाम् । अतश्च वाजपेये वैशेषिकलिङ्गो-पन्यासमात्रमनेन क्रियत इति नानुपपत्तिरिति ॥

अथ तृतीयं लिङ्गसूचितन्यायप्रापकसूत्रम्—

## एकशब्द्ये परार्थवत् (१–४–८)

इति ।

द्विपदम् । तच्च यदि गुणविशिष्टकर्मविधिः स्यात् ततो यागस्य स्वार्थवत्–स्वविधानार्थवत्–विधेयत्वेनोपादेयत्वेन गुणत्वेन चाभिहितस्य परार्थवत्–गुणविधानार्थवत्–अनुवाद्यत्वेनोद्देश्यत्वेन प्राधान्येन चाभि-धानं प्रसज्येत । तच्चैकशब्द्ये सकृदुच्चारिते, धातौ विरुद्धात्रिकद्वयात्मक-वैरूप्यप्रसङ्गादयुक्तमिति पूर्वसूत्रस्थस्य नञः काकाक्षिवदत्राप्यन्वयं परा-र्थशब्दस्य स्वार्थशब्दोपलक्षणार्थत्वं चाङ्गीकृत्य व्याख्येयमिति ॥

अत्र वाजपेयाधिकरणे त्रीणि सूत्राणि ॥

---

१. 'यो वि' ख. २. 'नव' ख.

अथ सप्तमं तद्गुणाधिकरणम् । तत्र नामधेयेषु व्युत्पादितेषु कचित् तदपवादेन गुणविधित्वं विशिष्टविधिसम्भवप्रदर्शनाय प्रतिपाद्यते । उदाहरणं तु 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'त्यादिवाक्यगता आग्नेयादिशब्दाः । तेषु गुणविधित्वनामधेयत्वसन्देहोऽपि तत्प्रख्यन्यायसम्भवासम्भवाभ्यां दर्शयितव्यः ।

तत्रानेकगुणानां हि विधाने वाक्यभेदतः ।
अष्टाकपालद्रव्याढ्यं कर्ममात्रं विधीयते ॥

याज्यानुवाक्यायुगलं क्रमात्तस्याग्निदैवतम् ।
अङ्गं विहितमस्त्यस्मात् प्राप्तोऽग्निर्मान्त्रवर्णिकः ॥

अतोऽग्निहोत्रवदिदं नाम तत्प्रख्यशास्त्रतः ।
इत्युत्सूत्रं पूर्वपक्षं कृत्वा सिद्धान्त उच्यते ॥

तदर्थमिदं सूत्रम् —

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः (१-४-९)**

इति ।

नवदशपदत्वेन सन्दिग्धम् । भाष्यकारपक्षे तद्गुणशब्दसमासन्याससन्देहात् । एवं ह्याह भाष्यकारः—'तच्च कर्म' गुणाश्चास्य विधीयेर'न्निति । तत् किमनेन चशब्दाध्याहारमसमासं चाश्रित्यैवमर्थो दर्शितः उतैकवचनेन विग्रहं समासार्थं च चार्थमङ्गीकृत्य इति निर्णेतुमशक्यत्वात् । वार्तिककारपक्षे तु नवपदमेव ।

'न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केनचित् ।
ते गुणाश्चोपदिश्येरन् विधिना ह्यविभागतः ॥

इति बहुवचनेन विग्रहात् । तेनायमर्थः—तुशब्दो नामधेयत्वपक्षं व्यावर्तयति । यत्रान्येन शास्त्रेण शिष्टा यागादयः तद्गुणाश्च न भवन्त्याग्निहोत्रादाविव तत्र ते यागादयस्तद्विशेषणभूता अग्न्यादयो गुणाश्च युगपद्विधीयेरन् । यस्मात् तानि कर्माणि ते गुणाश्चाग्नेय इत्यादिके कर्मविधिप्रयोजने तद्धितान्तशब्दे विभक्ता अन्तर्गताः । अन्तर्गतिश्च देवतायाः प्रातिपदिकेन तद्विशिष्टस्य द्रव्यस्य तद्धितेन चाभिहितत्वात् स्पष्टैव । यागभावनयोरप्यष्टाकपालस्य ताभ्यां विनाग्नेयत्वेन भवितुमशक्तेर्नान्तरीयकसिद्धोऽन्तर्भावः । तस्मादनेनैव वाक्येन वर्तमानापदेशत्वादर्थवादोत्थापितविधिशक्तिना सर्वविशेषणविशिष्टस्य कर्मणो विधानात्, न मान्त्रवर्णिकदेवताविधिकल्पनया तत्प्रख्यत्वमङ्गीकृत्य नामधेयत्वमभ्युपगन्तुं युक्तमिति ॥

अत्र तद्गुणाधिकरण एकं सूत्रम् ॥

अथाष्टमं बर्हिराज्याधिकरणम् । तच्च कर्मनामधेयप्रसङ्गेन[1] द्रव्यनामधेयेष्वपि बर्हिराज्यादिशब्देषु[2] संस्कारनिमित्तत्वजातिनिमित्तत्व[3]चिन्तार्थत्वात् प्रासङ्गिकम् । बर्हिराज्यग्रहणं पुरोडाशस्याप्युपलक्षणार्थम् । तत्र लवनादिसंस्कारनिमित्तो बर्हिश्शब्दः, उत्पवनादिसंस्कारनिमित्त आज्यशब्दः, कपालाधिकरणकपाकसंस्कारनिमित्तः पुरोडाशशब्द इति शास्त्रस्थप्रसिद्ध्याङ्गीकर्तुं[4] युक्तम्, न लौकिकप्रसिद्ध्या जातिनिमित्त इति । तस्याः काचित्कत्वेन दुर्बलत्वादिति पूर्वपक्षे प्राप्ते सिद्धान्तं वक्तुं सूत्रम्—

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः (१–४–१०)**

इति ।

---

१. 'दिकर्म' क. २. 'र्हिरादि' ख. ३. 'त्वचिन्तार्थत्वात्' ख. ४. 'स्त्रप्र' ख.

चतुष्पदम्। तस्यार्थः—बर्हिराज्ययोर्ब्रूमः असंस्कृते बर्हिरादौ जातिनिमित्तत्वेन शब्दस्यैकदेशेऽपि लाभादतच्छब्दोऽसंस्कारनिमित्तो बर्हिरादिशब्द इति। अथवा संस्काररहिते कुशादिजातिमात्रे क्वचित् प्रयुक्तस्य बर्हिरादिशब्दस्य संस्कृतेऽपि जात्यनपगमेन लाभान्न संस्कारशब्द इत्यर्थ इति।

अत्र बर्हिराज्याधिकरण एकं सूत्रम्॥

अथ नवमं प्रोक्षण्यधिकरणं तत्पूर्वाधिकरणसिद्धान्तन्यायेन संस्कारनिमित्तत्वनिरासेन[1] जातिनिमित्तत्वमुपादाय प्रत्यवस्थानात् सङ्गतम्। तत्र 'प्रोक्षणीरासादये'त्यत्र प्रोक्षणीशब्दस्य संस्कारनिमित्तत्वं-जातिनिमित्तत्वयोगनिमित्तत्वैस्त्रेधा[2] संशय्य संस्कृतास्वप्सु क्वचित् प्रयोग-दर्शनेऽप्यसंस्कृतास्वपि दर्शनेन संस्कारनिमित्तत्वस्य व्यभिचाराज्जाति-निमित्त एवायं समुदायप्रसिद्ध्या कल्पयितुं युक्त इत्युत्सूत्रं पूर्वपक्षं कृत्वा योगनिमित्तत्वं सिद्धान्तयितुं सूत्रम्—

## प्रोक्षणीष्वर्थसंयोगात्[3] (१–४–११)

इति।

द्विपदम्। तत्र पूर्वसूत्रा'दतच्छद' इत्यनुषज्यते। अनुषज्यमानगतं[4] च (तद्वृत्तं? तत्पदं) तत्र संस्कारमात्रवाच्यप्यत्र योग्यत्वात् संस्कारजातिद्वय-वाच्याश्रयितव्यम्। तदयमर्थः—प्रोक्षणीष्वतच्छब्द इति ब्रमः। प्रोक्षणी-शब्दः संस्कारशब्दो जातिशब्दश्च न भवतीत्यर्थः। कस्मादित्याह—अर्थसंयोगादिति। अप्सु प्रकृष्टोक्षणहेतुत्वरूपस्यावयवार्थस्य संयोगा-द्यद्यपि प्रोक्षणमित्युक्ते द्रवद्रव्यमात्रं प्रतीयते, तथापि प्रोक्षणीरिति

---

१ 'त्वान्निरासेन' ख. २. 'त्वयोग' ख. ३. 'गमिति' ख. ४. 'मानं च' ख.

स्त्रीलिङ्गबहुवचनयोगान्नित्यबहुवचनान्तस्त्रीलिङ्गाप्शब्दार्थ एव प्रोक्षणी-शब्दवाच्यो निश्चीयते इति न समुदायशक्तिकल्पनया जातिनिमित्तः संस्कारनिमित्तो वाङ्गीकर्तुं युक्त इति ॥

अत्र प्रोक्षण्यधिकरण एकं सूत्रम् ॥

अथ दशमं निर्मन्थ्याधिकरणं, तदपि पूर्ववत् प्रासङ्गिकम् । तत्र 'निर्मन्थ्येनेष्टकाः पचन्ती'ति निर्मन्थ्यशब्दस्यापि संस्कारजातियोगनिमित्तत्वेन पूर्ववदेव त्रेधा सन्देहे सति याज्ञिकसंस्कृतप्रयोगस्यासंस्कृतेऽपि क्वचित् प्रयोगदर्शनेन व्यभिचाराद्योगस्य चाग्निनवनीतसाधारण्येनाग्निनिर्णायकत्वाभावाज्जातिनिमित्तैव न्याय्येति पूर्वपक्षं प्राप्तं व्यावर्तयितुं सूत्रम् —

## तथा निर्मन्थ्ये (१-४-१२)

इति ।

द्विपदम् । तत्र तथाशब्देन पूर्वसूत्राभ्या'मतच्छब्दोऽर्थसंयोगा'दिति पदद्वयमनुषज्यते । तेनायमर्थः—निर्मन्थ्येऽपि तथा प्रतिपत्तव्यं[1] यथा प्रोक्षणीषु। उभयत्रापि संस्कारजातिशब्दत्वाभावोऽर्थसंयोगश्च साधारण इत्युक्तं भवति । तस्मान्निर्मन्थ्यशब्दोऽचिरमथिताग्निवचनः प्रत्येतव्यः । यत्त्वस्य नवनीतसाधारण्यमुक्तं, तत्पचन्तीति पाकसामानाधिकरण्येनाग्निविषयत्वावधारणाददोषः । तस्मात् क्लृप्तावयवप्रसिद्धिसम्भवे समुदायप्रसिद्धिकल्पना न युक्ता इति ॥

अत्र निर्मन्थ्याधिकरण एकं सूत्रम् ॥

अथैकादशं वैश्वदेवाधिकरणम् । तत्र 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथि(वीय१व्य)मेककपाल'-

---

१. 'वक्तव्यं' ख.

मिति विहितानां चातुर्मास्यप्रथमपर्वगतानामष्टानां यागानां सन्निधौ 'वैश्वदेवेन यजेते'ति श्रुतो वैश्वदेवशब्दः किं तेषामेव यागानां यजेतेत्यनूदितानां गुणत्वेन विश्वेषां देवानां विधानार्थः, उत समुदायानुवादद्वारेण नामधेयमिति सन्दिह्य गुणविधित्वं पूर्वपक्षयितुमाद्यं सूत्रम् —

## वैश्वदेवे विकल्प इति चेत् (१–४–१३)

इति ।

चतुष्पदम् । तस्यार्थः—इति चेद्वैश्वदेवशब्दे सन्देहं पश्यसि तर्हि वैश्वदेवे विकल्प इति ब्रूमः । गुणविधित्वेनाग्न्यादिभिः सह विकल्पो विश्वेषां देवानां प्रकृतेषु यागेषु भविष्यतीत्यर्थः । एतदुक्तं भवति । उत्पत्त्युत्पन्नशिष्टत्वस्यैतदधिकरणप्रतिपाद्यत्वेनातः पूर्वमसिद्धेर्गत्यन्तररहितवचनविहितत्वसाम्येन तुल्यबलतयोत्पत्तिशिष्टाग्न्याद्यवरुद्धेष्वेव यागेषु विकल्पेन देवतान्तरनिवेशसम्भवात् गुणविधिर्वैश्वदेवशब्दो न नामधेयमिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

## न प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य (१–४–१४)

इति ॥

अष्टपदम् । तस्यार्थः—नोत्पत्तिशिष्टगुणावरुद्धे कर्मण्युत्पन्नशिष्टस्य गुणस्य विधानानर्हत्वाद् विकल्पो न्याय्य इति नञा प्रतिज्ञायते । तत्र प्रकरणात् प्रत्यक्षविधानाच्चेति विषमशिष्टत्वं हेतुमाह—अग्न्यादयो 'आग्नेय' इत्यादिप्रत्यक्षतद्धितश्रुत्याष्टाकपालादिद्रव्यान्वयद्वारेण यागसम्बन्धितया विहिताः । विश्वेषां तु देवानां वाक्याद्यागमात्रसम्बन्धे सति

---

१. 'त्वविशेषस्यैतद' ख. २. 'र पूर्वैरहि' क.

प्रकरणात् तेनैवाग्नेयादियागेन नान्येनेति वाक्यान्तरोत्पन्नयागानुवादेन विधानम्। अतो विषमशिष्टत्वान्न विकल्पः सम्भवतीति। किमिति विषमशिष्टयोर्विकल्पासम्भव इति चेदत आह—नहि प्रकरणं द्रव्यस्येति। द्रव्यशब्दोऽत्र वस्तुवाची। नहि श्रौतस्याग्न्यादिदेवताख्यस्य वस्तुनः प्रकरणं प्रकरणापेक्षं वा विश्वदेवदेवताख्यं वस्तु पाक्षिकबाधने समर्थम्, येन विकल्पः स्यादित्यध्याहारेण व्याख्येयम्। अथवा नाष्टाकपालादिद्रव्यस्याग्न्यादिसम्बन्धे प्रकरणापेक्षास्ति। तस्मात् तस्यैव बलीयस्त्वमिति। यद्वा यद्द्रव्यस्य प्रकरणं प्रकरणे श्रवणमष्टाकपाल इति, तन्न वैश्वदेववाक्येनाश्रितम्। अतस्तस्य दौर्बल्यमिति। तस्माद् विकल्पासम्भवात् समुदायानुवादार्थो वैश्वदेवशब्दः। स च 'वसन्ते वैश्वदेवेन यजेत', 'प्राचीनप्रवणे वैश्वदेवेन यजेते'ति कालदेशयोर्विधानार्थः। न च प्रवृत्तिनिमित्तासम्भवः, छत्रिन्यायेनैकदेशस्थैरप्यामिक्षागतैर्विश्वैर्देवैरुपलक्षितानां तन्नामत्वसिद्धेरिति॥

अथ तृतीयं शङ्कोत्तरं सूत्रम् —

### मिथश्चानर्थसम्बन्धः[4] (१–४–१५)

इति।

त्रिपदम्। तत्रेयमाशङ्का। ननु स्ववाक्यगतेन विश्वे(वैश्व)देवशब्देन लिङ्गसमवायादाग्नेयादियागगणं लक्षयित्वा देवतोपदेशः संभवति। कथं न गुणविधिः। अत उत्तरम्–सकृदुच्चरितस्य वैश्वदेवशब्दस्य विध्यनुवादरूपाभ्यामर्थाभ्यां मिथः प्रत्येकं संबन्धो विरोधान्न युक्तः। तस्मान्न[6] गुणविधिरिति। एषा वा शङ्का– निर्मन्थ्यशब्दस्य नामधेयत्वे सत्यपि गुणविधित्वस्यापि दर्शनाद्वैश्वदेवशब्दोऽपि तथास्तु, कृतं केवलनामत्वाङ्गीकारेणेति

---

१ 'मविशि' क, २. 'मवि' क. ३. 'क्षं वि' ख. ४. 'नर्थक्यसम्बन्धः' क. ५. 'णविधिरिति, अत उक्तं' ख. ६. 'तस्मादपि न' क.

तदुत्तरत्वेनाप्येवं सूत्रं योज्यम्। नामधेयगुणविधिरूपयोरर्थयोः प्रयोजनयोः सकृदुच्चरितेन वैश्वदेवशब्देन सह प्रयोजनप्रयोजनिभावलक्षणः संबन्धः, तत एव विरोधान्न युक्त इति।

अथ चतुर्थं पूर्वपक्षदोषोद्भावनसूत्रम् —

## परार्थत्वाद्गुणानाम् (१-४-१७)

इति।

द्विपदम्। तस्यार्थः—यदि वैश्वदेवशब्दो गुणविधिः स्यात् तदा देवतैक्याद् गुणानां हविषां प्रधानार्थत्वेन तदावर्तकत्वाशक्तेः सहप्रदानप्रसङ्गः। ततश्च त्रिंशत्संपत्तिवचनमाहुतीनां न युज्येत इत्यध्याहारेणैतत्सूत्रम् भाष्यकृता व्याख्यातम्। वार्तिककृता तु बहुपदाध्याहारदोषेणापरितोषात् पूर्वसूत्रेणैकसूत्रं कृत्वैवं व्याख्यातम्। गुणविधौ देवतैक्यान्मिथः सहप्रदाने क्रियमाणे त्रिंशदाहुतिसंपत्त्यभावादनर्थसंबन्धास्त्रिंशदाहुतयो हूयन्त इति वाक्यार्थसंबन्धाभावः स्यादिति पूर्वावयवेनोक्ते गुणविधावपि हविर्भेदेन प्रदानावृत्तेः कथं सहप्रदानापत्तिरित्याशङ्कानिरासार्थत्वेन परार्थत्वात् प्रधानार्थत्वाद् गुणभूतानां हविषां प्रधानावर्तकत्वाभावादित्युत्तरावयवो योज्य इति॥

अत्र वैश्वदेवाधिकरणे त्रीणि चत्वारि वा सूत्राणि॥

अथ द्वादशं वैश्वानराधिकरणम्। तत्र गुणविधित्वनिरासेन नामधेयत्वे प्रतिपादिते प्रसङ्गाद् गुणविधित्वनिरासेनार्थवादत्वं प्रतिपाद्यते। उदाहरणं तु 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते, यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालो भवति त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो भवति विराजैवास्मिन्नन्नाद्यं दधाति, यदेका-

---

१. 'तदावर्तकत्वा' क.

दशकपालो भवति त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो भवति जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जात एतामिष्टिं निर्वपति पूत एवं स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती'ति वाक्यस्था अष्टाकपालादि-शब्दास्तेषु गुणविध्यर्थवादत्वसन्देहे गुणविधित्वं पूर्वपक्षः। स च द्विविधः। वैश्वानरयागे गुणविधिः, फले गुणविधिरिति च। तत्राद्यमुत्थापयितुमाद्यं सूत्रम् —

## पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये (१–४–१८)

इति।

चतुष्पदम्। तस्यार्थः। ये वैश्वदेवादिशब्दाः पूर्ववन्तो वाक्या-न्तरेण गुणविशिष्टे कर्मणि पूर्वमुत्पन्ने तद्विशिष्टगुणान्तराभिधायिनः ते स्ववाक्यस्थेन गुणेन निराकाङ्क्षे कर्मणि तद्विरुद्धगुणान्तरविधानाशक्तेर-विधानार्थाः स्युः। अष्टाकपालादिशब्दास्तु नैवंविधाः। अतस्तेषां तत्सा-मर्थ्यं स्यात्। तच्छब्दोऽयं[2] प्रकृतिविधानशब्दाद्विधानमात्रं व्यवच्छिद्य परामृशति। अथवा 'वैश्वदेवे विकल्प' इति फलवचनेन विकल्पशब्देन यद्विधानमर्थात् प्रतिज्ञातं तत्परामृशति। एवं ह्युक्तं वार्तिके—'तत्सामर्थ्यमिति च पूर्वप्रकृतयोग्यापेक्षत्वाद्वैश्वदेवपूर्वपक्षातिदेशः' इति। कारणमाह-समाम्नाय इति। निमित्तसप्तमीयम्। एतदुक्तं भवति–अष्टाकपालादिशब्दानां समा-म्नायत्वात् सहोच्चारणत्वात् एकवाक्यगतत्वादिति यावत्। उत्पत्त्युत्पन्न-शिष्टत्वविशेषानवगमाद्वैश्वदेवशब्दस्य पूर्वपक्षे सामर्थ्यं त्रिधानसामर्थ्यं तदेषामस्ति। यस्तूत्पत्तिशिष्टेनोत्पन्नशिष्टस्य बाधस्तत्रोक्तः सोऽत्र नास्तीति। तस्माद्वैकल्पिका एते गुणविधयः स्युरिति॥

---

१. 'व ते' क० २. 'यं वैश्वदेवे' ख.

अथ द्वितीयं सिद्धान्तसूत्रम् —

**गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्तिः (१–४–१९)**

इति ।

त्रयोदशपदम्। तुशब्दो गुणविधित्वं व्यावर्तयति । अत्र 'परार्थत्वाद् गुणाना'मिति पूर्वाधिकरणसूत्रगतेन परशब्देन निर्दिष्टो यागोऽतद्गुणा इति तच्छब्देन परामृष्टः । अष्टाकपालादिशब्दे गुणस्य विधानार्थेऽभ्युपगम्यमाने सति विधीयमानास्तेऽष्टत्वादिगुणा अतद्गुणा अयागगुणा भवेयुः, यागस्य प्रकृतस्य द्वादशत्वावरुद्धत्वेन गुणान्तरानपेक्षत्वात् प्रकृतस्य च सन्निधापकशब्दाभावात् कर्मान्तरस्य च केवलाष्टत्वादिगुणकस्य द्रव्यदेवतासंयोगाभावेन विधातुमशक्यत्वात् । अतो न यागगुणत्वं कथञ्चिदेषां सम्भवति । अयागगुणत्वे को दोष इत्याशङ्क्याह–प्रयोगे स्युरनर्थका इति । यागानङ्गत्वे सति पुरोडाशस्वरूपसम्बद्धाः सन्तः प्रयोगे यागानुष्ठाने निष्प्रयोजनाः स्युः । कुत इत्याह—न हि तं प्रत्यर्थवत्तास्तीति । तच्छब्देनातद्गुणा इति तच्छब्दपरामृष्टयागान्यवाचिना नञा निर्दिष्टस्य पुरोडाशस्य परामर्शः । नहि तं पुरोडाशं प्रति सम्बन्धेऽष्टत्वादीनामङ्गीक्रियमाणे फलतत्साधनासम्बन्धादर्थवत्तास्तीत्यर्थः । अथवा अतद्गुणा इत्यत्र हेतुरयम् । नहि तं द्वादशत्वावरुद्धं यागं प्रत्यष्टत्वादीनामर्थवत्तास्तीत्यर्थः ।

अथ तृतीयमाशङ्कासूत्रम् —

**तच्छेषो नोपपद्यते इति चेत् (१–४–२०)**

इति ।

पञ्चपदम्। पूर्वसूत्रस्थगुणशब्दानिर्दिष्टाष्टत्वादिपरामर्शी तच्छब्दः। इति चेत् पश्यसि न गुणविधिरिति, तर्हि 'यदष्टाकपालो भवती'त्यादिरष्टत्वादिश्शेषो भवन्नष्टत्वादेरविहितत्वेन तत्प्ररोचनानर्थक्यान्नोपपद्यते इति दूषणं स्यात्, तत् परिहर्तव्यमित्यर्थः॥

अथ चतुर्थं परिहारसूत्रम्—

## अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् (१–४–२१)

इति।

चतुष्पदम्। तस्यार्थः—सत्यमष्टत्वादिशेषता नोपपद्यते, तथापि विधानार्थे विधानविषयभूते द्वादशत्वे स्तुत्यर्थत्वेनार्थवादा उपपद्येरन्। कथमष्टत्वादिगतायाः स्तुतेर्द्वादशत्वार्थत्वमत आह—अविभागादिति। अष्टत्वादेर्द्वादशत्वादविभक्तत्वात् ऐकदेशभूतत्वेनतत्रान्तर्गतत्वादित्यर्थः। एतदुक्तं भवति—यद्यप्यष्टत्वादीनामविधेयत्वात् तत्प्ररोचनानर्थिका, तथापि द्वादशत्वस्य विधेयत्वादष्टत्वादिशब्दैरप्यवयवावयविसम्बन्धेन तल्लक्षणया स्तुतिर्भविष्यतीति नार्थवादत्वे कश्चिद्दोष इति॥

अथ पञ्चमं पूर्वपक्षान्तरसूत्रम्—

## कारणं स्यादिति चेत् (१–४–२२)

इति।

चतुष्पदम्। तस्यार्थः—इति चेन्मन्यसे द्वादशत्वस्य स्तुत्यर्थत्वेनोपपत्तिरिति। नैतत्। पूतत्वादेः कारणमष्टत्वादि भविष्यति। अथवा अष्टत्वादेः

---

१. 'स्मात् परि' क, ख, २. 'यक्ते' ग. ३. 'द्वादशार्थत्व' ग. 'त्वस्य त्वविधेय' ख. ५. 'सम्बन्धे तल्लक्षणया' ख.

कारणं पूतत्वादि भविष्यति। कारयितृत्वात्फलं कारणशब्देनोच्यते। एवं च द्वादशत्वावरुद्धेऽपि वैश्वानरयागे पूतत्वादिफलेऽष्टत्वादिविधानाद्गोदोहनादिवत् काम्या एते भविष्यन्तीति ॥

अथ षष्ठं सिद्धान्तसूत्रम् —

**आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो* हि विधीयते (१–४–२३)**

इति।

अष्टपदम्। तस्यार्थः—आनर्थक्यात् प्रतीयमानैकार्थ्याभावप्रसङ्गात् अकारणं पूतत्वाद्यष्टत्वादेरष्टत्वादि वा पूतत्वादेर्भवति। प्रतीयते ह्येकोपक्रमोपसंहाररूपत्वेनैकवाक्यत्वम्। तद्गुणफलसम्बन्धविधौ स्तुत्यर्थत्वायोगाद्बाध्येत। तस्मादकारणत्वम्। इतश्चाकारणत्वमित्याह—कर्तुर्हि कारणानीति। व्यवधारणकल्पनयायं सूत्रावयवो व्याख्येयः। 'गोदोहनेन पशुकामस्य प्रणये'दितिवत् पूतत्वकामस्याष्टाकपालो भवतीत्यादिश्रवणे सति कामिनः कर्तुःकाम्यमानतया सम्बन्धीनि सन्ति पूतत्वादीनि फलत्वात् कर्तुः प्रवृत्तिकारणानि स्युः। तेषां तु 'यस्मिञ्जात एताभिष्टिं निर्वपति पूत एव स' इति समभिव्याहाराद्वैश्वानरेष्टिमात्रसम्बन्धित्वप्रतीतेः कामिपदसम्बन्धाभावेन फलत्वाभावान्न कर्तृप्रवृत्तिकारणत्वमिति। अष्टत्वादौ तु कारणशब्देन विवक्षिते यद्यष्टाकपालं कुर्यादिति कर्तुः प्रवृत्तिविषयतयाष्टत्वादीनि सम्बन्धीनि स्युः ततः समीहितसाधनत्वं विना प्रवृत्तिविषयत्वायोगाद्रात्रिसत्रन्यायेनार्थवादावगतानि पूतत्वादीनि प्रति जनकानि स्युः। विध्य-

---

१. 'नत्वाद्दे' ख. २. 'एते गुणा भविष्यन्ति' ख. ग. * 'र्थोऽत्र' ग. ३. 'क्यार्थं तत्' क. 'क्यत्वात' ख. ४. 'कुतश्च' ग. ५. 'भविष्यती' ग. ६. 'न्धिवमात्र' ख. ग. ७. 'कारणतेति' ग.

श्रवणेन तेषां समीहितसाधनत्वाप्रतीतेर्न पूतत्वादीनि प्रति कारणतास्ती-ति योऽयमिति। ननु पूतत्वादेः फलत्वाभावे किमर्थं सङ्कीर्तनमित्याशङ्का-निराकरणार्थमाह—गुणार्थो हि विधीयत इति। गुणरूपोऽर्थः गुणार्थः, स्तुत्यर्थ इत्यर्थः, निपातानामनेकार्थत्वात्। तस्माच्छब्दार्थे हिशब्दः, यस्मादन्योऽर्थो न सम्भवति। तस्मादुक्तप्रकारः स्तुतिरूपोऽर्थः पूत एवेत्यादिभिर्विधीयते[1] ज्ञाप्यत इत्यर्थः॥

अत्र वैश्वानराधिकरणे षट् सूत्राणि॥

अथ त्रयोदशं तत्सिद्ध्यधिकरणम्। तत्र गुणवादनिमित्तस्यार्थ-वादाधिकरणे वक्तव्यस्याप्यन्यासक्ततयोपेक्षितस्य गुणविध्यर्थवादप्रसङ्गेन निरूपणादधिकरणषट्कसङ्गतिः। उदाहरणन्तु—'यजमानः प्रस्तरः' 'यजमान एककपालः' इति। तत्र नामधेयगुणविध्यर्थवादत्वसन्देहे भिन्नार्थत्वेन प्रसिद्धत्वान्नैकमपीतरस्य नामधेयम्। न चार्थान्तरवचनयोः प्रस्तरयजमानशब्दयोः स्तुत्यर्थत्वं सम्भवति। तस्मादन्यतरकार्येऽन्यतर-विधानाद्गुणविधिरिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम्—

## तत्सिद्धिः (१—४—२४)

इति।

एकपदम्। तस्यार्थः—यथैव नामधेयत्वं न सम्भवति तथैव गुण-विधित्वमपि न सम्भवति, यजमानस्य प्रस्तरकार्ये विनियुक्तस्य प्रस्तरवत् सूक्तवाकेन प्रहरणात् एककपालकार्ये विनियुक्तस्य चैककपालवत् सर्व-हुतकरणात् सर्वतन्त्रपरिलोपापत्तेः, प्रस्तरैककपालयोश्च यजमानकार्ये[2] विनियुक्तयोरचेतनत्वेन याजमानकरणाशक्तेस्तद्विध्यानर्थक्यप्रसक्तेः। तस्मात् 'प्रस्तरमुत्तरं बर्हिषः सादयति', 'सर्वहुतं करोत्येककपाल'मिति विध्य-न्तरयोरर्थवादावेतौ। कथं परशब्देन परस्य स्तुतिरिति चेत्, गुणादिति ब्रूमः।

---

१. 'भिज्ञाप्यत' ख. 'भिज्ञाप्य' ग. २. 'करणेऽपि' ग.

को गुणः? तत्सिद्धिः। कस्तत्सिद्धिशब्दार्थः? उच्यते। तच्छब्दो मुख्य-वचनः। सिद्धिरिति कार्यमुच्यते। ततश्च तस्य मुख्यस्यार्थस्य सिद्धिः कार्य-मस्येति व्यधिकरणबहुव्रीहिणा तत्कार्यकरत्वमुक्तं भवति। तस्माद्यजमानस्य यत्कार्यं यागनिर्वृत्तिः तल्लक्षयित्वा तद्योगिनोः प्रस्तरैककपालयोर्वर्तमानो यजमानशब्दो गौणत्वं भजते, प्रयोजनं च तद्वृत्तयोः कर्मण्यभ्यर्हि-तत्वस्तुतिः इति॥

अत्र तत्सिद्ध्यधिकरण एकं सूत्रम्॥

अथ चतुर्दशं जात्यधिकरणम्। तत्र 'अग्निर्वै ब्राह्मणः' इत्याद्युदाहृत्य गुणविध्यर्थवादत्वे सन्दिह्य लक्षितब्राह्मणादिकार्येऽग्न्यादिगुणविधानं पूर्वपक्षयित्वा पूर्ववद् गुणवादेनार्थवादत्वं सिद्धान्तयितुं सूत्रम्—

## जातिः (१-४-२५)

इति।

एकपदम्। तस्यार्थः—नात्र तत्सिद्धिकरत्वं परशब्दस्य परत्र प्रवृत्तौ निमित्तम्, अपि तु जातिर्जननमेकजातत्वमित्युक्तं भवति। अग्निब्राह्म-णयोर्ह्यर्थवाद एकस्माद्ब्रह्मणो मुखाज्जननं सङ्कीर्तितम्[1]। तस्मादचेतन-स्याग्न्यादेर्ब्राह्मणादिकार्यकरणासामर्थ्यात् 'आग्नेयमष्टाकपालं निर्वपेद्ब्रा-ह्मणो ब्रह्मवर्चसकामः' इत्यादिर्विधिशेषत्वाच्चार्थवाद एवायमुक्ताद् गुणवा-दाद्युक्त इति।

अत्र जात्यधिकरणेऽप्येकं सूत्रम्॥

अथ पञ्चदशं सारूप्याधिकरणम्। तत्र 'आदित्यो यूपः', 'यजमानो यूपः' इत्युदाहृत्य पूर्ववत् सन्देहं कृत्वा लक्षितयूपकार्ये यजमानादिगुण-विधिं पूर्वपक्षयित्वार्थवादत्वं सिद्धान्तयितुं सूत्रम्—

## सारूप्यात् (१-४-२६)

इति।

---

१. 'न्यभिहित' क. २. 'यस्मा' ख.

एकपदम् । तस्यार्थः—अयमपि गुणवाद एव । निमित्तं तु न पूर्वोक्तं किं तु सारूप्यम् । ननु सर्वोऽपि गुणवादः सारूप्यनिमित्तः, तत् कोऽत्र विशेषः । उच्यते । अत्र प्रत्यक्षं सारूप्यम् अन्यत्र तत्सिद्ध्याद्यनुमेयम् । यूपस्य हि यजमानसारूप्यमूर्ध्वत्वम्, आदित्यसारूप्यं चाञ्जननिमित्तं तेजस्वित्वं प्रत्यक्षम्, तन्निमित्तीकृत्य यजमानादित्यशब्दाभ्यां यूपः स्तूयते । अतो यूपस्वरूपविधिशेषोऽर्थवाद एवायमिति ॥

अथ सारूप्याधिकरणेऽप्येकं सूत्रम् ॥

अथ षोडशं प्रशंसाधिकरणम् । तत्र 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति वाक्यमुदाहृत्य पूर्ववद् गुणविध्यर्थवादत्वे सन्दिह्य पशुलक्षितं कार्यमजादिषु नञा प्रतिषिध्यत इति प्रतिषेधविधित्वं पूर्वपक्षयित्वार्थवादत्वं सिद्धान्तयितुं सूत्रम्—

## प्रशंसा (१–४–२७)

इति ।

एकपदम् । तस्यार्थः—पूर्ववदयमप्यर्थवाद एव । गुणवादनिमित्तं त्वत्र प्रशंसा । 'पुरस्तात्प्राचीनमश्वस्योपदधाति पश्चात्प्रतीचीनमृषभस्य' इति गवाश्वविध्यपेक्षितगवाश्वप्रशंसार्थमितरेषां पशूनां निन्दया प्रशस्तत्वाभावोऽपशुशब्देन प्रतिपाद्यते । अन्यत्र गुणवादे प्रशंसा प्रयोजनम्, इह तु निमित्तमपि सैवेति विशेषः ॥

अत्र प्रशंसाधिकरणेऽप्येकं सूत्रम् ॥

अथ सप्तदशं भूमाधिकरणम् । तत्र 'सृष्टीरुपदधाति' इत्यत्र सृष्टिशब्दो गुणविधिरर्थवादो वेति सन्दिह्य, यदुपदधाति तत्सृष्टिरिति सृष्टिलिङ्गका

---

१. 'प्यानु' ख. २. 'पशुशब्द' ख, ग.

मन्त्रा उपधानाङ्गत्वेन विधीयन्ते । तस्माद् गुणविधिरिति पूर्वपक्षे प्राप्तेऽर्थ-
वादत्वं सिद्धान्तयितुं सूत्रम् —

## भूम्ना (१-४-२७)

इति ।

एकपदम् । तस्यार्थः—नायं मन्त्रविधिः, लिङ्गप्रकरणाभ्यां प्राप्तत्वात् । तत्र सर्वेषु मन्त्रेषु प्राप्तेषु सृष्टिविधावन्येषां परिसंख्या स्यात् । ततश्च तदाम्नानानर्थक्यापत्तिः । तस्मादुपधानमेवात्र विधीयते । सृष्टीरिति तु 'यथासृष्टमेवावरुन्धे' इत्यर्थवादोपपत्त्यर्थं लिङ्गप्राप्तमन्त्रानुवादमात्रं विज्ञायते । तर्हि सृष्टिशब्दस्यासृष्टिषु प्रवृत्तिः केन गुणेन? भूम्नेति ब्रूमः । सृष्टिसमुदाये सृष्टिभूमास्ति । सृष्ट्यसृष्टिसमुदायेऽप्यसृष्टीनामल्पत्वात् सृष्टिभूमास्तीति भूमगुणयोगात् सृष्ट्यसृष्टिसमुदाये प्रवृत्तः सृष्टिशब्द इति तृतीयान्तपाठेऽर्थः । प्रथमान्तपाठे तु तत्सिद्ध्यादाविव कः पुनरत्र गुण इत्याशङ्क्य, भूमेत्युत्तरत्वेन योज्यमिति ॥

अत्र भूमाधिकरणेऽप्येकं सूत्रम् ॥

अथाष्टादशं लिङ्गसमवायाधिकरणम् । तत्र 'प्राणभृत उपदधाती' त्युदाहृत्य पूर्ववदेव सन्देहपूर्वपक्षौ कृत्वा सिद्धान्तं वक्तुं सूत्रम्—

## लिङ्गसमवायात् (१-४-२९)

इति ।

एकपदम् । तस्यार्थः—अत्र तल्लिङ्गातल्लिङ्गसमवाये तल्लिङ्गसमवायमात्रात् तच्छब्दप्रवृत्तिरिति प्राणभृद्गणेऽपि प्राणभृत्समवायोऽस्ति । प्राणभृदप्राणभृद्वर्गेऽपि अस्मात् सादृश्यात् प्राणभृदप्राणभृत्समुदाये

---

१. 'नाम्नार्थानुपपत्तिर्नानर्थक्यापत्तिः' ख. २. सृष्टिप्रवृत्तिः' क.

प्राणभृच्छब्दो वर्तते इत्युक्तं भवतीति[1]। न्यायसुधाकारस्तु एतानि षडपि सूत्राणि तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणवादनिमित्तानीति द्वन्द्वसमासाश्रयणेनैकीकृत्य त्रिपदमुदाजहार। एवं च व्याख्यातवान्—प्रकारवाचिनेतिकरणेन तत्सिद्ध्यादिप्रकाराणि गुणवादनिमित्तानीत्युच्यत इति।

अत्र लिङ्गसमवायाधिकरणेऽप्येकं सूत्रम् ॥

अथैकोनविंशमक्ताधिकरणं तत्स्तुत्युपयोगितया प्रतिपादितप्रामाण्यस्यार्थवादस्य सन्दिग्धार्थनिर्णयोपयोगितयापि प्रामाण्यप्रतिपादनार्थत्वात् सङ्गतम्। तत्र 'अक्ताः शर्करा उपदधाति', 'तेजो वै घृत'मित्युदाहृत्य किं घृततैलवसानामन्यतमेनाञ्जनमुत घृतेनार्थवादस्थेनेति सन्दिह्य विध्युद्देशबलीयस्त्वादुपक्रमस्थत्वाच्च येन केनचिदञ्जनप्रतीतेरसञ्जातविरोधित्वेन पश्चाद्भाव्यर्थवादस्थो घृतशब्दोऽञ्जनसमर्थद्रव्यमात्रलक्षणार्थो विज्ञायत-इति पूर्वपक्षमुक्त्वा वैपरीत्यं सिद्धान्तयितुं सूत्रम् —

## सन्दिग्धेषु वाक्यशेषात् (१–४–३०)

इति।

द्विपदम्। तस्यार्थः—अत विधिवाक्यादञ्जनसाधनत्वेन घृततैलवसादिषु सन्दिग्धेषु वाक्यशेषादर्थवादगताद्घृतशब्दान्निर्णयः प्रत्येतव्यः, विधेयस्य सामान्यस्य सर्वविशेषेषु कृत्स्नसमावायित्वेनार्थवादगतेन विशेषेणाविरोधादिति हेतुः सूत्रानुक्तोऽप्युन्नेयः। अथवा 'कल्पनैकदेशत्वा'-दित्युत्तरसूत्रगतपदद्वयापकर्षेणैतसूत्रं योज्यमिति हेत्वनुपादानानुपालम्भः।

---

१. 'ति। अत्र लिङ्गसमवत्याधिकरणेऽप्येकं सूत्रम्। न्यायसुधा' ख. 'ति। अत्र लिङ्गसमवायाधिकरणेऽप्येकं सूत्रम्। अथ एकोनविं' ग, २. 'गुणाश्रया इति द्वन्द्व' ख. ३. 'इत्युच्यते। अत्र' क.

तस्मान्निर्विशेषसामान्यासम्भवादवश्योपादातव्ये कस्मिंश्चिद्विशेषेऽर्थवाद-प्रामाण्याद्धृतविशेषोपादानमदोषाय इति । केचित् तु अस्मिन् सूत्रे सन्दिग्ध-पदमेकवचनान्तं तुशब्दसहितं पठन्ति । अन्ये तु बहुवचनान्तमेव तुशब्द-सहितम्, तदा त्रिपदं सूत्रम् । तुशब्दश्च पक्षव्यावृत्त्यर्थः ॥

अत्रोक्ताधिकरणेऽप्येकं सूत्रम् ॥

अथ विंशत्यधिकरणं तद्विधेरपि सामर्थ्यकल्पितावयवस्य सन्दि-ग्धार्थनिर्णयोपयोगित्वेनापि प्रामाण्यप्रतिपादनार्थत्वात् प्रसङ्गात्सङ्गतम् । तत्र 'स्रुवेणावद्यति', 'स्वधितिनावद्यति', 'हस्तेनावद्यतीति' किमाज्यमांसपुरो-डाशानामविशेषेणावदाने स्रुवस्वधितिहस्ता विधीयन्ते, यथासामर्थ्यं वा व्यवस्था । तथा 'अञ्जलिना सक्तून् प्रदाव्ये जुहोती'ति प्रदाव्यसक्तु-होमे देवताप्रसादनादिष्विव हस्तसंयोगमात्रं अञ्जलिर्विधीयते सामर्थ्या-नुसारेण वाञ्जलिना पिबेदित्यादाविवाक्रोश इति सन्दिह्याविशेषश्रवणा-दनियम इति पूर्वपक्षं कृत्वा सामर्थ्यान्नियमं सिद्धान्तयितुं सूत्रम् —

## अर्थाद्वा कल्पनैकदेशत्वात् (१–४–३१)

इति ।

चतुष्पदम् । वाशब्दः पक्षं व्यावर्तयति । अर्थात् कल्पना स्यात् कल्पनाशब्दोऽत्र व्यवस्थावचनः । सामर्थ्याधीनाज्याद्यवदानादौ स्रुवादे-र्व्यवस्थेत्यर्थः । ननु सामर्थ्यापेक्षत्वे शब्दस्याप्रामाण्यप्रसङ्ग इत्या-शङ्क्याह—एकदेशत्वादिति । शब्दानां ह्यर्थमभिदधतां सामर्थ्यकल्पितै-कदेशापेक्षत्वात् । सामर्थ्यमप्येकदेश एव तस्य च व्यवस्थितत्वाद्व्यवस्था युक्ता ।

---

१. 'कस्मा' ख. २. 'समान्यसम्भ' ख. ३. 'श्च पूर्वपक्ष' ख. ४. 'सङ्गतिः' ग. ५. 'प्रादाव्ये' ग. ६. 'दं तस्यार्थः । वाशब्दः' ग.

तस्मात् स्रुवेणावदानं द्रवस्यार्थाद् भविष्यति ।
संहतस्य स्वधितिना हस्तेन[1] कठिनस्य च ।

प्रदान्य सक्तुहोमार्थस्तथा कोशात्मकोऽञ्जलिः ॥
न हस्तसंयोगमात्रं व्यवस्था गम्यतामिति ॥

अत्रार्थाधिकरणेऽप्येकं सूत्रम् ॥

इति श्रीमदृषिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे प्रथमस्याध्यायस्य
चतुर्थः पादः समाप्तः ।

---

१. 'ना' ख.

## ॥ अथ द्वितीयोऽध्यायः ॥

अजमुखदेवैः प्रणते
　　माये! मधुकैटभारिबोधकरे।
दुर्गे! भगवति! दुर्गे
　　पथि नः परिपन्थिसङ्कुले पाहि[1] ॥

अथ द्वितीयस्याध्यायस्य प्रथमे पादे

### प्रथमं प्रतिपदाधिकरणम्।

---

तस्यायं सङ्गतिप्रकारः—

प्रामाण्ये प्रतिपादिते पृथगिति प्राचि श्रुतेः सस्मृते-
　　रध्याये विधितत्स्तुतिस्मरणनामात्मोपयोगोक्तितः।
भेदः कर्मगतः प्रपञ्च्यत इह प्रायो द्वितीयेऽधुना
　　पादैर्मुख्यतयान्तिमैस्त्रिभिरुपोद्धातादिरूपोऽग्रिमः ॥

तत्रास्मिन्नभिधीयतेऽधिकरणे धर्मे पुरस्तात्स्थितं
　　विध्युद्देशगतं किमु प्रतिपदं प्रामाण्यमाश्रीयताम्।
यद्वैकस्य पदान्तरैः सह कृतस्यादौ फलेनान्वित-
　　स्योज्झित्वैव विशेषहेतुनियमं यस्यापि कस्य त्विति ॥

तदयमत्र पूर्वपक्षः—अगृह्यमाणविशेषतया सर्वेषां पदानां फलपदस-म्बन्धयोग्यत्वादेकं फलपदसम्बन्धि तत्सम्बन्धीनीतराणीति[3] च कल्पनायां

---

१. 'हि द्वि' ख. २. 'क' ख. ३. 'ति कल्पनया वा' ग.

वाजपेयाधिकरणन्यायेन वैरूप्यनिमित्तवाक्यभेदप्रसङ्गात् सति च संभवे सर्वेषां प्रधानसम्बन्धस्यैव युक्तत्वात् प्रत्येकं फलपदसम्बन्धद्वारा धर्मबोधकत्वमेव न्याय्यमिति। तमिमं पूर्वपक्षं प्रतिक्षेप्तुमिदं सिद्धान्तभाष्यं-'यदैकस्मादपूर्वं तदेतरत्तदर्थं स्या'दिति। तस्यार्थः- यदैकस्मात्पदात्फलपदसम्बन्धिनः फलसाधनत्वलक्षणधर्मबोधकादन्यथानुपपत्त्यापूर्वं [1]गम्यते तदेतरत् पदं तदर्थं तस्य पदस्यानुग्रहवृत्त्या शेषभूतमेव स्यान्न तद्वत्स्वतन्त्रमिति न सर्वेभ्योऽपूर्वकल्पना युक्तेति। एतदुक्तं भवति-धात्वर्थस्यैव फलसाधनत्वे नामार्थस्य तन्निष्पादकत्वेन नामार्थस्यैव वा तत्त्वे धात्वर्थस्य तदाश्रयतया ताद[2]र्थ्यसम्भवेनानेकादृष्टकल्पनाभावादेकस्यैव फलसाधनतयापूर्वहेतुत्वात्मकं धर्मप्रामाण्यं युक्तं नेतरेषामिति ॥

अत्र प्रतिपदाधिकरणे सूत्रानुमितिरेव न पृथक् सूत्रम् ॥

अथ द्वितीयं भावार्थाधिकरणम्। तच्च लक्षणार्थस्य कर्मभेदविचारस्योपोद्घाततयावतीर्णम्। प्रतिपदाधिकरणं [3]तु अस्याप्यधिकरणस्योपोद्घातो द्रष्टव्यः। तत्र प्रतिपदाधिकरणेनैकस्यैव पदस्य फलपदसम्बन्धः, तदर्थस्यैव फलसाधनतया धर्मत्वं, तस्मादेकमपूर्वमिति साधिते, तद्विशेषनिर्धारणार्थमत्रेदं चिन्त्यते—किं तदेकस्य फलपदसम्बन्धित्वं द्रव्यगुणशब्दानामुताख्यातशब्दस्येति। तत्र चायं पूर्वः पक्षः-आकाङ्क्षानिबन्धनो हि फलपदसम्बन्धः। यथा चाख्यातशब्दात् फलाकाङ्क्षोत्पद्यते एवं द्रव्यगुणशब्देभ्योऽपि करणविभक्त्यन्तेभ्यः साध्याकाङ्क्षोत्पत्तेरविशेषात्फलस्य च साध्यत्वेन सिद्धरूपसाधनापेक्षत्वान्नामार्थस्य च सिद्धत्वेन तदपेक्षापूरणसमर्थत्वान्नाम्न एव फलपदान्वयिनोऽपूर्वगमकत्वं

---

१. 'गमिते' ग. २. 'र्थ्या' ख. ३. 'तु अस्याधि' ख. 'चास्याधि' ग.

युक्तं नाख्यातस्येति । इमं चोत्सूत्रं पूर्वपक्षं प्रतिक्षेप्तुमाद्यमिदं सिद्धान्तसूत्रम् ।

**भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते (२-१-१)**

इति ।

नवपदम् । तत्र तच्छब्दाक्षिप्तो यच्छब्दो द्रष्टव्यः । ये भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतेति भवत्यर्थकर्तृप्रयोज्यविषयः प्रयोजकव्यापारो भावना भावशब्देनोक्ता, साभिधेया येषां शब्दानां ते भावार्थाः, कर्मणो यागदानादेर्धात्वर्थस्य वाचका[1]: शब्दाः कर्मशब्दाः[2]। अनेन पदद्वयेन भागद्वयार्थकथनद्वारा आख्यातोपलक्षणं कृतम् । अत आख्यातपदेभ्यः प्रत्ययांशेन भावनां प्रकृत्यंशेन धात्वर्थं चाभिदधद्भ्यः फलपदान्वयिभ्यो धात्वर्थस्य फलभावनाकरणत्वावगतिद्वारा अपूर्वस्य क्रिया प्रतीयेत न द्रव्यगुणशब्देभ्यस्तद्विलक्षणेभ्य इत्यर्थः[3] स्यात् । एतदुक्तं भवति । यत आख्यातशब्दा धात्वर्थानुरक्तभावनावाचित्वाद्धात्वर्थसम्बद्धां फलस्योत्पत्तिं वदन्ति, अतः प्रत्यासत्तेर्धात्वर्थस्यैव[4] करणत्वावगतिरेकपदोपादानश्रुत्या युक्ता न व्यवहितस्य नामार्थस्य वाक्येन इति । नन्वेकप्रत्ययोपात्ताया भावनाया एव विध्यन्वयात् फलसम्बन्धेऽवगते करणाकाङ्क्षायां प्रत्यासन्नमप्यनिष्पन्नत्वेनायोग्यं धात्वर्थमपहाय नामार्थस्यैव करणत्वावगतेः कुतो धात्वर्थस्य करणत्वसिद्धिरत आह—एष ह्यर्थो विधीयत इति । हिर्हेतौ । यतो यथा धात्वर्थस्यैव फलं प्रति करणत्वेनान्वयसिद्धिर्न नामार्थस्य । एष तदनुगुण एवार्थोऽत्र विधीयते यागेन स्वर्गं भावयेदिति, न तद्विरुद्धं, द्रव्येण गुणेन वा स्वर्गं भावयेदिति । तस्मात्तेभ्यः क्रिया प्रतीयेतेति सम्बन्धः । ततश्च प्रकृतिप्रत्ययपौर्वापर्यनियमाच्छुद्धभावनानवगतेर्धात्वर्थानुरक्ताया

१. 'र्थः कः' ग. २. 'काः कर्मशब्दाः' ग. ३. 'इत्यर्थः ए' ख, ग. ४. 'स्यैव' ग.

एव फलोद्देशेन विधीयमानत्वात्प्रत्ययासत्त्या धात्वर्थस्यैव विधिगम्यं करणत्वं न नामार्थस्य, तस्य कर्मगत्वेन निर्दिष्टस्यापि क्रियामात्राकाङ्क्षित्वेन भाव्यानपेक्षित्वात्फलं प्रति करणत्वानुपपत्तेरित्यभिसन्धिः सिद्धो भवति। तस्मादाख्यातातिरिक्तानां भावार्थत्वाभावान्नापूर्वार्थत्वमिति ॥

अथ द्वितीयं परिचोदनासूत्रम् —

## सर्वेषां भावोऽर्थ इति चेत् (२–१–२)

इति।

पञ्चपदम्। तस्यार्थः– इति चेत्पश्यसि द्रव्यगुणशब्दानां भावार्थत्वाभावान्नापूर्वार्थत्वमिति। तन्न। सर्वेषामपि शब्दानां भाव एवार्थः न केवलमाख्यातशब्दानाम्। ततश्च द्रव्यगुणशब्दानामपि भाव एवार्थ इति सिध्यति। तच्च नाख्यातप्रत्ययांशवत् साक्षात्किन्तु धात्वंशवत्प्रत्ययसम्बन्धद्वारा। धातोर्हि प्रत्ययनिरपेक्षस्य भावनावाचित्वाभावात्प्रत्ययान्वयद्वारा भावनानुरञ्जकस्वार्थत्वलक्षणं भावार्थत्वं वाच्यम्। तच्च नाम्नोऽपि श्येनेन कुर्यादित्यादिप्रत्ययान्वयोपपत्तेः समम्। तस्मात्प्रत्ययसाकाङ्क्षत्वाविशेषाद् धातुवद्द्रव्यादिशब्दा अपि भावार्था इति तदर्थस्यापि धात्वर्थवत्फलकरणत्वसिद्धिः। ननु सर्वेषां भावार्थत्वेऽपि कर्मशब्दत्वाभावात्कथमपूर्वार्थत्वम्? उच्यते। कर्मशब्दस्यापि भावनानुरञ्जकस्वार्थवाचित्वादपूर्वाभिधायित्वम्। तच्च नाम्नामपि समानमित्यभिसन्धिः ॥

अथ तृतीयचतुर्थाभ्यां सूत्राभ्यां नामधातुवैषम्यप्रदर्शनेनास्य चोद्यस्य परिहार उच्यते। तत्र तृतीयम् —

## येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात्स्वे प्रयोगे (२–१–३)

इति।

---

१. 'कर' ख. ग. २. 'नपेक्षत्वात्' ग.

चतुर्दशपदम् । अनेन नामस्वरूपकथनमुखेन नाम्नः फलपद-सम्बन्धे नामार्थस्य सिद्धत्वेन साधनापेक्षत्वात्तत्र धात्वर्थस्य दृष्टेनोपकारित्वासम्भवादनेकादृष्टकल्पनाप्रसङ्गः प्रदर्श्यते । तदयमर्थः—येषां शब्दानामुच्चारणोत्पत्तौ स्वे प्रयोगे, प्रयुज्यतेऽस्मिन् शब्द इति प्रयोगोऽर्थः, प्रयुज्यमानशब्दविषयभूते स्वकीयेऽर्थे, रूपोपलब्धिर्निष्पन्नरूपत्वज्ञानं तानि नामानि ते द्रव्यगुणशब्दा इत्यर्थः । 'सत्त्वप्रधानानि नामानी'ति नाम्नां सिद्धार्थत्वस्मृतेस्तत्पर्यायत्वेन द्रव्यादिशब्दानां सिद्धार्थत्वं दर्शयितुं नामग्रहणं कृतम् । एवं नामस्वरूपमुक्त्वा ततोऽभिमतां तदर्थस्य करणत्वासिद्धिं दर्शयन्नाह—तस्मात्तेभ्यः पराकाङ्क्षेति । यस्मादेवं सिद्धार्थानि नामानि तस्मात्तेभ्यो नामपदेभ्यः स्वार्थनिष्पादकत्वेन धात्वर्थं प्रत्याकाङ्क्षा परा दूरभूता नास्त्येवेत्यर्थः । तमेव तस्मादित्युक्तं हेतुं स्फोरयति—भूतत्वात्स्वे प्रयोग इति । स्वरूपकथनार्थमुक्तादेव स्वीये प्रयोगे प्रयोगविषयीभूतेऽर्थे निष्पन्नरूपत्वापरपर्यायाद्भूतत्वादित्यर्थः ।

एवं नाम्नः फलपदान्वये तदर्थस्य धात्वर्थानपेक्षामुक्त्वा धातोः फलपदान्वये तदर्थस्य नामार्थेऽपेक्षां दर्शयितुं चतुर्थं सूत्रम् —

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य (२–१–४)**

इति ।

पञ्चदशपदम् । तुशब्दो विशेषद्योतनार्थः । येषां पुनः शब्दानामुच्चारणोत्पत्तौ स्वे[1]ऽर्थे प्रयोगो न विद्यते । निषेधस्य विशेषणविषयत्वात् प्रयोगकाले[2]ऽर्थो न विद्यत इत्युक्तं भवति । विशेष्यविषयत्वे तूच्चारणोत्पत्तौ प्रयोग उच्चारणं न विद्यत इति व्याहतिः स्यात् । अथवा निष्पन्नरूप इत्यर्थ-

---

१. 'स्व' ख. 'स्वे प्रयो' ग. २. 'कालोऽर्थो' ग.

विशेषणं द्रष्टव्यम्। ततश्च विशेष्य एव निषेधो भविष्यति। तान्याख्यातानि। ते कर्मशब्दा इत्यर्थः। 'भावप्रधानमाख्यात'मित्याख्यातानां भावार्थत्वस्मृतेस्तत्पर्यायत्वेन कर्मशब्दानां साध्यार्थत्वं दर्शयितुं आख्यातग्रहणं कृतम्। यस्मादेवमन्योत्पादानुकूलस्वार्थाभिधायित्वेनानिष्पन्नार्थत्वमाख्यातानाम्, तस्मात् तेभ्यः फलपदान्वयिभ्योऽपूर्वस्य क्रिया प्रतीयेत न नामपदेभ्यः। ततश्च भूतानां नामार्थानां भव्यधात्वर्थता सिद्धा भवतीति भावः। अत्रैव हेत्वन्तरमाह—आश्रितत्वात् प्रयोगस्येति। प्रयुज्यतेऽनुष्ठीयत इति प्रयोगो धात्वर्थः। बह्वदृष्टकल्पनाभावेन विशेषेण धात्वर्थस्य पुरुषेण फलवत्त्वसिद्धावाश्रितत्वादित्यर्थः। अथवा प्रयुज्यतेऽस्मिञ्छब्द इति प्रतिपाद्योऽर्थः प्रयोगः। आख्यातानां ह्येकपदोपादानश्रुत्या प्रतिपाद्यस्य धात्वर्थोपरक्तभावनाख्यस्यार्थस्य पुरुषेणाश्रितत्वं भवति न वाक्यगम्यभावनान्वयस्य नामार्थस्य। तस्मादप्याख्यातेभ्योऽपूर्वं प्रतिपत्तव्यमिति॥

अत्र भावार्थाधिकरणे चत्वारि सूत्राणि॥

अथ तृतीयमपूर्वाधिकरणम्। तत्र पूर्वाधिकरणेनापूर्वं सिद्धं कृत्वा तत्प्रतिपादकशब्दविशेषे विचारिते तस्यास्तित्वमेवासिद्धमिति तत्प्रतिपादनं क्रियते। तच्चैवं—किमत्र यागस्वर्गव्यतिरिक्तमपूर्वं नाम वस्त्वन्तरमस्ति उत नास्तीति सन्दिह्य वस्त्वन्तरकल्पने श्रुतयागस्वर्गसाध्यसाधनत्वविरोधाद्विनष्टमेव कर्म फलं साधयतीति वा, फलं यावदवतिष्ठत इति वा शास्त्रप्रामाण्यादवसेयं नाशास्त्रीयमपूर्वमिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुमिदं सूत्रम् —

## चोदना पुनरारम्भः (२–१–५)

इति।

---

१. 'ध्यविषय' ग. २. 'भवति' ख. ३. 'ध्यत्वं' ग, ४. 'वसि' क.

त्रिपदम् । पुनःशब्दः शङ्कानिरासार्थः । चोद्यते श्रुतयागस्वर्गसाधनत्वान्यथानुपपत्त्याक्षिप्यत इति चोदना अपूर्वम् । आरभ्यतेऽनुष्ठीयते पुरुषेणेति[1] वा आरभ्यते फलमनेनेति वारम्भो यागः । तत्र चोदनेति प्रतिज्ञानिर्देशः । आरम्भ इति हेतुवचनः । उभयत्राप्य'स्तिर्भवन्तीपर' इत्यस्तीति लभ्यते । तेनायमर्थः—चोदनाभिधानमपूर्वमस्तीति ब्रूमः । यत आरम्भाभिधानो यागोऽस्ति विहितः । यागविधिरेवापूर्वस्यापि विधिरित्युक्तं भवति । कथमन्यस्य विधिरन्यस्य विधिरिति चेत्– श्रूयताम् । यागेन स्वर्गं भावयेदिति यागस्य फलकरणत्वप्रतिपादकं वाक्यमेवापूर्वावान्तरव्यापारवदित्यन्यथानुपपत्तिकल्पितेनैकदेशेन सहितमपूर्वस्यापि विधायकं भवति । विनष्टस्य तु कर्मणः फलसाधनत्वं अन्यत्रादृष्टं कल्प्यते । अवस्थानं च क्षणिकस्य तस्य प्रमाणविरुद्धमेव । तस्मादस्त्येवापूर्वं यागस्य शक्तिरवान्तरव्यापारो वा । न हि शक्त्यावान्तरव्यापारेण वा व्यवधिरकारणतामापादयति । अतः श्रुत्यनुमतत्वादपूर्वक्लृप्तेर्न श्रुतिविरोधोपलम्भ इति ॥

अत्रापूर्वाधिकरण एकं सूत्रम् ॥

अथ चतुर्थं तानि द्वैधाधिकरणम् । तत्रानन्तराधिकरणेनापूर्वस्यास्तित्वे तदनन्तराधिकरणेनाख्यातगम्यत्वे च तस्याभिहितेऽर्थादाख्यातभेदानुसार्यपूर्वभेदानुसरणं कर्तव्यमिति यदवस्थितं तस्यापवादार्थमिदं विचार्यते— किं सर्वेभ्यो भावशब्देभ्योऽपूर्वमुत केभ्यश्चिदेव यजतिददातिजुहोत्यादिभ्यः नावहन्तिपिनष्टिप्रभृतिभ्य इति । तत्र सर्वेभ्योऽपूर्वकल्पनं न्याय्यम् । तथा सति साध्यभूताद्धात्वर्थादेव तत्क्लृप्तं भवति । तत्र भूतस्य द्रव्यस्य भव्यधात्वर्थनिर्वृत्त्या दृष्टार्थत्वं स्यात् । तस्मात् प्रधानमेव व्रीह्यादि प्रत्यवघातादि न संस्कारकर्म इति सर्वे भावशब्दाः प्रधानकर्मवाचित्वादपूर्वार्था इति पूर्वपक्षे प्राप्ते प्रथमं सिद्धान्तसूत्रम्—

---

१. 'ति वारम्भो' क. २. 'कारणत्व' ग.

## तानि द्वैधं गुणप्रधानभूतानि (२–१–६)

इति ।

त्रिपदम् । तत्र तच्छब्दो 'येषां तूत्पत्ता'विति सूत्रे[1] प्रकृताख्यातपरामर्शकः[2] । तान्याख्यातानि द्वैधं भवितुमर्हन्ति । द्वैविध्यमेवाह—गुणप्रधानभूतानीति । कानिचिद्गुणभूतानि गुणकर्मणोः वाचकानि, यथा अवहन्ति पिनष्टि विलापयन्तीति[3] । कानिचित् प्रधानभूतानि प्रधानकर्मणोर्वाचकानि—यजति ददाति जुहोतीति । तत्र पूर्वेभ्यो दृष्टव्रीह्यादिसंस्कारकर्मवाचिभ्यो नापूर्वम्, उत्तरेभ्यस्तु फलभावनाकरणाभिधानद्वारा अपूर्वं कल्प्यत एवेति न सर्वेषामपूर्वार्थत्वमाख्यातानामिति[4] । एवं गुणप्रधानकर्मवाचित्वेनाख्यातद्वैविध्येऽभिहिते, किं तदपूर्वसाधनं प्रधानकर्म किं वा तदसाधनं गुणकर्मेति विनिर्गमनहेत्वभावात् सर्वेषां प्रधानकर्मतया अपूर्वसाधनत्वे प्रसक्ते विनिर्गमनहेत्वभिधानार्थं सूत्रद्वयम् । तत्राद्यं प्रधानकर्मवाचित्वेनापूर्वार्थत्वं वक्तुं प्रधानकर्मलक्षणपरं सूत्रम्—

## यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् (२–१–७)

इति ।

अष्टपदम् । तस्यार्थः—यैराख्यातवाच्यैः कर्मभिः द्रव्यं न चिकीर्ष्यते न संस्कर्तुमुत्पादयितुं वेष्यते तानि प्रयाजादिकर्माणि प्रधानभूतानि । कारणमाह—द्रव्यस्य गुणभूतत्वादिति । द्रव्यस्य तानि प्रति निष्पादकतया गुणभूतत्वात् । द्रव्यकर्मणोर्ह्येकस्य गुणभावः प्रधानभावो

१. 'सूत्र' क, ग. २. 'मर्शः' ख. ३. 'यन्तीति' क,ग. ४. 'माख्यातार्थकरत्व' क. ५. 'गमहे' ख. ६. 'गमहे' ख.

वान्यं प्रति भवन्नन्यस्य तं प्रति प्रधानभावं गुणभावं वानापादयन्न घटते। तस्मात् तानि प्रधानकर्माणि, तद्वाचकत्वाच्चाख्यातान्यपि प्रधानभूतान्युपचर्यन्त इति ॥

अथ तृतीयं द्रव्यशेषत्वेन दृष्टार्थत्वं वक्तुं गुणकर्मलक्षणपरं सूत्रम् —

**यैस्तु द्रव्यं चिकिर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात्** (२–१–८)

इति।

नवपदम्। तुशब्दो विशेषद्योतनार्थः। यदि[2] पूर्वसूत्रेऽपि तुशब्दः पठ्यते तदा स द्वैविध्याभावशङ्कानिरासार्थो व्याख्येयः। उभयत्रापि वा विशेषद्योतनार्थत्वमेव द्रष्टव्यम्। यैः पुनः कर्मभिर्द्रव्यं चिकीर्ष्यते उत्पाद्यते वाप्यते विक्रियते वा 'अग्नीनादधीत, ऋत्विजो वृणीते, व्रीहीनवहन्ती'त्यादिभिः तत्र तेषु गुणः प्रतीयेत। भावप्रधानो निर्देशः गुणत्वं गुणकर्मत्वं प्रतीयेतेति। कुत इत्याह—तस्य द्रव्यप्रधानत्वादिति। यैरिति बहुवचननिर्दिष्टानि कर्माण्येकीकृत्य एकवचनेन तस्येति परामर्शः, सर्ववचनार्थं वा तस्य तस्येति वीप्सालोपो द्रष्टव्यः। तस्य सर्वस्य कर्मणो द्रव्यप्रधानत्वात्, द्रव्यं प्रधानं यस्य तद्द्रव्यप्रधानं, तत्त्वात् प्रयोजनवद्द्रव्यसंस्कारार्थत्वादित्यर्थः। एवं गुणप्रधानकर्मणोर्लक्षणसद्भावाद्विनिगमनहेत्वभावासिद्धेस्तद्वाच्याख्यातद्वैविध्योक्तिर्नानुपपन्ना इति ॥

अत्र तानि द्वैधाधिकरणे त्रीणि सूत्राणि ॥

---

१. 'णीति त' ग. २. 'दि तु' क, ग. ३. 'परामृशति' ग. ४. 'सर्वेक' ख, ग. ५. 'जनद्र' ख, ग.

अथ पञ्चमं धर्ममात्राधिकरणम्। तत्र पूर्वाधिकरणेनाख्यातद्वैविध्यं प्रतिज्ञाय तत्प्रदर्शनार्थं प्रधानगुणकर्मलक्षणद्वये सूत्रद्वयेनोक्ते प्रधानकर्मलक्षणस्यातिव्याप्तिं गुणकर्मलक्षणस्याव्याप्तिं चाशङ्क्य तयोर्निरासः क्रियते। उदाहरणन्तु 'स्रुचः संमार्ष्टि', 'परिधीन् संमार्ष्टि', 'अग्नीन् संमार्ष्टि', 'पुरोडाशं पर्यग्निकरोती'ति। तेषु किं द्वितीयायाः साध्यवाचित्वमेव वाथ साधनवाचित्वमपीत्यनवधारणाद्गुणप्रधानकर्मत्वे सन्दिह्य पूर्वपक्षं वक्तुं आद्यं सूत्रम्—

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् (२–१–९)**

इति।

षट्पदम्। तुशब्दोऽवहन्त्यादिवैलक्षण्यार्थः। एवंजातीयके संमार्गादिरूपे दृष्टप्रयोजनापर्याप्ते धर्ममात्रे श्रूयमाणे कर्म प्रधानं स्यान्न गुणः। कुत इत्याह—अनिर्वृत्तेरिति। एवंजातीयकेन कर्मणा दृष्टस्य द्रव्योपकारस्यानिर्वृत्तेर्द्रव्यस्य कर्मनिर्वृत्तिलक्षणोपकारजनकत्वाच्चेत्यर्थात् सिध्यति। दृष्टान्तमाह—प्रयाजवदिति। यथा प्रयाज आत्मना द्रव्योपकारानिर्वृत्तेर्द्रव्येण चात्मोपकारानिर्वृत्तेः प्रधानकर्म तद्वदित्यर्थः॥

अथ द्वितीयं सिद्धान्तसूत्रम्—

**तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् (२–१–१०)**

इति।

पञ्चपदम्। वाशब्दः पक्षं व्यावर्तयति। समानो धर्मो यस्य तत्(सः) सधर्मः। इदं संमार्गादिकर्मेतरैरवहन्त्यादिकर्मभिः समानधर्मः स्यात्। यथा-

---

१. 'गुणः कर्म। कुतः' क, ग. २. 'अत्र दृष्टा' ग. ३. 'निर्वृत्तेः प्रधानकर्म तद्वदित्यर्थात् द्रव्येण चात्मोपकारानिर्वृत्तेः प्रधानकर्म, तद्वदित्यर्थः'. ख.

अवहन्त्यादीनि गुणकर्माणि तथैवंजातीयकमपीत्यर्थः। कारणमाह— तुल्यश्रुतित्वादिति। तुल्या द्वितीयाश्रुतिर्येषां द्रव्येषु तानि कर्माणि तुल्यश्रुतीनि। 'व्रीहीनवहन्ती'त्यादाविव 'स्रुचः संमार्ष्टी'त्यादावपि द्रव्यगता द्वितीयाविभक्तिस्तुल्या यतः, अतोऽवहननादिवत् संमार्जनाद्यपि गुणकर्मैव स्यात्। दृष्टादृष्टार्थत्वे तु विशेषः। उभयत्रेप्सिततमवाचिन्या[1] द्वितीयया द्रव्यप्राधान्यद्वारेण क्रियाशेषत्वप्रतिपादनात्। तस्माच्छ्रुत्यादय एव सर्वत्र तादर्थ्यलक्षणशेषत्वप्रमाणानि[2] न द्रव्यचिकीर्षा, उपकारलक्षणशेषत्वप्रसङ्गात्। ततश्च हन्त्यादिषु दृष्टार्थत्वेन नैराकाङ्क्षयान्नापूर्वभेदः प्रातिपत्तव्यः, संमार्गादिषु तु दृष्टार्थत्वाभावेन गुणकर्मत्वेऽप्यपूर्वमस्त्येवेति विशेषः॥

अथ तृतीयं परिचोदनासूत्रम्—

## द्रव्योपदेश इति चेत् (२-१-११)

इति।

त्रिपदम्। तस्यार्थः—इति चेत्पश्यसि द्वितीयाश्रुतेः प्राधान्यं द्रव्यस्येति, तन्न। गुणभूतद्रव्योपदेशेऽपि द्वितीयाविभक्तिर्दृश्यते 'सक्तून् जुहोती'ति। न च स्मृतिवशाद्द्वितीयायां[3] ईप्सिततमार्थत्वनियमः[4]। प्रयोगविरोधे तन्मूलायाः स्मृतेर्दुर्बलत्वात्। अतोऽनैकान्तिकी प्राधान्ये द्वितीया, सा कथं शेषत्वप्रमाणं भवति। तस्मादन्वयव्यतिरेकाभ्यामुपकारलक्षणमेव शेषत्वमिति मन्यते। अथवा प्रथमान्त एवायं द्रव्योपदेश[5] इति। सत्यामपि द्वितीयायां द्रव्यस्य कर्मणि गुणत्वेनोपदेश इत्यर्थः॥

---

१. 'तमकर्म' ग. २. 'प्रमाणानि द्रव्य' क. ३. 'यामी' क. ४. 'तार्थत्व' ख. ५. 'द्रव्यापदेश' ग.

अथ चतुर्थं परिहारसूत्रम् —

न तदर्थत्वाल्लोकवत्तस्य च
शेषभूतत्वात् (२-१-१२)

इति ।

पदपदम् । तत्र न 'स्रुचः संमार्ष्टी'त्यत्र 'सक्तून् जुहोती'त्यत्रेव गुणभूत-द्रव्योपदेशे द्वितीयेति नञा प्रतिज्ञायते । कुत इत्यपेक्षायां द्वयोर्वैषम्यप्रदर्शनार्थं हेतुद्वयमुक्तम्—तदर्थत्वात् तस्य च शेषभूतत्वादिति । तत्राद्यो होमवैषम्यप्रदर्शनार्थः । तत्र तच्छब्देन सूत्रद्वयव्यवहितस्यापि 'धर्ममात्रे तु कर्मे'ति सूत्रगतस्य कर्मणः परामर्शः । निष्प्रयोजनत्वेन सक्तूनां द्वितीयानिर्देशेऽपि होमाख्यकर्मशेषत्वाद्वैपरीत्ये विधिवैयर्थ्येन वाक्यानर्थक्यप्रसङ्गाच्चेत्यर्थः। ततश्च वाक्यानर्थक्यपरिहाराय सक्तुभिर्जुहोतीति विनियोगभङ्गेन पदमात्रस्यावयवार्थत्यागो युक्तः सक्तून् जुहोतीत्यत्र । 'स्रुचः संमार्ष्टी'त्यत्र तु नैवमिति तद्वैषम्यप्रदर्शनार्थं हेतुमाह—तस्य च शेषभूतत्वादिति । अत्र तच्छब्देन विषयवाक्यगतस्य स्रुगादेः परामर्शः । तस्य[3] स्रुगादेर्यागादिषु शेषभूतत्वाच्च, ततश्च प्रयोजनवत्त्वात् तत्संस्कारः संमार्गादिभिः क्रियमाणो नानर्थकः। ननु संमार्गादेः दृष्टोपकारजनकत्वाभावात्कथं संस्कारकर्मत्वमित्याशङ्क्य दृष्टान्तेनोपपादयति— लोकवदिति। यथा लोके शिष्टाचाराददृष्टोपकारजनका अपि संस्कारा दृश्यन्ते ग्रामान्तरादागतानामग्निलवणदध्यक्षतादिभिः शिरस उपरि भ्रामणादयः, एवमेतेऽपि भविष्यन्ति । तस्माददृष्टार्थानामपि तुल्यश्रुतित्वात्सिद्धं संस्कारकर्मत्वम् । न च क्वचिद्गुणभूते प्रयोगदर्शनाद् द्वितीयायाः सर्वत्र स्वार्थप्राधान्यार्थबाधः । प्रयोगस्याचार-

---

१. 'तद्वित' क. २. 'त्र तु त' क. ३. 'तत्र' ग. ४. 'भ्रमणा' क.

रूपस्य स्मृतिविरोधे दौर्बल्यस्य पूर्वमेव स्थितत्वात्। तस्मात् संमार्गादीनामदृष्टार्थत्वेऽपि तुल्यश्रुतित्वाद्गुणकर्मतैवेति' ॥

अत्र धर्ममात्राधिकरणे चत्वारि सूत्राणि ॥

अथ षष्ठं स्तुतशस्त्राधिकरणम्। तत्र 'आज्यैः स्तुवते', पृष्ठैः स्तुवते, 'प्रउगं शंसति', 'निष्केवल्यं शंसती'त्यादिवाक्यविहितानि स्तोत्रशस्त्राण्युदाहृत्य तेषां गुणप्रधानत्वे सन्दिह्य देवतां प्रति गुणभूतानि, तत्प्रकाशनार्थत्वादिति पूर्वपक्षं वक्तुमाद्यं सूत्रम् —

## स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् (२-१-१३)

इति।

पञ्चपदम्। तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः। स्तुतं स्तवनम्, शस्त्रं शंसनं तयोः संस्कारः संस्कारापरपर्यायं गुणकर्मत्वं देवतां प्रति प्रतीयेत, न प्रधानकर्मत्वम्। कुत इत्याह— देवताभिधानत्वादिति। अभिधानशब्दोऽयं कर्तरि नन्द्यादिपाठकल्पनया द्रष्टव्यः। ततश्च देवताभिधानत्वाद्देवताया अभिधायकत्वात् कर्मसमवेतदेवताप्रकाशनार्थत्वादित्यर्थो भवति। गुणगुणिसङ्कीर्तनात्मकं हि स्तवनम्। शंसनं चाभिधानम्। तच्च गुणिनी देवता कथं प्रकाशयेतेत्येवमर्थं क्रियते। देवताप्रकाशनस्य च क्रतूपयोगि दृष्टमेव प्रयोजनम्। तस्मात् स्तुतशस्त्रयोः संस्कारकर्मत्वेन दृष्टार्थत्वे सम्भवति न प्रधानकर्मत्वेनादृष्टार्थत्वकल्पना युक्ता। अत्रैव दृष्टान्तमाह—याज्यावदिति। याज्याशब्दः पुरोनुवाक्यामपि लक्षयति। प्रसिद्धं तयोर्देवता-

---

१. 'ति गुणभूते'। अत्र ग. २. 'देवतयाभि' ग. ३. 'अर्थां' ख.

प्रकाशनार्थत्वं सिद्धान्तिनोऽपि इति तद्दृष्टान्तेनैतयोरपि तदर्थत्वं साध्यत इति ॥

अथ द्वितीयं प्रमाणविरोधेनेमं पक्षं दूषयितुं[1] सूत्रम् —

**अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् (२-१-१४)**

इति ।

षट्पदम् । तुशब्दः संस्कारपक्षपर्युदासार्थः । नैष संस्कारपक्षोऽवकल्पत इत्यर्थः । तत्समर्थनार्थमर्थेनेत्यादि सकलं सूत्रम् । योऽयं माहेन्द्र[2]-ग्रहसन्निध्याम्नातः 'अभित्वा शूर नोनुम' इत्यैन्द्रः प्रगाथः, स विधिशब्दस्य मन्त्रभावित्वादिन्द्रमहेन्द्रयोश्चेन्द्रमहेन्द्राधिकरणन्यायेन भिन्नत्वाद्यत्रेन्द्रस्तत्र नीयेत देवतासंस्कारपक्षे । तथा च सति क्रमसन्निधी बाध्येयातामिति प्रमाणविरोधोऽत्र कथ्यते । तदयमर्थः—अर्थेन देवतात्मकेन देवतानामसंयुक्ता स्तुतिचोदना अपकृष्येत तद्दैवत्ये कर्मणि यस्मादर्थस्य देवताया गुणभूतो मन्त्रः । गुणभूतत्वं च तत्स्मरणार्थं प्रयुज्यमानत्वात् । तस्मात् संस्कारपक्षे यत्र प्रधानं देवता तत्र मन्त्रापकर्षप्रसङ्गात् संस्कारपक्षं परित्यज्य प्रधानकर्मत्वमेव स्तुतशस्त्रयोरङ्गीकर्तुं युक्तमिति ॥

अथ तृतीयमेतद्दोषपरिहारार्थं पूर्वपक्षसूत्रम् —

**वशावद्वागुणार्थं स्यात् (२-१-१५)**

इति ।

---

१. 'दूषितुं' क,   २. 'माहे' ग.

चतुष्पदम् । तत्र 'माहेन्द्रं ग्रहं गृह्णाती'ति महत्त्वगुणविशिष्टस्येन्द्रस्य देवतात्वश्रुतेः शुद्ध[1]प्रकाशस्य मन्त्रस्यापकर्षः स्यादिति यद्दूषणमुक्तं तद्वा-शब्देन [2]व्यावर्त्य शिष्टे[3]नानपकर्षप्रकारः प्रदर्श्यते । यथा 'सा वा एषा सर्व-देवत्या यदजा वशा, वायव्यामालभेते'ति वशात्वगुणविशिष्टस्यापि चोदि-तस्याजाख्यद्रव्यस्यागुणो[4]र्थं शुद्धाजाप्रकाशनार्थमभिधानं छागशब्देन निगमेषु दृश्यते, वशात्वं[5]गुणविशेषणस्यातन्त्रत्वात् । तथा 'माहेन्द्रं ग्रहं गृह्णाती'ति महत्त्वं[6]गुणविशेषणस्यातन्त्रत्वाच्छुद्धेन्द्रप्रकाशनार्थमप्यभिधानं प्रगाथे स्यादेव इत्यकारप्रश्लेषेण व्याख्या कर्तव्या । तस्मादैन्द्रस्य प्रगाथस्य माहेन्द्रग्रहे निर्गुणेन्द्रप्रकाशनेनार्थे सत्यपकर्षस्याप्रसङ्गान्न संस्कारपक्षः पर्युदसितव्य इति ॥

अथ चतुर्थे संस्कारपक्षे मन्त्रापकर्षप्रसङ्गं साधयितुं सूत्रम् —

## न श्रुतिसमवायित्वात् (२–१–१६)

इति ।

द्विपदम् । यदुक्तं निर्गुणेन्द्राभिधानादनुत्कर्ष इति । तन्नञा निषि-ध्यते । प्रसज्यतैवोत्कर्ष इत्यर्थः । तत्र हेतुः श्रुतिसमवायित्वादिति । श्रुतिशब्दोऽत्र तद्धितश्रुतिमाहमाहेन्द्रमिति । तद्धितश्रुत्या अश्वकर्णादि-वदवयवार्था[7]नपेक्षस्य महेन्द्रस्य ग्रहसमवायेनेन्द्राद्भेदावगमादित्यर्थः । अथवा श्रुत्या शब्देन देवता यागे समवैति न रूपेण, महेन्द्रशब्दश्चात्र श्रूयते विधिवाक्ये । तस्मादर्थाभेदेऽपि महेन्द्रशब्दे[8]नैर्वाच्यमानस्यात्र देव-तात्वं नेन्द्रशब्देन इति [9]ग्रहयागदेवतानभिधायित्वात् प्रगाथस्योत्कर्षः प्राप्नोत्येव इति ॥

---

१. 'प्रकाशकस्य' ख. २. 'व्यावर्त्याशि' ख. ३. 'नापकर्ष' ख. ४. 'र्थत्वं' ग. ५. 'त्ववि' ख. ६. 'त्ववि' ख. ७. 'र्थापेक्षस्य' ख. ग. ८. 'व वाच्य' ख. ९. 'ग्रहदे' ख.

अथ पञ्चममपीन्द्र[1]भेदाभिधानार्थं सूत्रम् —

## व्यपदेशा(शभेदा)च्च (२-१-१७)

इति ।

द्विपदम् । इतश्चेन्द्रमहेन्द्रयोर्भेद इति चशब्दार्थः । कुत इत्याह—व्यपदेशा(शभेदा)दिति । 'बहु दुग्धीन्द्राय', 'बहु दुग्धि महेन्द्राय'इति यतो मन्त्रस्येन्द्रमहेन्द्रयोर्व्यपदेशो भिद्यते, तत इत्यर्थः ॥

अथ षष्ठमपि तदर्थं सूत्रम् —

## गुणश्चानर्थकः स्यात् (२-१-१८)

इति ।

चतुष्पदम् । चशब्द उक्तार्थः । यतः शुद्धस्येन्द्रस्य देवतात्वे ग्रहवाक्ये महत्त्वगुणकीर्तनानर्थक्यापत्तिः । तस्मादपि महत्त्वगुणविशिष्ट एवेन्द्रो ग्रहयागदेवता न शुद्धः । ततश्च शुद्धदैवत्यस्य मन्त्रस्योत्कर्षो न निवार्य इत्यर्थः । अथवा यदिदं शुद्ध एवेन्द्रो ग्रहयागेऽपि देवता, महत्त्वकीर्तनं तु स्तुत्यर्थमिति मन्त्रानुत्कर्षवादिनो मतम्, तत्र स्तुतेर्विध्यङ्गत्वं विनानर्थक्यापत्तेर्देवतात्वान्तर्गत्यभावे स्तुत्यात्मकस्य महत्त्वगुणकीर्तनस्यानर्थक्यं स्यादित्युच्यत इति ॥

अथ सप्तममपि तदर्थं सूत्रम् —

## तथा याज्यापुरोरुचोः (२-१-१९)

इति ।

द्विपदम् । पुरोरुक्छन्दस्यान्यत्र प्रउगशस्त्रमन्त्रविशेषवाचित्वेऽपि याज्यासाहचर्येणेहानुवाक्यावाचित्वं निश्चीयते । तेनायमर्थः—यथा

---

1. 'न्द्रमहेन्द्रभे' ख, ग.

'बहुदुग्धी'ति मन्त्रयोर्भेदव्यपदेशादिन्द्रमहेन्द्रयोर्भेदः तथा 'एन्द्र सानसिं रयिं', 'प्रससाहिषे पुरुहूतशत्रून्' इति इन्द्रस्य, 'महाँ इन्द्रो य ओजसा', 'भुवस्त्वमिन्द्र ब्रह्मणा महान्' इति महेन्द्रस्येति याज्यापुरोनुवाक्ययोर्व्यपदेशभेदादिन्द्रमहेन्द्रयोर्भेद इति ॥

अथाष्टमं वशादृष्टान्तवैषम्यप्रदर्शनार्थं सूत्रम् —

## वशायामर्थसमवायात् (२–१–२०)

इति ।

द्विपदम् । तस्यार्थः– वशा हि द्रव्यम् । तच्चार्थरूपेण कर्मणि समवैति, न देवतावच्छब्दरूपेण । अतस्तत्रार्थसमवायान्निगमेषु च्छागशब्देनागुणार्थस्याप्यभिधानस्यानुत्कर्षो युक्तः । इह तु शब्दसमवायान्माहेन्द्रग्रहयागे शुद्धेन्द्रदैवत्यमन्त्रप्रकाश्यत्वायोगादुत्कर्ष एव प्रगाथस्य प्राप्नोति इति वैषम्यात् दृष्टान्तदार्ष्टान्तिकयोर्नायं पक्षः साधीयानिति ॥

अथ नवमं परमपूर्वपक्षसूत्रम् —

## यत्रेति वार्थवत्त्वात्स्यात् (२–१–२१)

इति ।

पञ्चपदम् । तत्र संस्कारकर्मत्वपक्षेऽप्यनुत्कर्षवादिनि[3] 'न श्रुतिसमवायित्वात्'इत्यादिसूत्रपञ्चकेन निरस्ते परमपूर्वपक्षी लिङ्गेन क्रमसन्निधिबाधान्याय्य एवोत्कर्ष इत्यनेन सूत्रेण प्रतिपादयति । तच्च वाशब्देनानुत्कर्षं वारयित्वेतिकरणेन संस्कारसद्भावं परामृश्य यत्र संस्कार-

---

१. 'महस्त्व' ग. २. 'ज्यानुवाक्य' ख, ग. ३. 'नि पूर्वपक्ष्यैकदेशिनि न' ख, ग.

सद्भावस्तत्र प्रगाथः स्यादित्येवं प्रतिज्ञायां कृतायां अर्थवत्त्वादिति हेतुरपदिष्ट इति व्याख्येयम्। उत्कृष्यमाणस्य प्रगाथस्य तत्र संस्कार्यवति कर्मण्यर्थवत्त्वस्य विद्यमानत्वादित्यर्थः। अथवा प्रगाथस्यानुत्कर्षेऽर्थवत्त्वाभावं वाशब्देन व्यावर्त्येतिकरणेन प्रगाथं च परामृश्य यत्र प्रगाथः पठ्यते तत्रैव स स्यान्नोत्कर्षः कर्तव्य इति प्रतिज्ञाय तत्रैवेन्द्रशब्देन महेन्द्रं मनोतास्थाग्निशब्देन सोममिवैकदेशेन लक्षयित्वानुत्कर्षेऽप्यर्थवत्त्वसिद्धेरध्यवसातुं शक्यत्वादिति हेतुर्व्यपदेष्टव्य इति॥

अथ दशममस्य परमपूर्वपक्षस्य दूषणाभिधानार्थं शङ्कासूत्रम् —

न त्वाम्नातेषु (२–१–२२)

इति।

त्रिपदम्। तत्र पूर्वपक्षसूत्रस्थस्यार्थवत्त्वशब्दस्य प्रथमान्तत्वेन विपरिणतस्यानुषङ्गः कर्तव्यः। एतेष्वैन्द्रप्रगाथादिषूत्कृष्टेष्वन्यत्रार्थवत्त्वसम्भवेऽपि सर्वेष्वन्येषु प्रकरणाम्नातेषूत्कृष्टेष्वर्थवत्त्वं नास्ति इत्युत्कर्षापादकः संस्कारकर्मत्वपक्षो न युक्तः। न हि याम्यादीनामुत्कृष्टानामपि प्रदेशान्तरेऽर्थवत्त्वमस्ति, यमादीनां ग्रहान्तरेष्वपि देवतात्वाभावात्। अतस्तासामदृष्टार्थत्वावश्यम्भावात्तत्सामान्यादत्रापि प्रगाथे तथात्वमापाद्यमानं केन निवारयितुं शक्यत इति॥

अथैकादशमेतत्परिहारार्थं पूर्वपक्षसूत्रम् —

दृश्यते (२–१–२३)

इति।

---

१. 'सातुमशक्य' ख. २. 'पद्य' ग.

एकपदम्। अत्रापि पूर्ववदनुषङ्गः। सर्वेष्वप्युत्कृष्टेष्वर्थवत्त्वं मन्त्रेषु दृश्यते। यमादीनां ग्रहदेवतात्वाभावेऽपि कर्मान्तरदेवतात्वेन यथासम्भवमुपयोगान्मन्त्रप्रकाश्यत्वसम्भवात् मण्डूकाक्षमूषिकासूक्तादीनामप्यग्निराजसूययूपैकादशिन्यादौ 'मण्डूकेनाग्निं विकर्षति', 'अक्षैर्दीव्यति', 'आखुस्ते पशुः' इत्यादिवाक्यविहितमण्डूकाक्षमूषिकादिप्रकाश्यसद्भावान्नानर्थक्यापत्तिः शङ्कितुं शक्या। आश्विनवाचस्तोमयोश्चापि 'सर्वा दाशतयीरनुब्रूयात्' इति सर्वासामप्यृचां विनियोगोऽस्ति इति नोत्कृष्टानामर्थवत्त्वाभावः। तस्माद्यत्र यत्र संस्कार्यसद्भावस्तत्र तत्रोत्कृष्यापि दृष्टार्थत्वकल्पनाया एव [1]न्याय्यत्वं, नादृष्टार्थत्वकल्पना युक्तेति॥

अथ द्वादशं सिद्धान्तसूत्रम्—

**अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती**
**क्रियोत्पत्तिं विदध्याताम् (२-१-२४)**

इति।

सप्तपदम्। अपि वेति संस्कारकर्मत्वं व्यावर्तयति। 'आज्यैः स्तुवते', 'पृष्ठैः स्तुवते', 'प्रउगं शंसति', 'निष्केवल्यं शंसति' इति स्तौतिशंसती प्रकरण एव प्रगाथोत्कर्षं विनैव क्रियोत्पत्तिं स्तवनशंसनात्मिकाया क्रियाया एव प्रधानत्वेनोत्पत्तिमनुष्ठानं विदध्यातामभिदध्यातां, न तु देवतां प्रति संस्कारत्वेन। एतदुक्तं भवति- प्रधानकर्मणी एव स्तोत्रशस्त्रे, न संस्कारकर्मणी। प्रगाथस्य च प्रकरण एवार्थवत्त्वान्नोत्कर्षः कर्तव्य इति। हेतुमाह—श्रुतिसंयोगादिति। 'कवतीषु स्तुवते' इति सप्तमीश्रुतिसंयोगो भवति। [2]सा हि स्तुतेः प्राधान्यं दर्शयति। स्तुतिरेव हि कवत्यक्षराधारा भवति न

---

१. 'न्याय्यत्वात्' ग. २. 'स हि' ख.

प्रकाशनम्। तद्धि देवताधारम्। तत्प्राधान्ये च कर्त्र्यः करणत्वेन श्रूयेरन्नत्वाधारत्वेन। तस्मात् स्तुतिःप्रधानम्। तथा 'प्रउगं शंसति' इति द्वितीयाश्रुतिसंयोगोऽपि स्तुतिप्राधान्यं दर्शयति। प्रउगशब्दवाच्यायाः स्तुतेः कर्मत्वेन मन्त्रनिर्वर्त्यत्वावगमात्। तथा 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति षष्ठीविभक्तिश्रुतिसंयोगो मन्त्रे दृश्यते। सोऽपि स्तुतिप्राधान्य एवोपपद्यते, न देवताप्राधान्ये। तदा हि प्रथमाविभक्तिश्रुतिसंयोगः स्यात्। तथा स्तौति, शंसतीत्येतयोः शब्दयोः श्रुतिसंयोगः श्रौतार्थसंयोग एतमर्थं दर्शयति। गुणिन्या देवतायाः स्तावकैर्गुणैः सम्बन्धकथनं स्तौतिशंसतिधात्वोर्मुख्योऽर्थः। अतस्तन्मात्रपर्यवसाने तयोर्मुख्यार्थता स्यात्। तत्रापर्यवस्यतोः पुनस्तद्द्वारेणानुस्मरणीयदेवतास्वरूपप्रकाशनपरत्वाङ्गीकरणे लाक्षणिकोऽर्थः स्यात्। तस्मादेतैश्चतुर्भिः श्रुतिसंयोगैः प्रधानकर्मणी स्तोत्रशस्त्रे इति॥

अथ त्रयोदशमपि सिद्धान्ताभ्युच्चयसूत्रम्—

**शब्दपृथक्त्वाच्च (२-१-२५)**

इति।

द्विपदम्। इतश्च प्रधानकर्मणी इति चशब्दार्थः। कुत इत्याह—शब्दपृथक्त्वादिति। द्वादशस्तोत्रशस्त्रोऽग्निष्टोम इति द्वादशशब्देन स्तोत्रशस्त्राणां पृथक्त्वात्पृथक्त्वाभिधानादित्यर्थः। अथवा शब्देन कृतात्पृथक्त्वादिति तत्कृतार्थतृतीयासमासो द्रष्टव्यः। द्वादशत्वं हि पृथक्त्वे सत्युपपद्यते। पृथक्त्वं च सर्वैरपि मन्त्रैः क्रियमाणस्य देवताप्रकाशनस्यैकत्वात् संस्कारकर्मत्वपक्षे स्तुतशस्त्रयोर्न युज्यते। प्रधानकर्मत्वपक्षे तु

---

१. 'कथनं हि' ख.

यथाविहितसमुदायसाध्यस्तुतिसमुदायजन्यत्वेनापूर्वस्य द्वादशत्वात् तद्वारेण स्तोत्रशस्त्रयोरपि द्वादशत्वसिद्धेर्युज्यत इति तदपि प्रधानकर्मत्वमुपोद्बलयतीति ॥

अथ चतुर्दशमपि सिद्धान्ताभ्युच्चयसूत्रम् —

## अनर्थकं च तद्वचनम् (२–१–२६)

इति ।

त्रिपदम् । चशब्द उक्तार्थः । तच्छब्दस्तु देवताभिधानत्वादित्याद्यसूत्रात्रयवोपात्तदेवताभिधायी द्रष्टव्यः । तदयमर्थः– संस्कारकर्मत्वपक्षेऽग्निदेवत्यमात्रग्रहायां विकृतावग्निष्टुति लिङ्गेनैवाग्नेयीनामृचां प्राप्तेः 'आग्नेयीषु स्तुवते' इति पुनराग्नेयीवचनमनर्थकं यतो भवति अतोऽपि प्रधानकर्मत्वमिति । संस्कारकर्मत्वनिरासद्वारा प्रधानकर्मत्वोपपादनार्थत्वादस्यापि सूत्रस्य न पूर्वोत्तरसूत्रानन्वयदोष इति ॥

अथ पञ्चदशमपि सिद्धान्ताभ्युच्चयसूत्रम् —

## अन्यश्चार्थः प्रतीयते (२–१–२७)

इति ।

(त्रिप?चतुष्प)दम् । चशब्द उक्तार्थः । यतः स्तोत्रशब्दाच्छस्त्रशब्दस्य शस्त्रशब्दाद्वा स्तोत्रशब्दस्य स्तोत्रशस्त्रयोर्वोभयोरन्यो भिन्नरूपोऽर्थः प्रतीयते, 'सम्बद्धे वै स्तोत्रशस्त्रे' इति वचनात् । सम्बन्धो हि (भेद?भिन्न)निष्ठो भवति । भेदश्च प्रधानकर्मत्वपक्षे स्यान्नेतरत्र । तदा हि प्रकाशनस्यैकत्वात् सम्बन्धिद्वयनिष्ठसम्बद्धत्वोक्तिरनर्थिका स्यादिति ॥

---

१. 'द्रष्टव्यः । संस्कार' ग.

अथ षोडशमपि तदर्थं सूत्रम् —

## अभिधानं च कर्मवत् (२-१-२८)

इति ।

त्रिपदम् । चशब्दो व्याख्यातः । यतः 'अग्निहोत्रं जुहोति' इति प्रधानकर्मवत् 'प्रउगं शंसति' इति द्वितीययाभिधानं भवति ततोऽपि[2] न गुणकर्मत्वमिति । अथवा स्तोत्रं शस्त्रमिति चाभिधानं समाख्या-कर्मवत् प्रधानकर्मणी इव ते द्योतयति । गुणकर्मत्वे हि प्रकाशनमित्ये-कमेव तयोरभिधानं स्यादिति ॥

अथ सप्तदशमपि तथाविधं सूत्रम् —

## फलनिर्वृत्तिश्च (२-१-२९)

इति ।

द्विपदम् । चशब्दोत्थापितः यतः 'स्तुतस्य स्तुतमसि', 'शस्त्रस्य शस्त्र-मसि' इति स्तुतशस्त्रयोः प्रधानकर्मणोः फलनिर्वृत्तिः प्रार्थ्यते न देवतायाः । देवताप्राधान्ये हि देवताफलं प्रार्थ्येत न स्तोत्रशस्त्रे । स्तोत्रशस्त्रे चात्र 'स्तुतमसि', 'शस्त्रमसि' इत्यामन्त्र्य 'धुक्षीमहि प्रजामिषं', 'सा मे सत्याशीर्देवेषु भूयात्' इति फलं प्रार्थ्यमानं स्तोत्रशस्त्राभ्यामिति गम्यते, न देवतायाः । न ह्यन्यमामन्त्र्यान्यतः प्रार्थना भवति । तस्मात् तयोरेव फलनिर्वृत्तिः । यतश्च फलनिर्वृत्तिस्तत्प्रधानमिति प्रधानकर्मणी स्तोत्रशस्त्रे इति ॥

अत्र स्तुतशस्त्राधिकरणे सप्तदश सूत्राणि ॥

---

१. 'यथा अभि' क, ख. २. 'पि प्रधानकर्मत्वमिति' ख. 'पि गुणकर्मत्व-मिति' ग.

अथ सप्तमं विधिमन्त्राधिकरणम् । तत्र 'न ता नशन्ति' इत्यादि मन्त्रगतान् यजते ददातीत्यादिभावशब्दानुदाहृत्य किं ब्राह्मणगता इव मन्त्रगता अप्येते विधायका उताविधायका इति सन्दिह्य विधायकत्वं पूर्वपक्षयितुमाद्यं सूत्रम् —

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् (२-१-३०)**

इति ।

त्रिपदम् । तत्रावयवावयविनोरभेदविवक्षया विधिमन्त्रावयवभूतयोर्भावशब्दयोरैकार्थ्यमेकविध्यर्थत्वं भवितुमर्हति, न तु विधिवाक्यावयवभूतानां विध्यर्थत्वं, मन्त्रवाक्यावयवभूतानां स्मृत्यर्थत्वमिति भिन्नार्थत्वमित्यर्थः । अथवा विधिमन्त्रयोरिति सप्तमी । विधौ मन्त्रे च ये भावशब्दाः श्रूयन्ते तेषामैकार्थ्यमिति भावशब्दाध्याहारेण व्याख्या कर्तव्या । ऐकार्थ्ये कारणमाह—ऐकशब्द्यादिति । उभयत्राप्येक एव शब्दः श्रूयते । सोऽर्थभेदेऽनुपपद्यमान ऐकार्थ्यमापादयति । ततश्च विधाविव मन्त्रेऽपि विधानार्था भावशब्दा भविष्यन्तीति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

**अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधान-**
**वाची स्यात् (२-१-३१)**

इति ।

षट्पदम् । अपि वेति विधानार्थत्वं व्यावर्तयति । मन्त्रोऽभिधान वाची स्यादिति ब्रूमः । अवयवावयविनोरभेदविवक्षया मन्त्रावयवभूते भावशब्दे मन्त्रशब्दः अभिधानातिरिक्तप्रेरणाख्यव्यापारनिषेधायाभिधानकारीति वाच्ये करोत्यर्थे तत्साधुकारित्ववाचिना णिनिप्रत्ययेन

विवक्षित्वा प्रत्ययानुग्रहार्थं कस्मिंश्चिद्धातौ प्रयोक्तव्येऽनुवादार्थो वचिः प्रयुक्तः। ततश्च मन्त्रो मन्त्रगतो भावशब्दोऽभिधायकः स्यान्न विधायक इत्युक्तं भवति। तत्र कारणमाह—प्रयोगसामर्थ्यादिति । शाकपार्थिवादिवन्मध्यमपदलोप्ययं समासः प्रयोगस्मृतिसामर्थ्यादिति। यतः प्रयोगेऽनुष्ठाने क्रियमाणेऽनुष्ठेयपदार्थस्मरणं कर्तुं मन्त्रस्य सामर्थ्यं, न विधातुमित्यर्थः । तत्र 'न ता नशन्ती'त्यस्य तावद्याभिर्गोभिर्देवान् यजते, याश्च ददाति, ता गावो न नश्यन्ति, न च तास्तस्करो हरति, न चासां कश्चिदवयवममित्रकृतो व्याधिरुपद्रवः पीडयति, गोः स्वामी च ताभिः सह ज्योक् चिरकालं सचते संसक्तो भवतीति गोयागं गोदानं च स्तुतिद्वारेण स्मारयितुमेव सामर्थ्यं पश्यामः, न तु तद्द्वयं विधातुम्, ऐकशब्द्यैकार्थयोस्त्वक्षादिष्वदर्शनाद्व्यभिचारित्वेन न हेतुहेतुमद्भावः सम्भवति । तस्मान्न मन्त्रेषु भावशब्दो विधायक इति । 'प्रयोगसामर्थ्या'दित्यस्यापरा व्याख्या—मन्त्रगतानां भावशब्दानां रूपस्य कर्मणि प्रयोक्तुं सामर्थ्यात् प्रयोगार्हत्वादित्युक्तं भवति। ब्राह्मणगतानां त्वन्येनाविहितत्वात् कर्मणः स्वयमेव विधाने कर्तव्ये न पुनः प्रयोगार्हत्वं सम्भवतीति विध्यर्थत्वमेव युक्तम् । अन्येषां त्वनन्यप्रयोजनत्वेन ब्राह्मणविहितस्मृत्यर्थत्वक्लृप्तेरेव न्याय्यत्वान्न विधायकत्वं कल्पनीयमिति विशेषः ॥

अत्र विधिमन्त्राधिकरणे द्वे सूत्रे ॥

अथाष्टमं मन्त्रलक्षणाधिकरणम् । तत्र प्रसङ्गाद्वेदप्रयुक्तमन्त्रलक्षणाभिधानं क्रियते । तेन नावश्यं पूर्वपक्षेणाभिहितेनात्र कार्यमस्ति, कोऽयं मन्त्रो नामेति प्रश्नेनैवोपक्रमसम्भवात् । तदर्थश्चेदं सूत्रम् —

---

१. 'न कार्य' ख,

## तच्चोदकेषु मन्त्राख्या (२-१-३२)

इति ।

द्विपदम् । तच्छब्देनाभिधानवाची स्यादित्यत्र प्रकृतमभिधानं परामृश्यते । चोदकशब्दश्चोदयतेः प्रेरणार्थत्वात्प्रयोजकस्य च प्रेरकत्वात् प्रयोजकवाची व्याख्येयः । तदभिधानं चोदकं प्रयोजनं येषां शब्दानां तेषु शब्देषु मन्त्राख्या मन्त्र इति समाख्या भवति इत्यभिधानप्रयोजनत्वं मन्त्राणामध्येतृपरम्परासिद्धं लक्षणं सूत्रकारेणापदिष्टम् । एतच्च प्रायिकं द्रष्टव्यम् । अनभिधानप्रयोजनानामपि 'वसन्ताय कपिञ्जलानालभते' इत्यादीनां केषांचिन्मन्त्राणां दर्शनात् । यच्च वृत्तिकारेणास्यन्तस्वादिलक्षणैरेतस्य लक्षणस्य प्रपञ्चः कृतः । सोऽपि प्रायिक एव । ब्राह्मणेऽप्यस्यन्तत्वादीनां दर्शनात् । लक्षणाभिधानस्य च स्वरूपज्ञानान्नान्यत्प्रयोजनमस्ति । तथाचोक्तम् —

आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि ।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ॥

अत्र मन्त्रलक्षणाधिकरण एकं सूत्रम् ॥

अथ नवमं ब्राह्मणलक्षणाधिकरणम् । अत्रापि किंलक्षणं तर्हि ब्राह्मणमिति प्रश्नेनैवोपक्रमः । तल्लक्षणाभिधानार्थं चेदं सूत्रम् —

## शेषे ब्राह्मणशब्दः (२-१-३३)

इति ।

द्विपदम् । मन्त्रब्राह्मणरूपभागद्वयात्मकत्वाद्वेदस्य । यदा तयोर्मन्त्रभागस्याभिधानप्रयोजनत्वं लक्षणमुक्तं भवति । तदा तदितरस्य ब्राह्मण-

---

१. 'कत्वस्य' ख, ग. २. 'प्रयोजकत्वं' ग.

भागस्य ततोऽन्यत्वलक्षणमर्थादुक्तं भवति। ततश्च शेषे मन्त्रव्यतिरिक्ते भागे ब्राह्मणशब्दो वर्तते, स भागो ब्राह्मणशब्दवाच्यः स्यादित्यर्थः । अथवा तच्चोदकशब्दोक्तादभिधानप्रयोजनत्वाच्छेषे विधानस्तवनात्मकेऽर्थे ब्राह्मणशब्दो वर्तते। विधानस्तवनप्रयोजनत्वं ब्राह्मणलक्षणमित्युक्तं भवति। अस्य चार्थसिद्धस्यापि शब्देन प्रतिपादनं मन्त्रब्राह्मणव्यतिरिक्तवेदभागाभावप्रतिपादनार्थमिति द्रष्टव्यम्। अत्र च 'अहे बुध्निय मन्त्रं मे गोपाय' इति 'एतद्ब्राह्मणानि पञ्च हवींषि' इति च मन्त्रब्राह्मणशब्दयोर्वेदप्रयोगात्तदर्थज्ञापनाय तल्लक्षणाभिधानं प्रासङ्गिकमिति नासङ्गतिः ॥

अत्र ब्राह्मणलक्षणाधिकरण एकं सूत्रम् ॥

अथ दशममनाम्नाताधिकरणम्। तत्र सौर्यादिष्वग्न्यादिपदस्थाने सूर्यादिपदप्रयोगात्मकानामूहानां काश्यपापत्सारनैध्रुवेत्यादीनां प्रवराणां सुब्रह्मण्यादौ देवदत्तो यजत इत्यादीनां नामधेयानां च मन्त्रत्वामन्त्रत्वे सन्दिह्य मन्त्रैकवाक्यत्वेन मन्त्रमध्यनिवेशात्तत्कार्यकरत्वाच्च मन्त्रत्वं पूर्वपक्षयित्वा तदभावं सिद्धान्तयितुं सूत्रम् —

## अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् (२-१-३४)

इति।

षट्पदम्। तस्यार्थः—वेदभागो हि कश्चित्प्रत्यक्षेण पठ्यते, कश्चित्त्वनुमानादिभिर्गम्यते। तत्र प्रत्यक्षश्रुतो भाग आम्नात उक्तः, तदितरोऽनाम्नातः समाम्नायकालेऽनाम्नातेषूहप्रवरनामधेयेषु मन्त्रत्वाभावः

---

१. 'ब्राह्मणमि' ग.

प्रत्येतव्य इति प्रतिजानीमहे । कुत इत्याह—आम्नातेषु हि विभागः स्यादिति[1] । आम्नातेषु हि वेदभागेषु मन्त्रब्राह्मणविभागोऽभियुक्तप्रयोगप्रसिद्धः । तत्कथमनाम्नातेषु मन्त्रत्वं सिध्यतीति वेदस्य द्वैराश्यनियमे सत्यूहादीनामप्यनुमानादिगम्यवेदत्वाभ्युपगमात् विधिप्रयोजनत्वाभावेन च ब्राह्मणत्वाभावान्मन्त्रत्वप्रसङ्गे पठ्यमानवेदविषयत्वं द्वैराश्यनियमस्य वक्तुमेतदधिकरणमिति सङ्गतिः ॥

अत्रानाम्नाताधिकरण एकं सूत्रम् ॥

अथैकादशमृग्लक्षणाधिकरणम् । तत्र मन्त्रब्राह्मणयोर्लक्षणे कथिते योऽयमृगादिरूपो मन्त्रावान्तरभेदः तत्स्वरूपजिज्ञासायां तल्लक्षणेषु कथनीयेषु प्रथममृग्लक्षणं कथ्यते । वेदप्रसिद्धिर्हि मन्त्रस्येवर्गादीनामप्यस्त्येव तद्विभागानाम् । एवं हि श्रूयते—'अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचो यजूंषि सामानि' इति । एवं ह्यस्याः श्रुतेरर्थः—त्रीन् वेदान् विदन्तीति त्रिविदः, त्रिविदां सम्बन्धिनोऽध्येतारस्त्रैविदाः, ते यं मन्त्रभागमृग्यजुःसामरूपेण विदुः तं मन्त्रं मे भगवन्नहे बुध्निय त्वं[3] गोपाय पठितस्य तस्याविस्मरणमनुगृहाणेति । अत ऋगादीनामपि वेदप्रयोगतुल्यत्वात्तल्लक्षणमप्यभिधातव्यमेवेति नासङ्गतिराशङ्कनीया । तत्रर्ग्लक्षणाभिधानार्थमिदं सूत्रम् —

## तेषामृग्यत्रार्थवशेन पादव्यवस्था (२-१-३५)

इति ।

पञ्चपदम् । तस्यार्थः—तेषां मन्त्राणां मध्ये सर्ग्विज्ञेया, यत्र मन्त्रेऽर्थवशेनार्थसमाप्त्यनुसारेण पादानां पादसमाप्तीनां व्यवस्था । यथा—

---

१. 'ति । वेद' ग. २. 'न ब्राह्म' ग. ३. 'त्वं स गोपाय' क.

'अग्निमीळे पुरोहितम्' इति । अर्थग्रहणं वृत्तस्याप्युपलक्षणार्थम् । तेन 'अग्निः पूर्वेभिर्ऋषिभिः' इत्यत्र न व्यभिचार इति ॥

अत्रर्ग्लक्षणाधिकरण एकं सूत्रम् ॥

अथ द्वादशं सामलक्षणाधिकरणम् । तत्राप्यस्त्वेतदृग्लक्षणम् । सामलक्षणं तु कथमिति प्रश्नेनैवोपक्रमः । तल्लक्षणाभिधानार्थमिदं सूत्रम् —

## गीतिषु सामाख्या (२-१-३६)

इति ॥

द्विपदम् । अत्रापि तेषामिति सम्बध्यते । तेषां मन्त्राणां मध्ये सामाख्या सामशब्दप्रयोगोऽभियुक्तानां गीतिषु द्रष्टव्यः । ततश्च गीतिषु सामलक्षणमित्युक्तं भवति । यद्यप्यभियुक्तप्रसिद्धिः सामशब्दस्य प्रगीते मन्त्रे तथापि नागृहीतविशेषणन्यायात् 'कवतीषु रथन्तरं गायति' इत्याद्यतिदेशोपपत्तेश्च गीतिरेव सामशब्दवाच्यत्वेनाध्यवसीयते इति नानुपपत्तिः काचिदिति ॥

अत्र सामलक्षणाधिकरण एकं सूत्रम् ॥

अथ त्रयोदशं यजुर्लक्षणाधिकरणम् । अत्रापि पूर्ववदेव प्रश्नेनोपक्रमः । तदभिधानार्थमिदं सूत्रम् —

## शेषे यजुःशब्दः (२-१-३७)

इति ।

द्विपदम् । तस्यार्थः—शेषेऽवशिष्टे ऋक्सामाभ्यां मन्त्रजाते यजुःशब्दो यजुरितिशब्दप्रयोगोऽभियुक्तानां दृष्ट इति ॥

अत्र यजुर्लक्षणाधिकरण एकं सूत्रम् ॥

अथ चतुर्दशं निगदाधिकरणम् । तत्र निगदानां यजुष्ट्वायजुष्ट्व-सन्देहेऽर्थान्तरत्वं पूर्वपक्षयितुमाद्यं सूत्रम् —

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् (२-१-३८)**

इति ।

पञ्चपदम् । वाशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । निगदश्चतुर्थं मन्त्रजातं स्यात्, न यजुः । कुत इत्याह—धर्मविशेषात् इति । प्रथमं 'उपांशु यजुषा' इति यजुषो धर्ममुपांशुत्वं विधाय निगदस्य 'उच्चैर्निगदेन' इत्युच्चैष्ट्वस्य धर्मविशेषस्य विहितत्वादित्यर्थः ॥

अथ द्वितीयं पूर्वपक्षाभ्युच्चयसूत्रम् —

**व्यपदेशाच्च (२-१-३९)**

इति ।

द्विपदम् । इतश्चतुर्थमिति चशब्दार्थः । कुत इत्याह—व्यपदेशादिति । इमानि यजूंषीमे निगदा इति व्यपदेशस्य संज्ञाभेदनिर्देशस्य याज्ञिकव्यवहारे दृश्यमानत्वादित्यर्थः । ततश्च विप्रतिषिद्धकर्म[1]संज्ञासमवायाभ्यां यजुर्निगदयोर्भेदेन भवितव्यमिति सूत्रद्वयेनोक्तं भवति ॥

अथ तृतीयं सिद्धान्तसूत्रम् —

**यजूंषि वा तद्रूपत्वात् (२-१-४०)**

इति ।

---

१. 'धर्म' ख, ग.

त्रिपदम् । वाशब्दः पूर्वपक्षं व्यावर्तयति । यजूंष्येव निगदः नार्थान्तरम् । कुत इत्याह— तद्रूपत्वादिति । यजुषां यद्रूपं प्रश्लिष्टपठितत्वं तदेव निगदस्यापि, यच्चर्क्सामव्यतिरिक्तत्वं तदप्युभयोः समानमेव । तस्माद्यजुरेव निगद इति ॥

अथ चतुर्थं धर्मभेदपरिहारार्थं सूत्रम् —

**वचनाद्धर्मविशेषः (२–१–४१)**

इति ।

द्विपदम् । तस्यार्थः—प्रायेण हि निगदानां प्रैषरूपत्वात् किञ्चित्प्रति कस्यचिदर्थस्य वचनमभिधानं कर्तव्यत्वेन विज्ञायते । तच्चोपांशुत्वेन सिध्यतीत्युच्चैष्ट्वं नाम धर्मविशेषः तेषामुपपद्यत इति । एतदुक्तं भवति—'अग्नीदग्नीन् विहर' इत्यादेर्निगदस्य प्रैषत्वसामर्थ्यात् परप्रत्यायनार्थत्वावगतेरुच्चैष्ट्वं च विना परस्य प्रत्याययितुमशक्यत्वात् न्याय्यप्राप्तेनोच्चैष्ट्वेनोपांशुत्वस्य बाधो भवति । तद्बाधेऽप्युक्तात् प्रश्लिष्टपठितत्वादेः तद्रूपत्वाद्धेतोर्नार्थान्तरत्वापत्तिरिति ॥

अथ पञ्चममपि धर्मविशेषोपपत्त्यभिधानार्थं सूत्रम् —

**अर्थाच्च (२–१–४२)**

इति ।

द्विपदम् । इतश्च धर्मविशेषः स्यादिति चशब्दार्थः । कुत इत्याह— अर्थादिति । अर्थशब्दः प्रयोजनवाची । अस्ति हि 'अग्नीदग्नीन् विहर' इत्यादि वचनेन प्रयोजनं तदभावेऽनवबुद्धत्वेनाग्नीधोऽग्निविहरणाद्यनुष्ठानासिद्धेः । सति तु तस्मिंस्तेनार्थं बुद्ध्वा तत्र प्रवर्तेताग्नीत् । तस्य चार्थबोधो नान्तरेणोच्चैष्ट्वं

---

१. 'यच्चो' ग.

सिध्यति इति धर्मविशेषप्राप्तिरविरुद्धा । अथवार्थशब्दोऽभिधेयवाची । नितरां गद्यत इति निगदशब्दावयवार्थानुसारेणाप्युच्चैष्ट्वप्रसक्तिरित्यर्थः ॥

अथ षष्ठं व्यपदेशभेदसमाधानार्थं सूत्रम् —

## गुणार्थो व्यपदेशः (२–१–४३)

इति ।

द्विपदम् । तस्यार्थः—यो व्यपदेशो भेदहेतुत्वेनोक्तः स यजुष्ट्वेऽपि निगदस्य नितरामुच्चैर्गद्यत इत्यन्येभ्यो यजुर्भ्योऽतिरिक्तस्य गुणस्योच्चैष्ट्वस्याभिधानार्थत्वेनोपपन्न इति ॥

अथ सप्तमं परिचोदनासूत्रम् —

## सर्वेषामिति चेत् (२–१–४४)

इति ।

त्रिपदम् । तस्यार्थः– इति चेत्पश्यसि यजुःष्वप्युच्चैष्ट्वगुणविधानार्थो निगदशब्द इति तर्हि सर्वेषामप्युच्चैष्ट्वगुणविधानार्थं निगदशब्दः स्यात्, न केवलं यजुष एव, किन्तु ऋक्सामयोरपि स्यादित्यर्थः । तयोरप्युच्चैष्ट्वस्य गुणस्य विद्यमानत्वादिति ॥

अथाष्टमं परिहारसूत्रम् —

## न (ऋग्) व्यपदेशात् (२–१–४५)

इति ।

द्विपदम् । तस्यार्थः–'अयाज्याः वै निगदाः, ऋचा यजन्तीति' ऋचः सकाशान्निगदस्य भेदेन व्यपदेशादृचस्तावन्निगदत्वप्राप्तिर्नाशङ्कनीया । निगदत्वाभावोक्त्यैव साम्नोऽप्यृगाश्रयस्य निगदत्वनिवृत्तिरनुक्तसिद्धैव

१. 'निगमा' ख. २. ऋङ् निग' ख. ३. व वाक्यैरेव ग.

भवतीति सूत्रकारेण पृथङ्नोक्ता । तस्मादपादबद्धं यजुरेवोच्चैष्ट्वयुक्तं निगद इति न त्रैविध्यं मन्त्रोऽतिवर्तत इति ॥

अत्र निगदाधिकरणेऽष्टौ सूत्राणि ॥

अथ पञ्चदशमेकवाक्याधिकरणम् ।

तत्रर्ग्यजुःसामरूपे मन्त्रभागे प्रकीर्तिते ।
इयत्येकर्गियच्चैकं सामेत्यध्येतृसिद्धितः ॥

न वक्तव्यं किञ्चिदस्ति सामचोर्यजुषां पुनः ।
प्रश्लिष्टपठितत्वेन भेदो ज्ञातुं न शक्यते ॥

इति तज्ज्ञप्तये तस्य परिमाणमिहोच्यते ।
वाक्यैकत्वप्रयुक्तत्वात्तस्य तच्चात्र कथ्यते ॥

तत्रोदाहरणं—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यादिमन्त्राः । तत्रैकं यजुर्मन्त्रवाक्यं कुत्र समाप्यत इत्यपेक्षायां तद्वक्तुमिदं सूत्रम् —

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् (२-१-४६)**

इति ।

सप्तपदम् । तस्यार्थः- यावदेकप्रयोजनं विभागे च साकाङ्क्षं पदजातं तावद्यागसाधनत्वाद्यजुर्वक्तव्यत्वाच्च वाक्यमेकमित्युच्यते । सम्भूयैतद्द्वयमेकवाक्यत्वस्यैकं लक्षणम् । केवलं त्वेकार्थत्वं, विभागे साका-

---

१. 'हेतोर्ज्ञातुं' ग. २. 'क्षा तद्वक्तु' ग.

ङ्क्षत्वं च व्यभिचरत्येकवाक्यत्वम् । 'भगो वां विभजतु' इत्यादीनामेकार्थानामपि विभागे साकाङ्क्षत्वाभावेन यजुर्वाक्यैकत्वयोरभावात् । तथा 'स्योनं ते सदनं करोमि', 'तस्मिन् सीद' इत्यनयोर्विभागे साकाङ्क्षयोरपि प्रयोजनैक्याभावेन तदभावस्य सिद्धत्वात् । भिन्नं हि तत्र प्रयोजनं, पूर्वस्य सदनकरणमुत्तरस्य पुरोडाशप्रतिष्ठापनम् । अतस्तत्रोभयत्राप्यपरिपूर्णमेकवाक्यत्वकारणम् । इह तु निर्वापमन्त्रे समस्तस्य पदसमूहस्याशेषसवित्रादिपदार्थविशिष्टनिर्वापप्रकाशनात्मकैकप्रयोजनसत्त्वम् विभागे साकाङ्क्षत्वं चोभयमप्यस्तीति परिपूर्णमेकवाक्यत्वकारणमित्यस्त्येवास्यात्रोदाहरणत्वम् । वाक्यान्तरत्वलक्षणं तु न पृथग्वक्तव्यं, येषां पदानामेतद्द्वयं पूर्वैः पदैर्नास्ति उत्तरैश्च सहास्ति तद्वाक्यान्तरमित्यर्थादेव सिद्धत्वात् ॥

अत्रैकवाक्याधिकरण एकं सूत्रम् ॥

अथ षोडशं वाक्यभेदाधिकरणम् । तत्र 'इषे त्वेति शाखामाच्छिनत्ति', 'ऊर्जे त्वेत्यनुमार्ष्टि', 'आयुर्यज्ञेन कल्पतां', 'प्राणो यज्ञेन कल्पताम्' इत्यादयो मन्त्रा उदाहरणम् । तेष्वर्थैकत्वसदसद्भावाभ्यामेकमन्त्रत्वनानामन्त्रत्वे सन्दिह्य यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादिपदमस्ति तत्र पूर्वोत्तरमन्त्र परिमाणं सुज्ञानम् । इह त्वि'षे त्वे'त्यादौ कर्मसमवेतार्थपदाभावेन लैङ्गिकविनियोगाभावादन्तरेणानुष्ठेयपदार्थप्रकाशनमदृष्टार्थत्वमेव कल्पयितुं युक्तम् । तत्र चानेककल्पनात एककल्पनाया उपपन्नत्वात्सर्वेषामेकमदृष्टं कल्पयित्वैकमेव कल्पयितुं युज्यते । एवं न्यायेन निर्णीते मन्त्रैक्ये यदि पुनः प्रतीकविनियोगोऽपि 'इषे त्वेति च्छिनत्ति', 'ऊर्जे त्वेत्यनुमार्ष्टि' इति दृश्यते, तथापि सकलो मन्त्र उभयत्राप्यावर्तनीय इति नासौ मन्त्रभेदाय प्रभवति ।

---

१. 'प्रयोजनत्वाद्' क. 'प्रयोजनत्वं ग. २. 'पूर्वोक्तं म' ख.

'आयुर्यज्ञेन कल्पताम्' इत्यत्रापि क्लृप्तिसामान्यस्य विवक्षितत्वात् तस्य चैकत्वादेकार्थत्वेनैकमन्त्र्यमेव । 'क्लृप्तीर्वाचयति' इति बहुवचनं तु कल्पयामीति पदस्यानेकत्वादुपपद्यते इति पूर्वपक्षसूत्रं कृत्वा सिद्धान्तं वक्तुमिदं सूत्रम् —

## समेषु वाक्यभेदः स्यात् (२-१-४७)

इति ।

त्रिपदम् । तस्यार्थः— समेषु परस्परनिरपेक्षेष्वेषु मन्त्रेषु वाक्यस्य[2] मन्त्रस्य भेदः स्यान्नत्वेकमन्त्रं(न्त्रत्वम्) । हेतुस्तु समशब्दोक्तं समत्वमेव । समत्वं च रूपोपलब्धिवेलायां त्वाशब्दभेदेन भिन्नवाक्यत्वावसायाद-न्योन्यानादरेण स्वातन्त्र्येणावस्थानं विवक्षितं, यत एवं स्वतन्त्रा एते मन्त्राः । तस्मात् भेदेन प्रयोजनकल्पनाया एव न्याय्यत्वान्नैकमन्त्र्यक्लृप्ति-र्युक्तिमती । यत्तु समवेतार्थपदाभावाददृष्टार्थत्वम्[3] । अदृष्टं चैकमेव सर्वेभ्यः कल्पयितुं युक्तमित्युक्तं, तदयुक्तम् । 'इषे त्वेति च्छिनत्ति', 'ऊर्जे त्वेत्य-नुमार्ष्टि' इति छेदनमार्जनयोः करणत्वेन मन्त्रविधेः क्रियानिर्वर्तकत्वाभावे च करणत्वाभावान्मन्त्राणां चार्थप्रकाशनादन्यप्रकारेण क्रियानिर्वर्तकत्वा-दर्शनादनुष्ठेयप्रकाशनार्थत्वं विधितो निर्णीतम् । तत्र यावता विना विधि-सिद्धमनुष्ठेयप्रकाशनार्थत्वं न सम्भवति तावदध्याहृत्यापि[1] प्रयोक्तव्यमिति प्राप्ते, विधिवाक्यगतं छिनत्त्यनुमार्ष्टीति प्रथमपुरुषनिर्देशं, 'इषे त्वा च्छिनद्मि (द्मि)', 'ऊर्जे त्वानुमार्ष्टि(र्ज्मि)' इत्युत्तमपुरुषत्वेन [4]विपरिणम्य शेषक्लृप्तेर्नि-र्दोषत्वादेकेन शाखाच्छेदनं प्रकाश्यतेऽन्येन तन्मार्जनमित्यर्थभेदान्मन्त्रभेदो-ऽभिधीयमानो नानेकादृष्टकल्पनाप्रसङ्गेन निवारयितुं शक्यते । तथा 'आयु-

---

१. 'त्वादिक्लृप्ति' ग. २. 'वाक्यमन्त्रस्य' ख. ३. 'तपदार्थो' ख.
४. 'विपरिणाम' क, ग.

र्यज्ञेन कल्पताम्' इत्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात्। क्लृप्तीरिति बहुवचननिर्देशात्तत्सिद्ध्यर्थमायुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वेनार्थभेदाच्च मन्त्रभेदसिद्धिरिति ॥

अत्र मन्त्रभेदाधिकरण एकं सूत्रम् ॥

अथ सप्तदशमनुषङ्गाधिकरणम् ।

अत्रापि यजुषामेव परिमाणं निरूप्यते ।
बहूनां सन्निधावेकः शेषो यत्र तु पठ्यते ॥

तत्र तस्यैव सम्बन्धः सर्वैर्मन्त्रैः किमिष्यते ।
उतैकत्रैव सोऽन्यत्र लोकात् स्यादिति चिन्त्यते ॥

उदाहरणं तु 'या ते अग्नेऽयाशया तनूर्वर्षि(ष्ठा गह्वरे)ष्ठोग्रं वचो अपावधीं त्वेष वचो अपावधीं स्वाहा। या ते अग्ने रजाशया। या ते अग्ने हराशया' इति त्रय उपसन्मन्त्राः। तत्रोत्तरयोर्मन्त्रयोः शेषापेक्षिणोः किं लौकिकः शेषः कल्पयितुं युक्तः उत वैदिक इति सन्दिह्य, लौकिको हि कार्यवशेन तत्र तत्र नीयमानो न विरुध्यते। वैदिकस्तु यदर्थमाम्नातस्तेनैवावरुद्धोऽन्यत्र नेतुं न युज्यत इति तनूर्वर्षिष्ठेति नोत्तरयोः सम्बध्यते शेष इति पूर्वपक्षे प्राप्ते सिद्धान्तं वक्तुं सूत्रम् —

**अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् (२-१-४८)**

इति ।

चतुष्पदम्। अत्रानुषङ्ग इति वाक्यसमाप्तिरिति च शेष उच्यते। अनुषज्यत इत्यनुषङ्गो वाक्यं, समाप्यतेऽनेनेति च वाक्यसमाप्तिः। अनुषज्यमानस्तनूर्वर्षिष्ठेत्यादिर्वाक्यसमापकः शेषः स्यादित्यर्थः। तत्र हेतुः

सर्वेषु तुल्ययोगित्वादिति । सर्वेषु मन्त्रेष्वस्य 'तनूर्वर्षिष्ठा' इत्यादेः शेषस्याकाङ्क्षासन्निधियोग्यत्वैस्तुल्येन योगित्वेन सम्बन्धेन सहितत्वादित्यर्थः। व्यवहितसमाम्नातस्याप्यसम्बन्धिपदव्यवायाभावे बुद्धिविपरिवृत्तिलक्षणस्य सन्निधे[१]र्विद्यमानत्वान्न सन्निध्या[३]भावश्चोदयितुं श[४]क्यः। तस्मात्स एव वैदिकः शेष उत्तरयोरपि मन्त्रयोरिति सिद्धम् ॥

अत्रानुषङ्गाधिकरण एकं सूत्रम् ॥

अथाष्टादशं चित्पत्यधिकरण[५]म्। तत्र 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति मन्त्रा उदाहरणम्। तत्र तेषामन्ते योऽ'च्छिद्रेण पवित्रेणे'त्यादिशेषः समाम्नातः स किं तृतीयस्यैव शेष उत पूर्वयोरप्यनुषङ्गेण शेष इति सन्देहे, अनेकेषु शेषिषु साकाङ्क्षेष्वेकस्मिञ्छेषिणि शेषान्वयेन निराकाङ्क्षीकृतेऽपि शेष्यन्तरनैराकाङ्क्ष्यायानुषङ्गो युक्तो 'या ते अग्ने' इत्यादिषु। इह तु शेषस्यैकशेष्यन्वयेन शेषिणोश्च 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु' इत्यपरिपूर्णवाक्यत्वेन नैराकाङ्क्ष्ये शेष्यन्तरान्वयानुषङ्गोऽनर्थक इति नाच्छिद्रादेरावृत्तिः कर्तव्या इति पूर्वपक्षं कृत्वा सिद्धान्तत्वेनैतदेव सूत्रमावृत्त्या योजितम्। अर्थस्तु पूर्वोक्त एव। यत्तु शेषशेषिनैराकाङ्क्ष्यादनुषङ्ग इति तत् तृतीयमन्त्रे पुनातुशब्दैकवाक्यतामुपगतस्याच्छिद्रेणेत्यादेः करणवाचित्वेन पवनक्रियाप्रकाशनार्थत्वावगतेस्तस्याश्च पवनक्रियायाः पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यमानत्वात्, तयोः कर्तृकर्मवत्करणस्यानिर्दिष्टत्वाच्च करणवाचित्वेन प्रधानक्रियासामर्थ्यादनुषङ्गः प्रसज्यमानो दुर्निवार इति परिहरणीयमिति[६] ॥

---

१. 'योगेन' क, ग.   २. 'सिद्धेः' क, ग.   ३. 'सिध्य' क, ग.   ४. 'शक्यते' ग.   ५. 'णम्। चित्पति' ग.   ६. 'ति ॥ अत्र चित्पत्यधिकरण एकं सूत्रम्' ग

अथैकोनविंशं व्यवायाधिकरणम् । तत्र 'सन्ते प्राणो वायुना गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा' इति मन्त्रा उदाहरणम् । तत्र गच्छतामिति पूर्वमन्त्रशेष एकवचनान्तत्वान्मध्यमेनानुषज्यते । तेन लौकिक एव तत्र शेषो निर्विचारसिद्धः । तृतीये तु योग्यत्वादनुषज्यते न वेति सन्देहे बुद्धिविपरिवृत्तेः समित्युपसर्गस्य क्रियापदापेक्षत्वादेकवचनान्तत्वेन योग्यत्वाच्चानुषङ्गं पूर्वपक्षयित्वा सिद्धान्तं वक्तुं सूत्रम् —

**व्यवायान्नानुषेज्यते (२-१-४९)**[1]

इति ।

त्रिपदम् । तस्यार्थः– मध्यमगतेन बहुवचनान्तेन सम्बन्धिपदेन व्यवायाद्व्यवधानादुत्तमेऽपि बुद्धिविपरिवृत्तिभङ्गान्नानुषङ्गः सम्भवतीति उभयत्राप्यध्याहारः कर्तव्य इति ॥

अत्र व्यवायाधिकरण एकं सूत्रम् ॥

इति श्रीमहर्षिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे द्वितीयस्याध्यायस्य
प्रथमः पादः समाप्तः ।

---

१. 'सर्गक्रिया' ग. 'षज्येत' मुद्रित भाष्यादिपाठः.

अथ द्वितीयस्याध्यायस्य द्वितीये पादे

## प्रथमं शब्दान्तराधिकरणम् ।

---

तत्रोपोद्घातप्रसक्तानुप्रसक्तादिरूपेणाख्यातापूर्वप्रत्यायकत्वापूर्वसद्भावगुणप्रधानकर्मलक्षणादौ प्रथमपादार्थे पर्यवसिते, शब्दान्तरादिभिः कर्मभेदे लक्षणार्थेऽभिधातव्ये शब्दान्तरस्यापर्यायभूतधातुभेदरूपत्वेन धात्वर्थभेदद्वारा भावनाभेदकत्वस्य स्पष्टत्वात् प्रथमं शब्दान्तरप्रमाणकः कर्मभेदोऽभिधीयते । तत्र 'सोमेन यजेत', 'दाक्षिणानि जुहोति', 'हिरण्यमात्रेयाय ददाति' इति वाक्यान्युदाहृत्य किमेते यजतिजुहोतिददातय एकां भावनां चोदयन्त एकस्य कर्मणो वाचका उत नानाभावनां चोदयन्तो नानाकर्मणामिति सन्दिह्य, भावनावाच्याख्यातप्रत्ययैकत्वेन भावनैकत्वस्य न्याय्यत्वादेकभावनाचोदनाद्वारेणैककर्मवाचकत्वं पूर्वपक्षयित्वा, सिद्धान्तं वक्तुं सूत्रम् —

### शब्दान्तरे कर्मभेदः
### कृतानुबन्धत्वात् (२-२-१)

इति ।

त्रिपदम् । तस्यार्थः— अत्र प्रतिशब्दं कर्मभेदो नानाभावनाचोदनाद्वारेण नानाकर्मवाचकत्वमेव युक्तम्, कुत इत्याह—शब्दान्तर इति । शब्दशब्दो धातुवचनः । आख्यातप्रत्ययैक्येऽपि धातुभेदस्य विद्यमानत्वादित्यर्थः । ननु वैपरीत्यं कस्मान्न स्यात् धातुभेदेऽपि प्रत्ययैक्यादेककर्मत्वमिति । अत आह—कृतानुबन्धत्वादिति । प्रत्ययो हि प्रकृत्यर्थ-

भूतेन धात्वर्थेन कृतानुबन्धमेव स्वार्थं भावनां वदति, न शुद्धाम्। अतो यजत्यादिभिस्त्रिभिः स्वस्वधात्वर्थकृतानुबन्धानां तिसृणां भावनानामुत्पादितत्वान्न धात्वर्थत्रयविशिष्टैकभावनोत्पत्तिः सम्भवति। तदसम्भवेनैव फलवाक्येऽपि शुद्धभावनानवगतेर्नैकस्यां भावनायामनेकधात्वर्थावच्छेदः कल्पयितुं शक्यः॥

तस्मादेतानि कर्माणि भिन्नानि स्युः स्वरूपतः।
यागो होमश्च दानं चेत्येवं धात्वन्तरत्वतः॥

उद्दिश्य देवतां[1] द्रव्यत्यागो याग इहोदितः।
स एव होमो भेदस्तु प्रक्षेपाधिक्यतो भवेत्॥

परस्वत्वाधिकत्वेन होमाद्दानस्य भिन्नता।
इति कर्मत्रयस्यास्य विभागः शास्त्रविन्मतः॥

अत्र शब्दान्तराधिकरण एकं सूत्रम्॥

अथ द्वितीयमभ्यासाधिकरणम्। तत्र 'समिधो यजति', 'तनूनपातं यजति', 'इडो यजति' 'बर्हिर्यजति', 'स्वाहाकारं यजति' इति वाक्यान्युदाहृत्य किमेतद्यजतीति पदं पञ्चकृत्वोऽभ्यस्तमेकस्य कर्मणो वाचकमुतानेकस्येति सन्दिह्य पूर्वत्राख्यातैक्येऽपि धातुभेदाद्भावनाभेद उक्तः। इह तु तस्याप्यैक्यादाख्यातैक्यकृतं भावनैक्यमपरिहार्यमिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम्—

**एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् (२-२-२)**

इति।

---

१. 'देवता' क.

सप्तपदम्। तस्यार्थः—एकस्य यजत्यादिशब्दस्याभ्यासापरपर्याया पुनःश्रुतिरप्येवमेव स्यात् शब्दान्तरवत्कर्मणां भेदिका स्यात्। कुत इत्याह—अविशेषादनर्थकं हि स्यादिति। अत्रानर्थकमित्यस्य विशेष्यत्वेन पुनः-श्रुतिरित्येतल्ल्युडन्तत्वेन विपरिणम्यानुषञ्जनीयम्। हिर्हेतौ। तस्मात्प्रथम-वाक्यविहितस्यैव कर्मणः कश्चिद्विशेषं विनैवोत्तरवाक्यैरपि विधीयमानत्वा-भ्युपगमे पुनःश्रवणं पिष्टपेषणवदनर्थकमेव स्यात्तस्मादित्यर्थः। ननु प्रथम-वाक्यविहितं यागं यजतिशब्देनानूद्योत्तरवाक्यैस्तनूनपादादिगुणविधाना-भ्युपगमे नाभ्यासानर्थक्यं स्यादिति चेन्न, द्रव्यदेवतयोः कतरो गुण एतैस्तनूनपादादिशब्दैर्विधीयमानत्वेनाभ्युपगम्यत इति वक्तव्यम्। न तावद्द्रव्यं, व्रीह्यादिवत्तथाविधस्य द्रव्यस्याप्रसिद्धत्वात्, प्रसिद्धत्वे वा करणविभक्त्यश्रवणेन द्रव्यविधित्वानुपपत्तेः। नापि देवता, तद्धितचतुर्थ्यो-स्तद्विधानार्थयोरश्रवणात्।

तस्मात्पञ्चभिरप्येतैर्वाक्यैर्यागपृथग्विधेः।
पञ्च यागा भवन्त्येते परस्परविलक्षणाः॥

द्वितीयान्तत्वसामान्यादग्निहोत्रादिशब्दवत्।
कर्मनामानि चेष्टानि समिदादिपदानि नः॥

अत्राभ्यासाधिकरण एकं सूत्रम्॥

अथ तृतीयं पौर्णमास्यधिकरणम्। तत्राभ्यास[1]कर्मभेदकत्वापवादः क्रियते। दर्शपूर्णमासप्रकरणे हि 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्ण-मास्यां चाच्युतो भवति', 'तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्', 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्', 'ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्याया'मिति काल-

१. 'सस्य कर्म' ख, ग.

संयुक्तानि कानिचिद्वाक्यानि श्रुतानि। कानिचित्तु 'समिधो यजति', 'आघारमाघारयति', 'आज्यभागौ यजती'त्यादीन्यकालसंयुक्तानि। तन्मध्ये च 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते' इति वाक्यद्वयं श्रुतम्। तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति फलवाक्यं श्रुतम्। तत्र 'य एवं विद्वान्' इत्यादिकमेव वाक्यद्वयमत्र प्रधानोदाहरणम्, इतराणि तु फलविचारौपयिकत्वेनोदाहृतानि। तत्र किमेतद्वाक्यद्वयं कर्मान्तरयोर्विधायकमुत समुदायानुवादकमिति विचारः प्रधानभूतः। समप्रधानत्वाङ्गाङ्गित्वविचारस्तु तत्फलत्वेन द्रष्टव्यः—किं फलवाक्ये प्रकृतानां सर्वेषां यागानां फलं प्रति विधानात्समप्रधानत्वमुत कालसंयुक्तानामेव फलं प्रति विधिरितरेषां तदङ्गत्वमेवेति। तत्र कर्मान्तरविधिं समप्रधानत्वं च पूर्वपक्षयित्वा समुदायानुवादमङ्गाङ्गित्वं च सिद्धान्तयितुं सूत्रम्—

**प्रकरणं तु पौर्णमास्यां**
**रूपावचनात्  (२-२-३)**

इति।

चतुष्पदम्। तुशब्द उत्सूत्रमुक्तं पूर्वपक्षं व्यावर्तयति। पौर्णमासीशब्दोऽयं साहचर्यादमावास्यामपि गृह्णन्नुदाहरणीभूतविद्वद्वाक्यद्वयोपलक्षणार्थो द्रष्टव्यः। प्रक्रियत इति प्रकृतकर्मसमुदायः प्रकरणं तत्पौर्णमास्यां पौर्णमासीसंयुक्ते वाक्येऽर्थादमावास्यासंयुक्ते चालम्बनं स्यादित्यध्याहृत्य योजना कर्तव्या। भावव्युत्पत्तौ तु प्रकरणाख्यं प्रमाणं, तयोः सहकारि स्यादित्यध्याहारः। सर्वथा न कर्मान्तरविधायकमेतद्वाक्यद्वयं किन्तु समुदायानुवादकमेवेत्युक्तं भवति। तत्र हेतू रूपावचनादिति[2] द्रष्टव्यः। देवतात्मकस्य रूपस्य वाक्येऽस्मिन्ननिर्देशात्। नचानिर्ज्ञातरूपे कर्मणि कश्चित्

---

१. 'फलवाक्येन' ख, ग. २. 'ति देवता' ग.

प्रवर्तेत । तस्माद्रूपवतोः प्रकृतकर्मसमुदाययोरनुवादमात्रमत्र क्रियते । तस्य च 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेते'ति कालसंयोगविधिरेकं प्रयोजनम्, तथा फलवाक्ये पौर्णमास्यमावास्याशब्द-पर्यायभूताभ्यां दर्शपूर्णमासशब्दाभ्यामेतयोः समुदाययोः फलसम्बन्ध-विधानमपरम्; ततश्चाकालसंयुक्तानां फलसम्बन्धाभावादप्राधान्ये सतीतरा-ङ्गत्वसिद्धिरिति ॥

अथ द्वितीयं सिद्धान्ताभ्युच्चयसूत्रम् —

**विशेषदर्शनाच्च पूर्वेषां**
**समेषु ह्यप्रवृत्तिः स्यात् (२-२-४)**

इति ।

सप्तपदम् । तस्यार्थः—पूर्वेषां पूर्वत्र प्रकृतौ पूर्वं सतां वाग्नेयादिभ्यो-ऽनुष्ठीयमानानां प्रयाजादीनां विकृतौ कृष्णलहोमादेर्विशेषस्य दर्शनाच्च न विद्धद्वाक्यकर्मान्तरविधित्वसर्वकर्मसमप्रधानत्वे स्यातामिति शेषोऽध्याहर्तव्यः । अथवा पूर्वेषां विशेषदर्शनाच्च पौर्णमास्यमावास्यासंयुक्तयोर्वाक्ययोः प्रकरणमालम्बनं सहकारि वा भवेदिति पूर्व एव सम्बन्धः । कारण-माह—समेषु ह्यप्रवृत्तिः स्यादिति । यदि ह्येतद्वाक्यद्वयं कर्मान्तरविधायक-मङ्गीक्रियेत ततः पूर्वेषु प्रयाजादिषु आग्नेयादिषु च समेषु समप्रधानेषु प्रयाजादीनामनङ्गत्वेन विकृतावप्रवृत्तिरतिदेशेन प्राप्त्यभावः प्रसज्येत । ततश्च प्राप्तप्रयाजानुवादेन कृष्णलविधानं न स्यादिति ॥

अथ तृतीय विद्धद्वाक्ययो रूपाभावात्कर्मान्तरविध्यनुपपत्त्या समप्रा-धान्यपक्षे सिद्धान्तिना दूषिते पूर्वपक्षिणः प्रत्यवस्थानानन्तरसूत्रम् —

---

१. 'पूर्वत्रप्रकृतौ पूर्वं वा' क, ग. २. 'वादत्वेन' क, ख.

## गुणस्तु श्रुतिसंयोगात् (२-२-५)

इति ।

त्रिपदम् । तुशब्दः पक्षं व्यावर्तयति । एतदेव वाक्यद्वयं कर्मविधायकं, वाक्यान्तराणि तु तत्र गुणविधायकानि स्युरित्यनेनोच्यते । एषा चाक्षरयोजना- अनयोर्विद्वद्वाक्यविहितयोः पौर्णमास्यमावास्याख्ययोः कर्मणोः गुणः रूपं यदाग्नेयादिवाक्यात्मिकया श्रुत्याष्टाकपालाग्न्यादिद्रव्यदेवतासंयोगादवगम्यते । अस्य हि वाक्यस्यायमर्थः-ये इमे पौर्णमास्यमावास्याख्ये कर्मणी तयोरेतद्रूपमग्निर्देवता पुरोडाशो द्रव्यमिति । तस्मान्नास्ति रूपाभावोपालम्भः ॥

अथ चतुर्थमेतत्पूर्वपक्षपरिहारार्थं सिद्धान्तिनः सूत्रम् —

## चोदना वा गुणानां युगपच्छासनाच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत (२-२-६)

इति ।

एकादशपदम् । वाशब्दः पक्षं व्यावर्तयति । कर्मचोदनैवात्र यदाग्नेयादिवाक्यैः क्रियते न गुणचोदना । कुत इत्याह—गुणानां युगपच्छासनादिति । एकेनैव वाक्येनानेकेषां गुणानां युगपच्छासनस्यात्रापेक्षितत्वादित्यर्थः । ततः किमित्याह—चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येतेति । हिर्हेतौ । यस्माद्वाक्यान्तरेण चोदिते प्राप्ते कर्मणि तदर्थत्वाद्गुणार्थत्वाद्विधेस्तस्य तस्य गुणस्य विधेये पुनः पुनरुपदिश्येतोच्चार्येत प्रत्ययः । ततश्च वाक्यभेदः प्रसज्येत । तस्मादग्न्यष्टाकपालादिसर्वविशेषणविशिष्टाः प्राप्तयागविधय एवामी 'यदाग्नेयोऽष्टाकपाल' इत्यादयो द्रष्टव्याः । न च यागस्य यागान्तराणि रूपं भवितुमर्हन्ति । अतो रूपावचनान्नापूर्वयोः कर्मणोर्वि-

धातृणी विद्वद्वाक्ये किन्तु वाक्यान्तरविहितानां यागानां त्रिकरूपयोः समुदाययोरनुवदितृणी इति सिद्धम् ॥

अथ पञ्चमं सिद्धान्ताभ्युच्चयसूत्रम् —

### व्यपदेशश्च तद्वत् (२-२-७)

इति ॥

त्रिपदम् । तस्यार्थः—'उग्राणि वा एतानि हवींष्यमावास्यायां सम्भ्रियन्तः आग्नेयं प्रथममैन्द्रे उत्तरे' इति । व्यपदेशश्च यस्मादस्मदुक्तस्य विद्वद्वाक्ययोः समुदायानुवादत्वस्य वाक्यान्तराणां कर्मविधित्वस्य चानुगुणो दृश्यते, तस्मादप्यस्मत्पक्षो ग्राह्य इति । प्रथमे हि समप्राधान्यपूर्वपक्षे विद्वद्वाक्यविहितेन सह चत्वारो यागा अमावास्यायां स्युस्तदोत्तराणीति बहुवचनेन व्यपदेशः प्रसज्येत । द्वितीये तु वाक्यान्तराणां गुणविधित्वं विद्वद्वाक्ययोः कर्मविधित्वमिति पूर्वपक्षेऽमावास्याया एकयागात्मकत्वात्पुरोडाशसान्नाय्ययोर्विकल्पेन प्रवृत्तेः सम्भारपौर्वापर्यानुपपत्तिरिति ॥

अथ षष्ठमपि सिद्धान्ताभ्युच्चयसूत्रम् —

### लिङ्गदर्शनाच्च (२-२-८)

इति ।

द्विपदम् । तस्यार्थः—'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशावास्याया'मित्याहुतिसङ्ख्यानुवादात्मकस्य लिङ्गस्य दर्शनाच्च विद्वद्वाक्ययोः समुदायानुवादत्वं वाक्यान्तराणां कर्मविधित्वं चाङ्गीकर्तव्यम् ।

---

१. 'क्यस्य' ग. २. 'उपदेशः' ग.

आहवनीयगताश्चाहुतयोऽत्र विवक्षिताः। ताश्च पर्वद्वयेऽपि पञ्च प्रयाजाः, द्वावाज्यभागौ, स्विष्टकृत्, त्रयोऽनूयाजा इत्यङ्गात्मिका एकादशाविशिष्टाः। प्रधानाहुतयस्तु पौर्णमास्यामाग्नेयोपांशुयाजाग्नीषोमीयात्मिकास्तिस्रः सम्भूय चतुर्दश स्युः। अमावास्यायां तु देवताभेदाभावेन द्वितीयाहुतेरेकत्वादाग्नेयैन्द्ररूपे द्वे इति सम्भूय त्रयोदश स्युः। तत्र विद्वद्वाक्ययोः कर्मान्तरविधित्वपूर्वपक्षे पौर्णमास्यां प्रधानाहुतिचतुष्ट्वात्पञ्चदशसङ्ख्यापत्तिः। अमावास्यायां च प्रधानाहुतित्रित्वाच्चतुर्दशसङ्ख्यापत्तिः। विद्वद्वाक्ययोरेकर्कर्मविधित्वपूर्वपक्षे प्रधानाहुत्यैक्येनोभयत्र द्वादशसङ्ख्यापत्तिः।

तस्मादाहुति सङ्ख्याया उपपत्त्यर्थमप्यदः।
समुदायानुवादत्वं विद्वद्वाक्यद्वयस्य नः॥

अत्र पौर्णमास्यधिकरणे षट् सूत्राणि॥

अथ चतुर्थमुपांशुयाजाधिकरणम्। इदमाद्यधिकरणत्रयं समुदायानुवादापवादार्थं द्रष्टव्यम्। तत्र दर्शपूर्णमासयोः 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाये'ति श्रुतानि वाक्यान्युदाहृत्य किं विष्ण्वादिवाक्यविहितानां यागाना'मुपांशुयाजमन्तरा यजती'ति समुदायानुवाद उतापूर्वयागविधिरिति सन्दिह्य समुदायानुवादत्वं पूर्वपक्षयितुमाद्यं सूत्रम् —

## पौर्णमासीवदुपांशुयाजः स्यात् (२-२-९)

इति।

---

१. 'रेव कर्म' ग. २. 'याने क्रि' ग.

त्रिपदम् । तस्यार्थः—अत्रापि पौर्णमासीशब्द उपांशुयाजशब्दश्च तद्युक्तवाक्योपलक्षणार्थः । 'य एवं विद्वान् पौर्णमासी'मित्यादिवाक्यव- 'दुपांशुयाजमन्तरा यजती'त्यपि वाक्यं स्यात्तद्वत्समुदायानुवादकं स्यादि- त्यर्थः । तत्रोक्तस्यारूपत्वादेः सकलस्य न्यायस्यात्रापि विद्यमानत्वा- दिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

**चोदना वाप्रकृतत्वात्  (२–२–९)**

इति ।

त्रिपदम् । वाशब्दः पक्षं व्यावर्तयति । कर्मचोदनै'वोपांशुयाजम- न्तरा यजती'तिवाक्येन क्रियते, न समुदायानुवादः । कुत इत्याह— अप्रकृतत्वादिति । प्रकृतानां यागानामत्राभावात् । विष्ण्वादिसंयुक्तानि हि वाक्यान्यर्थवादा एव, न विधयः । एकं हीदं 'जामि वा एत'दित्युपक्रम्या- 'जामित्वाये'त्येवमन्तं वाक्यम् । तत्र निरन्तरयोः पुरोडाशयोरिज्यमानयो- र्योऽयं जामितादोष उक्तस्तत्परिहारार्थं 'उपांशुयाजमन्तरा यजती'ति मध्ये यागान्तरं चोदितम् । विष्ण्वादिवाक्यैस्तूपांशुयाजक्रमे वैष्णवप्राजापत्याग्नी- षोमीयाणां याज्यापुरोनुवाक्यायुगलानां हौत्रे समाम्नानाद्देवतात्वेन प्राप्ता विष्ण्वादयः स्तुत्यर्थं सङ्कीर्त्यन्ते । स्तुतिश्च—नात्र पुरोडाशनैरन्तर्याज्जामि- तादोषः प्रसज्यते, विष्ण्वादीनामन्यतमस्यानयोर्मध्ये यष्टव्यत्वादित्येवमनु- वादप्राप्ता गम्यत इति ॥

अथ तृतीयं शङ्कोत्तरं सूत्रम् —

**गुणोपबन्धात्  (२-२-१०)**

इति ।

---

१. 'रार्थं उपांशु' ग. २ 'ज्जामि' ग.

एकपदम् । एषा च शङ्का– ननु योऽयमुपांशुयाजोऽन्तरा विहितः सोऽरूपत्वात्पौर्णमासीतुल्य इति । तत्रोत्तरं– उपांशुयाजस्योपांशुत्वगुणोपबन्धाद्विशिष्टविधानेनोपांशुत्वगुणयोगान्न पौर्णमासीवदरूपत्वोपालम्भः । यदेव हि यागान्तराव्यवच्छेदकं तदेव रूपत्वेनाभ्युपगम्यते न द्रव्यदैवतमेव । तदप्यत्र मन्त्रलिङ्गादिगम्यमस्त्येव । मान्त्रवर्णिकी ह्यस्य देवता, ध्रौवं च द्रव्यमिति यागान्तरमेवेदमिति ॥

अथ चतुर्थं सिद्धान्ताभ्युच्चयसूत्रम् —

## प्राये वचनाच्च (२–२–१२)

इति ।

त्रिपदम् । तस्यार्थः—उपांशुयाजस्य प्रधानकर्मप्राये वचना'द्धृद यमुपांशुयाज' इति यज्ञपुरुषस्य प्रधानप्रायनिविष्टो नावयवेन संस्तवाच्च प्रधानभूतं यागान्तरमुपांशुयाज इत्यवगम्यते । तस्मान्न समुदायानुवाद इति ।

अत्रोपांशुयाजाधिकरणे चत्वारि सूत्राणि ॥

अथ पञ्चममाघाराग्निहोत्राधिकरणम् । तत्रा'घारमाघारयति', 'अग्निहोत्रं जुहोती'ति वाक्यद्वयं तत्सन्निधिपठितान्यू'र्ध्वमाघारयति', 'दध्ना जुहोती'त्यादीनि च वाक्यान्युदाहृत्य किमेतैर्वाक्यैर्दध्यूर्ध्वतादिगुणविशिष्टा होमाघारा विधीयन्ते । अन्यत्तु वाक्यद्वयं रूपावचनात्तेषामेव रूपवत-समुदायानुवाद उत तदेव कर्मविधायकमन्यानि तत्र गुणविधायकानीति सन्दिह्य पूर्वपक्षं पुर्वपक्षयितुमाद्यं सूत्रम् —

## आघाराग्निहोत्रमरूपत्वात् (२-२-१३)

इति ।

---

१. 'पलम्भः' क २. 'न्त्रराद्यत्र' ख, ग.

द्विपदम्। द्वन्द्वैकवद्भावोऽयं आघारश्चाग्निहोत्रं चेति। ताभ्यां च तच्छब्दलक्षणापुरःसरं पौर्णमास्युपांशुयाजाभ्यामिव तद्युक्तवाक्योपलक्षणं कर्तव्यम्। आघाराग्निहोत्रवाक्यमपि पौर्णमास्यमावास्यावाक्यवत्समुदायानुवादोऽरूपत्वाद्रूपावचनात्स्यादिति पूर्वाधिकरणपूर्वपक्षसूत्रस्थपौर्णमासीवत्पदानुषङ्गेण योजना द्रष्टव्या।

अथ द्वितीयं पूर्वपक्षाभ्युच्चयसूत्रम्—

संज्ञोपबन्धात् (२-२-१४)

इति।

एकपदम्। उत्तरसूत्रस्थश्चशब्दोऽत्राप्यपकृष्टव्यः। आघाराग्निहोत्रात्मकसंज्ञोपबन्धाच्च तद्युक्तं वाक्यं समुदायानुवादः स्यादिति सम्बन्धः। आघारसंज्ञकं कर्म करोति अग्निहोत्रसंज्ञकं कर्म करोतीति हि तयोर्वाक्ययोरर्थः। संज्ञाप्रतिपाद्यश्च विशेषोऽनयोः कर्मणोः क इति रूपमन्तरेण न ज्ञायत इति वाक्यान्तरविहितानां रूपवतां कर्मणां समुदायानुवादत्वसिद्धिरिति॥

अथ तृतीयमपि तादृशं सूत्रम्—

अप्रकृतत्वाच्च (२-२-१५)

इति।

द्विपदम्। तस्यार्थः—यतः प्रकृतमपि द्रव्यदेवतं नाघाराग्निहोत्रयोर्विद्यते येन रूपव[१]न्तौ स्यातां, तस्मादपि समुदायानुवादौ। ननु दध्यूर्ध्वादिवाक्यानां गुणविधित्वाद्रूपसिद्धिः। न, तेषु प्रकृताघाराग्निहोत्रशब्दयोरविद्यमानत्वेन तदुद्देशेन रूपविध्यसम्भवादिति।

अथ चतुर्थं सिद्धान्तसूत्रम्—

---

१. 'दकत्व' ग. २. 'रूपवत्ते' ख.

**'चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्**
**तत्सन्निधेर्गुणार्थेन पुनःश्रुतिः (२-२-१६)**

इति।

सप्तपदम्। वाशब्दः पक्षं व्यावर्तयति। कर्मचोदनैवाभ्यां वाक्याभ्यां क्रियते न समुदायानुवादः। कुत इत्याह—शब्दार्थस्य प्रयोगभूतत्वादिति। आघारयति जुहोतीति विधिशब्दार्थस्य प्रयोगेऽनुष्ठाने भूतत्वाद्वर्तमानत्वा-ध्याप्रियमाणत्वादित्यर्थः। [1]प्राप्ते चानुष्ठानेऽन्यथ्याप्रियमाणत्वानर्थक्या-द्रूपं विनापि कर्मान्तरं विधेयं प्रतीयते। तच्च वाक्यान्तरतो रूपावगतौ सत्यामक्लेशेनैव निर्वहतीति। ननु वाक्यान्तरेष्वपि श्रुत्या धात्वर्थावच्छिन्न-भावनाविधिप्रतीतेर्न वाक्यीयगुणसम्बन्धविधिर्युक्तः। अत आह-तत्सन्नि-धेर्गुणार्थेन पुनः श्रुतिरिति। तस्या धात्वर्थावच्छिन्नभावनाविधानात्मिकायाः कर्मचोदनायाः [2]सन्निधेः सन्निहितेः सन्निहिताघाराग्निहोत्रविधिप्राप्तत्वेना-विधेयत्वाद्वाक्यीयगुणविध्यर्थत्वेनोर्ध्वादिवाक्ये पुनः श्रुतिराघारयतिजुहोति-शब्दयोर्द्रष्टव्या न कर्मविध्यर्थत्वेन। अथवा तस्य गुणस्य सन्निधः सन्निधौ [3]पठितस्याविधाने प्रमादपाठापत्तेर्गुणार्थेन पुनः श्रुतिर्विधेर्द्रष्टव्येत्यर्थः। यद्वा तस्मिन्वाक्यान्तराविहिते कर्मणि गुणस्य सम्यगेकीभावेन वा निधानात् निधातुं शक्यत्वादित्यर्थः।

तस्मादेते उभे वाक्ये स्यातां कर्मविधायके।
गुणस्य तु विधानार्थान्यन्यानीति व्यवस्थितम्॥

अत्राघाराग्निहोत्राधिकरणे चत्वारि सूत्राणि।

अथ षष्ठं पशुसोमाधिकरणम्। तत्र 'अग्नीषोमीयं पशुमालभेत', 'सोमेन यजेते'ति वाक्यद्वयं, तत्सन्निधिपठितानि 'हृदयस्याग्रेऽवद्यती'त्या-

---

१. 'अन्यतः प्राप्ते' ख. ग. २. 'सन्निधेः सन्निहिताघार' ख. ३. 'पठितस्य तस्य तस्य' ख.

दीनि, 'ऐन्द्रवायवं गृह्णाति' इत्यादीनि च वाक्यान्युदाहरणम्। किमत्रयति-गृह्णातिभ्यां विहितानां यागानां समुदायानुवादावेतावालभतियजती उताःपूर्वयोः यागयोर्विधायकाविति सन्देहः। तत्र समुदायानुवादाविति पूर्वः पक्षः। स च सोमशब्देन तत्रैव गृह्णातिना सामान्याक्षिप्तं द्रव्यं नियम्यते, प्रकृतिद्रव्यं वा विधीयते, नामधेयं वेति सोमवाक्ये त्रेधा भवति। पशुवाक्ये तु नामधेयपक्षाभावाद् द्रव्यनियमप्रकृतिद्रव्यविधिपक्षाभ्यां द्वेधैव। अथवा पशु-सोमशब्दावप्यनुवादावेव। पशुर्हि हृदयादिप्रकृतिद्रव्यापेक्षायां 'छागस्य वपाया मेदसोऽनुब्रूही'ति मन्त्रवर्णात् प्राप्तोऽनूद्यते। सोमस्त्वभिषवादि-वाक्यप्राप्तः। एवमुत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तं वक्तुमाद्यं सूत्रम्—

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे**
**ह्यनर्थको द्रव्यसंयोगो न हि तस्य**
**गुणार्थेन (२-२-१७)**

इति।

एकादशपदम्। अत्रापि पशुसोमशब्दौ तद्युक्तवाक्योपलक्षणार्थौ, अपूर्वद्रव्यसंयोगात्। पशुसोमवाक्ययोरपूर्वकर्मचोदना द्रष्टव्या, न समु-दायानुवादत्वम्। ननु पशुविकारस्य हृदयादेर्लक्षणया पशुशब्देनाभिधानात् सोमविकारस्य च रसस्य सोमशब्दाभिधानान्नापूर्वद्रव्यसंयोगोऽस्तीत्या-शङ्क्याह—प्रकरणे ह्यनर्थको द्रव्यसंयोग इति। पश्वाख्यं सोमाख्यं च द्रव्यं यागेन संयोजयतीति व्युत्पत्त्या द्रव्यसंयोगशब्दोक्तः पशुशब्दः सोमशब्दश्च, प्रकरणे प्रक्रियत इति व्युत्पत्त्या प्रकृते हृदयादौ रसे च यस्मान्मुख्यार्थ-त्यागापत्तेरनर्थकस्तस्मान्न ताभ्यां तदभिधानं सम्भवति। ननु मदेयप्रकृति-त्वेन पशुलताविधिः कस्मान्न भवति, अत आह—न हि तस्य गुणार्थेनेति।

---

१. 'अपूर्वयोर्वि' क. २. 'पेक्षया' ख. ३. 'यागे' क.

हिः पूर्वत्रेवात्रापि हेतौ द्रष्टव्यः। तस्य प्रकृतस्य रसहृदयादेः प्रकृतित्वलक्षणगुणार्थेन यस्मान्नायं द्रव्यसंयोगः सम्भवति। पशोर्देवताविधिपरेण वाक्येनानुत्पत्तिवाक्यत्वे सत्यशक्यविधानत्वाल्लतायाः अपि वाक्यविधेयायाः श्रौतरसविरोधे सत्यसम्बध्यमानत्वात्। तस्मात् प्रकृतेषु यागेषु पशुसोमलतयोर्विध्यनुवादासम्भवादपूर्वे कर्मणी तद्द्रव्यके विधीयेयातामिति। एवं प्रकृतेषु सत्स्वपि नानुवादत्वमित्युक्तम्॥

अथ प्रकृता एव यागा न सन्तीति वक्तुं द्वितीयं सूत्रम्—

**अचोदकाश्च संस्काराः (२-२-१८)**

इति।

त्रिपदम्। इतश्च कर्मचोदना पशुसोमवाक्ययोरिति चशब्दार्थः। यस्मादेते हृदयैन्द्रवायवादिविधयः कर्मणोऽचोदकाः किन्तु संस्काराः संस्कारविधय एव यागसाधनत्वेन विहितयोः पशुसोमलतयोः। यावद्धि सान्नाय्यावदानप्रकृतित्वाद्धृदयाद्यवदानानां तद्वदेव यागसाधनत्वे सिद्धे तदन्यथानुपपत्त्या हृदयादिवाक्येषु यागः कल्पयितुमारभ्यते द्रव्यदेवतासंयोगान्यथानुपपत्त्या चैन्द्रवायवादिवाक्येषु तावत्पशुसोमवाक्यगतप्रत्यक्षयजतिर्विहितः शीघ्रं सम्पद्यमानः कल्पनां निरुणद्धि। तस्मादेतदेव वाक्यद्वयं कर्मोत्पत्तिविधायकम्, इतराणि तु तद्विहितयोः कर्मणोरवदानगणग्रहाभ्यासयोर्विधायकानीति। एवं भाष्यकारमतेन सूत्रद्वयव्याख्या कृता।

वार्त्तिककारमते तु पूर्वं पूर्वपक्षसूत्रमेव। उत्तरं तु तुशब्दस्थानचशब्दं सिद्धान्तसूत्रम्। पशुसोमवाक्योदाहरणेऽस्य सूत्रस्य पूर्वपक्षोक्त्यशक्तेर्हृदयैन्द्रवायवादिवाक्योदाहरणाङ्गीकारेण पूर्वपक्षो वर्णनीयः। अयं च सन्देहः किमेते गुणविधयः पशुसोमवाक्यविहितयोः कर्मणोः, उतैत एव कर्मविधय

इतरौ समुदायानुवादाविति। तत्रोत्तरपक्षं पूर्वपक्षयितुमाद्यं सूत्रम्। तस्यार्थः—एतैर्हृदयैन्द्रवायवादिवाक्यैः कर्मोत्पत्तिचोदनैव क्रियते न दध्यादिवाक्यैरिव गुणचोदना। पशुसोमयोरपि तैरेव वाक्यैश्चोदनार्थाद्भवति, तेषु रसहृदयादिद्रव्यसंयोगस्य विद्यमानत्वादिति। चोदनापदावृत्त्या आद्यावयवो योजनीयः। मध्यावयवस्तु पशुसोमवाक्ययोः पुनरुत्पत्तिचोदनात्वे प्रकृतेषु गृह्णात्यवद्यतिवाक्येषु रसहृदयादिद्रव्यसंयोगो विधीयमानोऽनर्थकः स्यात्, यागाङ्गत्वं न प्रतिपद्येत। पशुसोमलतयोरेव तदानीं यागाङ्गत्वावगमादिति योजयितव्यः। अन्त्यावयवस्त्ववदानग्रहणविधेः पशुसोमसंस्कारार्थत्वेनाविरोधाशङ्कापरिहारार्थो द्रष्टव्यः। न हि तस्य प्रकृतस्यावदानग्रहणविधेः पशुसोमसंस्कारलक्षणगुणार्थेन प्रवृत्तिः सम्भवति, तयोः स्वरूपनाशकत्वापत्त्या संस्कारत्वायोगादिति। अथवा प्रदेयप्रकृतित्वेनाविरोधाशङ्कानिरासार्थोऽयम्। न हि तस्योत्पत्तिवाक्यैः प्रदेयत्वेन प्रकृतस्य रसहृदयादेः प्रकृतित्वलक्षणगुणार्थेन पशुसोमयोस्ताभ्यां वाक्याभ्यां विधिः सम्भवति, उत्पत्तिवाक्यैरेव तयोः प्रदेयप्रकृतित्वेन प्राप्त्युपपत्तेरिति॥

अथ द्वितीयं सिद्धान्तसूत्रम्। चशब्दस्तुशब्दस्थानत्वात् पक्षं व्यावर्तयति। नैतौ समुदायानुवादावित्युक्तं भवति, यतोऽवद्यतिगृह्णातिपराः प्रत्यया न यागानां चोदकाः किंतु संस्कारविधय एव। तस्मात् प्रकृतानां यागानामभावात्कथं समुदायानुवादत्वमिति॥

एवं सूत्रद्वयेन पशोः कथां समाप्य सोमे 'दशैतानध्वर्युः प्रातःसवने गृह्णाति' 'आश्विनो दशमो गृह्यते' 'स तृतीयो हूयते' इति क्रमसमुच्चयदर्शनाभ्यां यागानेकत्वे शङ्किते, तत्परिहारार्थं तृतीयं सूत्रम्—

---

१. 'न विरो' ख. २. '(पशौ' ख.

**तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं**
**हि स्याद्भेदो द्रव्यगुणीभावात् (२-२-१९)**

इति।

नवपदम्। तस्यार्थः-तस्य पूर्वसूत्रप्रकृतसंस्कारशब्दोक्तग्रहणविशेषणभूतस्य देवतासंयोगस्य भेदाद्यावद्देवतासंयोगं ग्रहणकर्मणोऽभ्यासः कर्तव्यः। ततश्च तदपेक्षया क्रमसमुच्चयदर्शनयोरुपपत्तिः गृहीतस्य ग्रहणायोगाशङ्कानिरासार्थमुक्तम्-द्रव्यपृथक्त्वादिति। मित्रावरुणादिदेवतासंयुक्तेन ग्रहणेन संस्कर्तव्यस्य सोमद्रव्यस्य भेदेन विद्यमानत्वादित्यर्थः। अस्त्वेवं, किमनेनायातम्?। ग्रहणाभ्यासस्सिद्धेरत आह—अनर्थकं हि स्यादिति। ततश्चैकस्मिन् ग्रहे सकृदनेकदेवतोद्देशेन ग्रहणस्याशक्यानुष्ठानत्वाद्देवतासंयोगान्तरश्रवणं ग्रहान्तरेषु ग्रहणाभ्यासाभावेऽनर्थकमेव स्यात्। यस्त्विन्द्रवायुमित्रावरुणाद्या देवतास्तैः प्रातिपदिकैर्निर्दिश्य सर्वान्ते सकृच्चतुर्थ्युच्चारणेन सर्वा युगपदुद्देष्टुं शक्या इति वदति। तस्य सकृच्चतुर्थीनिर्देशेन समुदायो देवतात्वेनोद्दिष्टः स्यात्। न चास्य[1] देवतात्वमस्ति। तस्माद्द्वितीयानिर्दिष्टत्वेन संस्कार्यं सोमद्रव्यं प्रति गुणीभावाद्गुणत्वेन सम्बन्धाद्ग्रहणकर्मणो यावत् संस्कार्यं भेदो युक्त एव स्यादित्याह—भेदो द्रव्यगुणीभावादिति। अयं च ग्रहणाभ्यासो[2] ग्रहणस्य यागोपक्रमत्वाद्यागाभ्यासमन्तरेणानुपपद्यमानस्तदभ्यासमप्यर्थादाक्षिपतीति तदनुक्तिर्न दोषाय। अथवा यागाभ्यास एवानेनोच्यते। तत्र च तद्भेदादिति। तच्छब्देन पूर्वसूत्रप्रकृतसंस्कारशब्दोपस्थापितसंस्कार्यद्रव्यपरामर्शः क्रियते। तस्य ग्रहणसंस्कृतस्य सोमद्रव्यस्य भेदाद्यागकर्मणोऽभ्यासः कर्तव्यः। संस्कृतद्रव्य-

---

१. 'न चास्या' क, ख. २. 'ग्रहणाभ्यासे' क, ग.

भेदस्य कथं यागाभ्यासहेतुत्वमिति चेदत आह—द्रव्यपृथक्त्वादनर्थकं हि स्यादिति। तत्तद्देवतार्थेन ग्रहणेन स्वीकृताद्द्रव्यपृथक्त्वाद्धेतोर्यागानभ्यासे तद्द्रव्यपृथक्त्वं पृथक् कृतं द्रव्यं वानर्थकमेव स्यादित्यर्थः। तस्मात् 'सोमेन यजेते'त्युत्पत्तिवाक्ये सकृच्छ्रुतस्यापि सोमयागस्यात्मानं प्रति वाक्यान्तरैर्भेदेन प्रकल्पितस्य सोमद्रव्यस्य गुणीभावादङ्गत्वेन सम्बन्धाद्भेदो यावद्ग्रहणमनुष्ठानात्मनानुपपन्न इत्याह—भेदो द्रव्यगुणीभावादिति॥

अथ चतुर्थं शङ्कोत्तरं सूत्रम्—

**संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् (२-२-२०)**

इति।

सप्तपदम्। एषा च शङ्का—ननु यथा खदिरपलाशादयः पशोर्नियोजनाख्ये संस्कारे विकल्पन्ते तथात्र देवताविकल्पो भविष्यतीति, सा तुशब्देन व्यावर्त्यते। खदिरपलाशादिभिः साध्यमानः पशुनियोजनाख्यः संस्कारो न भिद्येत न भेदेन क्रियेत, न ते संस्कारे समुच्चीयेरन्नित्यर्थः। कुत इत्याह—परार्थत्वाद् द्रव्यस्य गुणभूतत्वादिति। खदिरादेर्द्रव्यपरार्थत्वेन गुणभूतत्वात्परस्य पशुनियोजनाख्यस्य तस्य संस्कारस्याधारनिष्पत्त्यर्थत्वेन तं प्रति शेषभूतत्वात्। ततश्च तुल्यार्थत्वाद्व्रीह्यादिवद्विकल्प एव युक्तः न समुच्चयः। अथवा तस्य संस्कारस्य परार्थत्वात् संस्कार्यपशुशेषत्वात् तस्य चैकत्वादित्यर्थः। ननु संस्कार्यैकत्वेऽपि खदिरादिसंस्कारकद्रव्यभेदात्संस्कारभेदः कस्मान्न स्यादत आह—द्रव्यस्य गुणभूतत्वादिति। संस्कारकं हि द्रव्यं संस्कारे गुणभूतं न संस्कार्यवत्प्रधानभूतम्। तस्मान्न तद्भेदः संस्कारभेदमावहतीति विकल्प एव तेषां युक्तः। तद्वद्देवता अपि यदि यागे श्रूयेरन् ततो

---

१. 'र्थेन' ख.

विकल्पभाजो भवेयुः। तास्तूक्तप्रकारेणैकस्मिञ्ज्योतिष्टोमाख्ये सोमयागेऽभ्या-सरूपेण समुच्चीयमानेषु यागार्थेषु ग्रहणेषु श्रुतास्तद्वदेव समुच्चयवन्तो भवन्तीत्येषैव कल्पना न्याय्या इति ॥

अत्र पशुसोमाधिकरणे चत्वारि सूत्राणि ॥

अथ सप्तमं सङ्ख्याधिकरणम्। तच्च प्रासाङ्गिकेऽभ्यासापवादविचारे पर्यवसिते क्रमप्राप्तसङ्ख्यानिमित्तकर्मभेदाभिधानार्थम्। तत्र 'तिस्र आहुतीर्जुहोति', 'द्वादश द्वादशानि जुहोती'त्युदाहृत्य किमत्रैको होमो विधीयते बहवो वेति सन्दिह्याख्यातसकृच्छ्रुतेरेकहोमविधानमभ्यासेन सङ्ख्यापूरणं च पूर्वपक्षयित्वा बहुहोमविधानं सिद्धान्तयितुं सूत्रम् —

**पृथक्त्वनिवेशात्सङ्ख्यया**
**कर्मभेदः स्यात् (२-२-२१)**

इति।

चतुष्पदम्। तस्यार्थः—अत्र कर्मसमानाधिकरणया सङ्ख्यया कर्मभेद एव स्यान्नाभ्यासेन सङ्ख्यापूरणम्। कुत इत्याह-पृथक्त्वनिवेशादिति। एकातिरिक्तायाः सङ्ख्यायाः पृथक्त्वं विनाऽनुपपत्तेर्यत्र पृथक्त्वं तत्र निवेशो यस्माद्भवति तस्मादित्यर्थः। ततश्च पृथक्त्वे सति निवेशादिति विग्रहो भवति, पृथक्त्वेन सहैकार्थनिवेशादिति वा विग्रहः। पृथक्त्वनिवेशित्वादिति तु पाठे पृथक्त्वं निवेष्टुं शीलं यस्याः सा पृथक्त्वनिवेशिनी तद्भावः पृथक्त्वनिवेशित्वम्। पृथक्त्वैकार्थनिवेशित्वात् द्व्यादिसङ्ख्याया इत्यर्थः। 'एकादश प्रयाजान् यजति'इत्यत्र तु सत्यपि पृथक्त्वनिवेशिसङ्ख्यायोगे प्रकृतौ निर्ज्ञातपञ्चसङ्ख्यत्वात् प्रयाजानामभ्यास एवैकः सङ्ख्यापूरणे शरणं स्यात्। यदि त्वत्रापि कर्मैकत्वं प्रागेव निर्ज्ञातमभविष्यत्, ततोऽभ्यासेन सङ्ख्यापूर्ति-

राश्रयिष्यत तदभावात्तु तात्त्विक एव भेदोऽङ्गीकर्तव्य इति। अस्मिंश्चोदाहरणे कर्मण्येव सङ्ख्याश्रुतेः पक्षानुत्थानं मत्वा भाष्यकारः 'सप्तदश प्राजापत्यान् पशूनालभते इति वाजपेयपठितं द्रव्यगतसङ्ख्यायुक्तं वाक्यमुदाजहार। तत्र किं सप्तदशपशुद्रव्यक एको यागोऽनेन विधीयते किं वा सप्तदश यागा एकैकपशुद्रव्यका इति सन्देहः। पूर्वपक्षस्तु—प्राजापत्यानिति कृतैकशेषः पशुर्बहुत्वेन प्रथमं सम्बद्धः पश्चात्तद्धितसम्बन्धात्प्राजापतिना देवतया सम्बध्यते। ततश्च बहुभिः पशुभिरेकदैवैकस्या देवतायाः सम्बन्धादेको यागोऽनेकपशुसाधनकोऽङ्गीकर्तुं[1] युक्त इति। तत्र सिद्धान्तं वक्तुमुक्तं सूत्रम्। तस्यार्थः—अस्मिन् वाक्ये श्रुतया सप्तदशसङ्ख्यया कर्मभेद एकैकपशुद्रव्यकसप्तदशयागात्मकः स्यादिति ब्रूमः। कुत इत्याह—पृथक्त्वनिवेशादिति। पृथक्त्वे हि सति पशूनान्तेषु सप्तदशसङ्ख्या निविशते। तच्च पशुपृथक्त्वं यागपृथक्त्वमन्तरेण न सम्भवति। एकस्य हि यागस्यैकेनैकपशुनिष्पन्नेनावदानगणेन साध्यत्वं प्रकृतौ दृष्टम्। अतोऽत्रापि यागैकत्वे चोदकेनैकस्यावदानगणस्य प्राप्तेः कथं सप्तदशपशुद्रव्यकैककर्मविधिसिद्धिः। तस्माद्बहवो यागाः। ततश्च नैकशेषपूर्वत्वं तद्धितसम्बन्धस्य- किन्तु तद्धितपूर्वत्वमेकशेषस्यैव स्यात्। तथा च सति प्राजापत्यशब्दस्य सप्तदशकृत्व उच्चरितस्यैकशेषकरणात् सप्तदश यागाः सिद्धा भवन्तीति॥

अत्र सङ्ख्याधिकरण एकं सूत्रम्॥

अथाष्टमं संज्ञाधिकरणम्।

तत्र यद्यपि चोदेशक्रमात्पूर्वमुपस्थितौ।
गुणप्रकरणाधीनौ कर्मभेदौ तथापि[2] तु॥

---

१. 'श्रुतयानया' ख, ग.　२. 'पि तयोः' ग.

तयोः प्रासङ्गिकानेकविचारान्तरयोगतः ।
उभौ सान्यासिकौ कृत्वा संज्ञातस्तद्भिदोच्यते ॥

तत्र ज्योतिष्टोमप्रकरणाधीतं 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'ति वाक्यमुदाहृत्य किमनेन प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते किं वा कर्मान्तराण्येवंनामकान्येवंदक्षिणानि विधीयन्त इति सन्दिह्य अथैतच्छब्दयोः प्रकृतापेक्षित्वात्, तत्सामानाधिकरण्याच्च ज्योतिरादिशब्दानां प्रकृतहान्यप्रकृतकल्पनाप्रसङ्गाभावाच्च ज्योतिष्टोमस्यैव गुणविधिरिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम् —

## संज्ञा चोत्पत्तिसंयोगात् (२-२-२२)

इति ॥

त्रिपदम् । तत्र संज्ञा च भेदिका स्यादित्यध्याहृत्य योजना कर्तव्या। अथवा पूर्वसूत्रे सङ्ख्यायेति तृतीयोक्तस्य भेदहेतुत्वस्य चशब्देनानुकर्षणात्संज्ञा च कर्मभेदहेतुः स्यादित्येवं योज्यते । कारणमाह— उत्पत्तिसंयोगादिति । कर्मोत्पत्तिवाक्ये श्रूयमाणत्वादस्याः सङ्ख्याया इत्यर्थः । अथवा आख्यातेन भेदाभेदावधारणात्प्रागेव संज्ञाश्रुतेरित्येवं प्राथम्यवाचितयोत्पत्तिशब्दो व्याख्येयः । यद्वा पृथक्त्वनिवेश एवात्रापि हेतुश्चशब्दानुकृष्टः सम्बध्यते । अस्याः पूर्वसंज्ञाविषयनिवेशायोगेन ततः पृथक्तया कर्मान्तरविषयत्वेन निवेशादित्यर्थः । अपवादकाभेदावधारकाख्यातसंयोगनिवृत्त्यर्थस्तूत्पत्तिसंयोगादिति हेतुः। अस्त्वेवं, कथं पुनः कर्मशब्दसामानाधिकरण्यं विना संज्ञायाः कर्मनामत्वमिति चेत्संज्ञावशाद्भिन्नकर्मविशेषत्वेनावधारयिष्यमाणेन 'एतेन यजेते'ति कर्मशब्देन सामानाधिकरण्यादिति ब्रूमः। यत्तु कर्मान्तरनामत्वे प्रकृतापेक्षिणोरथैत-

---

१. 'शब्देना' ग.

च्छब्दयोरनुपपत्तिरित्युक्तम्, तदर्थशब्दस्याधिकारार्थत्वेनैतच्छब्दस्य च सन्निहितवक्ष्यमाणविषयत्वेनोपपत्तेः परिहरणीयमिति ॥

अत्र संज्ञाधिकरण एकं सूत्रम् ॥

अथ नवमं गुणाधिकरणम्। संज्ञावद्गुणस्यापि पूर्वकर्मनिवेशानर्हत्वेन भेदकत्वाद्गुणचिन्तायाः संज्ञाचिन्तानन्तरसङ्गतिः। तत्र चातुर्मास्येषु वैश्वदेवे पर्वणि 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्येकं यागं विधाय पश्चादाम्नातं 'वाजिभ्यो वाजिन'मिति वाक्यमुदाहृत्य किमनेन पूर्वस्मिन्नेव यागे वाजिनं गुणो विधीयते, किं वा कर्मान्तरं तद्गुणकमिति सन्दिह्य, वाजिभ्य इति वाजशब्दोक्तेनामिक्षाख्येनान्नेन सहितान् विश्वान् देवान् वाजिशब्देनानूद्य तेभ्यो वाजिनाख्यो गुणः पूर्वस्मिन्नेव कर्मणि विधीयते। तस्य चामिक्षया सह विकल्पः समुच्चयो वास्त्विति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम् —

## गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् (२-२-२३)

इति।

पञ्चपदम्। अत्रापि पूर्वाधिकरणोक्तप्रकारेण गुणश्चेत्यस्य शेषतया कर्मभेदहेतुरिति सम्बन्धो द्रष्टव्यः। कीदृशो गुण इत्याह—अपूर्वसंयोग इति। अत्र नञ्समासपूर्वकोत्तरपदसमासाभ्युपगमे सत्यपूर्वेणैव कर्मणा सह संयोगे यो योग्यो गुणः स इत्यर्थः। उत्तरपदसमासपूर्वकनञ्समासाश्रयणे तु गुणान्तरावरुद्धत्वात्पूर्वेण कर्मणा सह संयोगाभावे सिद्धे श्रूयमाण इत्यर्थः। कुत इत्याह—वाक्ययोः समत्वादिति। ते अपि हीमे वाक्ये भेदेन द्रव्यदेवतासम्बन्धयोर्विधातृणी अन्योन्यानपेक्षत्वेन समे। एवं तर्हि

तुल्यबलत्वाद्द्वयोर्विकल्पः समुच्चयो वास्तु किं कर्मभेदाभ्युपगमेनेति चेन्न। तुल्यबलत्वाभावात्। तद्धितलक्षणया हि श्रुत्या विश्वेषां देवानामामिक्षासम्बन्धः, वाजिनसम्बन्धस्तु वाजिभ्य इति यौगिकेन शब्दान्तरेणाभिहितानां तेषां वाक्येन भवति। तस्माद्विरमशिष्टयोरामिक्षावाजिनयोरेकत्र निवेशासम्भवाद्भिन्नावेव यागावाश्रयौ भवत इति ॥

अथ द्वितीयं परिचोदनोत्तरं सूत्रम् —

## अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत (२-२-२४)

इति।

षट्पदम्। एषा च परिचोदना। ननु यथा 'दध्ना जुहोती'त्यादयोऽग्निहोत्रं जुहोती'त्यत्र गुणविधय इष्यन्ते एवं कस्मान्नात्र भवतीति। सा तुशब्देन व्यावर्त्यते। अगुणे गुणान्तरानवरुद्धे कर्मशब्देऽग्निहोत्रवाक्ये सति वाक्यान्तरस्थो दध्यादिस्तत्र गुणो गुणत्वेन विधीयमानः प्रतीयेतेति युक्तमेतत्। अत्र तु सगुणत्वात्तस्य कर्मान्तरमेव वाजिनगुणकं विधीयत इति कल्पना युक्तेति ॥

अत्र गुणाधिकरणे द्वे सूत्रे ॥

अथ दशममगुणाधिकरणम्। तत्रा'ग्निहोत्रं जुहोती'ति निर्गुणं 'दध्ना जुहोती'त्यादीनि सगुणानि च वाक्यान्युदाहृत्य दध्यादेर्गुणस्याग्निहोत्रनिवेशकर्मान्तरपरिकल्पकत्वे सन्दिह्यान्यतमनिवेशेऽन्यनिवेशासम्भवात्कर्मान्तरपरिकल्पकत्वं पूर्वपक्षयित्वाग्निहोत्रनिवेशं सिद्धान्तयितुमुक्तं

सूत्रम्। तुशब्दः पक्षं व्यावर्तयति। स्वतोऽगुणेऽग्निहोत्रशब्दे सर्वोऽपि दध्यादिस्तत्र गुणः प्रतीयेत। प्रमाणबलायातश्च विकल्पो न दोषाय। पौर्वापर्याभावाच्च वाक्यानां नान्यावरुद्धेऽन्यनिवेश इष्यते। अगुणत्वादेव चाग्निहोत्रस्य योग्यतया सर्वगुणप्राप्तिरनिवार्या। तस्माज्जुहोतिशब्देन तदेव कर्मानूद्य तत्र दध्यादिगुणविधानार्थान्येतानि वाक्यानीति सिद्धम् ॥

अत्र अगुणाधिकरण एकं सूत्रम् ॥

अथैकादशमिन्द्रियकामाधिकरणम्। तत्राग्निहोत्रप्रकरणाधीतं 'दध्नेन्द्रियकामस्य जुहुया'दिति वाक्यमुदाहृत्य किं दधिहोमोऽग्निहोत्रहोमात्कर्मान्तरं फलवत्तया विधीयते किं वाग्निहोत्रस्यैव दध्नो गुणात्फलान्तरविधिरिति सन्दिह्य कर्मान्तरविधिं पूर्वपक्षयितुमाद्यं सूत्रम्—

**फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् (२-२-२५)**

इति।

षट्पदम्। तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः। फलश्रुतेर्हेतोः कर्मैवान्यदत्र फलवत्तया विधेयं स्यात् न तु पूर्वकर्माश्रिताद्दध्नः फलविधिः। कुत इत्याह—फलस्य कर्मयोगित्वादिति। भावार्थाधिकरणन्यायेन फलस्य सर्वत्र कर्मयोगित्वस्य सिद्धत्वात्। तत्र हि कर्मशब्दाः फलेन सम्बध्यन्ते न द्रव्यगुणशब्दा इति साधितमिति। अथ पक्षान्तरं सिद्धान्तयितुं द्वितीयं सूत्रम्—

**अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत (२-२-२६)**

इति।

षट्पदम् । तुशब्दः पक्षं व्यावर्तयति । तस्य प्रकृतस्य स्वर्गफलस्याग्निहोत्रस्यैव दध्याख्ये गुणे सत्येतदपि फलं प्रतीयेत न तु कर्मान्तरस्यैतत्फलवत्तया विधानम् । कुत इत्याह—वाक्ययोरतुल्यत्वादिति । यत्र हि वाक्ये कर्मशब्दस्य फलेन सम्बन्धो भावार्थाधिकरणे साधितः तेनातुल्यमेतद्वाक्यमित्यर्थः । तत्र ह्य'ग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिवाक्ये विधिशक्त्यपहारकपदान्तरसमभिव्याहाराभावात् कर्मफलसम्बन्धः स्वारसिकत्वेनाङ्गीकर्तव्य इत्युक्तम् । अत्र तु दधिपदं श्रूयमाणमवश्यविधेयार्थं सद्धात्वर्थगतां विधिशक्तिमपहृत्य स्वार्थेऽवस्थापयतीति धात्वर्थानुवादेन गुणफलसम्बन्धविधानमेव न्याय्यम् । तस्मान्न कर्मभेद इति ॥

अत्रेन्द्रियकामाधिकरणे द्वे सूत्रे ॥

अथ द्वादशं रेवतीवारवन्तीयाधिकरणम् । तच्चोक्तस्य गुणफलसम्बन्धस्यापवादार्थम् । तत्र 'त्रिवृदग्निष्टुदग्निष्टोमः तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेते'त्यग्निष्टुदाख्यं कर्म विधायाम्नातं—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति वाक्यमुदाहृत्य किमयं पूर्वस्मिन्नेवाग्निष्टुदाख्ये कर्मणि पशुफलत्वेन रेवत्याधारवारवन्तीयगुणविधिरुत तत्फलककर्मान्तरविधिरिति सन्दिह्य कर्मान्तरविधौ प्रकृतवाक्ये[1] तच्छब्दार्थपरित्यागविशिष्टविधिगौरवप्रकृतहान्यप्रकृतकल्पनादिदोषप्रसङ्गात् तत्रैव फलार्थतया[2] रेवत्याधारवारवन्तीयविधिं पूर्वपक्षयित्वा स्वारसिककर्मफलसम्बन्धविधिं सिद्धान्तयितुं सूत्रम्—

**समेषु कर्मयुक्तं स्यात्** (२-२-२७)

इति ।

---

१. 'प्रस्तुतवाक्ये' ख, ग. २. 'फलार्थयोः' ख.

त्रिपदम् । तस्यार्थः—अन्योन्यानपेक्षया सामर्थ्येनैव यथाश्रुतकर्मफलसम्बन्धविधायकत्वेन समेष्वेवंजातीयकेषु वाक्येषु कर्मयुक्तमेव फलं स्यान्न गुणयुक्तम् । उक्तार्थात् तस्मात्समत्वादेव विशिष्टविधिगौरवादिदोषश्चापूर्वकर्मविधौ न प्रसज्येत । यथोक्तम्—

'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवो ह्येकयत्नतः ॥'

इति । एतच्छब्दश्च 'थैष ज्योति'रित्यत्रेवात्रापि प्रस्तूयमानकर्मवचनो न विरोत्स्यते । तस्मात्कर्मान्तरविधायकमेवैतद्वाक्यं नेन्द्रियकामवाक्यवद्गुणफलान्वयविधायकमिति ॥

अत्र रेवतीवारवन्तीयाधिकरण एकं सूत्रम् ॥

अथ त्रयोदशं सौभराधिकरणम् । तत्र 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीते'ति फलत्रयसाधनत्वेन सौभरं विधायाम्नातं 'हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति वाक्यत्रयमुदाहृत्य किमेते निधनभेदाः सौभरफलात्फलान्तरार्थतया विधीयन्ते किं वा सौभरस्यैव फलत्रयं साधयाते निधनत्रयनियमः क्रियत इति सन्दिह्य फलान्तरार्थतया विधिं पूर्वपक्षयितुमाद्यं सूत्रम्—

**सौभरे पुरुषश्रुतेर्निधने**
**कामसंयोगः (२-२-२८)**

इति ।

---

१. 'रवचनविधात्मक' ग.

चतुष्पदम् । अपरशब्दोऽत्र द्रष्टव्यः । सौभरे प्रथमं कामसंयुक्ते श्रुते योऽपरः कामसंयोगोऽत्र श्रूयते स हीषादौ निधने भवितुमर्हति, सौभरफलात्फलान्तरार्थतया निधनविधिरेवायं स्यान्न फलं साधयतः सौभरस्य निधननियम इत्युक्तं भवति। तत्र हेतुः। पुरुषश्रुतेरिति– पुरुषशब्दोऽयं पुरुषप्रयत्नलक्षणार्थः । स्तुवीतेत्यतो भेदेन कुर्यादित्येवं पुरुषप्रयत्नस्य श्रूयमाणत्वात्प्रयत्नभेदाच्च फलभेदोऽर्थातिसिध्यतीत्यर्थः । अथवा वृष्टिकामायेति पुरुषस्य श्रुतत्वात् वृष्टीच्छावत्पुरुषवाचिनो वृष्टिकामप्रातिपदिकात्परया चतुर्थ्या हीषादीनां तादर्थ्यस्य प्रतिपादितत्वादित्यर्थः ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

**सर्वस्य वोक्तकामत्वात्तस्मिन् कामश्रुतिः**
**स्यान्निधनार्था पुनःश्रुतिः (२-२-२९)**

इति ।

अष्टपदम्। वाशब्दः पक्षं व्यावर्तयति । सर्वस्य प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याभिः पञ्चभिर्भक्तिभिरुपेतस्य 'यो वृष्टिकाम' इत्यादिवाक्योक्तवृष्ट्यादिकामत्वाद्वृष्ट्यादिफलत्वात्तस्मिन् सौभरे वृष्टिकामायेत्यादिका कामश्रुतिः स्यात्तद्विशेषणार्थानि तदुपलक्षणार्थानि तानि पदानि स्युरित्यर्थः । ततश्च वृष्टिं कामयमानाय पुरुषाय यत् सौभरं विहितं[1] तत्र हीषिति निधनं कुर्यादिति वाक्यस्यार्थो भवति । अथवा वृष्ट्यात्मकाय कामाय यत्सौभरं विहितं तत्रेति कर्मधारयः। यद्वा वृष्टिः कामः फलं यस्य सौभरस्य तद्वृष्टिकामस्तस्मा इति बहुव्रीहिः। एवमुत्तरयोरपि द्रष्टव्यम्।

---

१. 'विहितं निधनं' ख.

किमर्था तर्हि प्राप्तस्य पुनःश्रुतिरत आह—निधनार्था पुनःश्रुतिरिति। निधनविशेषनियमार्थेत्यर्थः। ततश्च वृष्टिफलस्य सौभरस्य हीषिति निधनं कर्तव्यमन्नाद्यस्य फलस्योर्गिति स्वर्गफलस्य तु ऊ इतीत्येवं नियमः सिध्यति। न च सौभरावयवानां निधनादीनां समाम्नायादेव प्राप्तत्वात् तत्र हीषादिनियममात्रविधावनेकार्थविधिलक्षणवाक्यभेदापत्तिरिति ॥

अत्र सौभराधिकरणे द्वे सूत्रे ॥

इति[1] श्रीमहर्षिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे द्वितीयाध्यायस्य
द्वितीयः पादः समाप्तः।

---

१. 'ति महोपाध्याय श्री' ख, ग.　२. 'यहया' ख.

अथ द्वितीयाध्यायस्य[1] तृतीये पादे

## प्रथमं रथन्तरसामाधिकरणम् ।

तत्र ज्योतिष्टोमप्रकरणपठितं 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामाग्रयणाग्रानि'ति वाक्यत्रयमुदाहृत्य किं ज्योतिष्टोमात्कर्मान्तरं जगत्सामवद्रथन्तरसामाख्यं बृहत्सामाख्यं चात्रोपदिश्यते किं वा ज्योतिष्टोम एव ग्रहाग्रतानिमित्तत्वेन बृहद्रथन्तरसामभ्यामवाच्छिन्नोऽभिधीयत इति सन्दिह्य कर्मान्तरत्वं पूर्वपक्षयितुमाद्यं सूत्रं —

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं**
**प्रयोजयेत्संयोगस्याशेषभूतत्वात्** (२-३-१)

इति ।

सप्तपदम् । तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्तसूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । बृहद्रथन्तरसामत्वलक्षणो गुणः कर्मान्तरं प्रयोजयेदाक्षिपेत् कल्पयेदित्यर्थः । कारणमाह— क्रतुसंयोगादिति । बृहद्रथन्तरसामत्वलक्षणस्य गुणस्य बृहद्रथन्तरसामशब्दयोर्वाऽपूर्वेण क्रतुना संयोगादित्यर्थः । कथमपूर्वक्रतुसंयोगः? यतः पृष्ठस्थानगताभ्यां बृहद्रथन्तराभ्यां युक्तत्वात् ज्योतिष्टोमस्यापि तत्संयोगो विद्यत एव । अत आह—संयोगस्याशेषभूतत्वादिति । ज्योतिष्टोमे बृहद्रथन्तरसामसंयोगस्याशेषभूतत्वाद्ग्रहाग्रत्वलक्षणाङ्गरूपशेषानुष्ठानवेलायां निष्पन्नत्वाभावादित्यर्थः । निष्पन्नेन हि निमित्तेन भाव्यम् । निष्पाद्येन नैमित्तिकेन ।

---

१. 'यस्याध्या' ख.

अत्र तु तद्विपरीतम्। प्रातःसवने हि ग्रहाग्रता। माध्यन्दिने पृष्ठानि। अतोऽत्र निमित्तनैमित्तिकत्वाभावात् सामसंयोगग्रहाग्रत्वयोः कर्मान्तरक्लृप्तिर-विहता। अथवा यदि जगत्सामाग्रयणाग्रानिति जगत्सामसंयोगस्य ज्योति-ष्टोमं प्रत्यनङ्गत्वात्तत्साहचर्येण बृहद्रथन्तरसामसंयोगयोरप्यनङ्गभूतत्वा-दित्यर्थः। यद्वा अस्य बृहद्रथन्तरसामक्रतुसंयोगस्याशेषे क्रतौ भूतत्वात्सा-मान्तरव्यवच्छेदेन कृत्स्नक्रतुसंयोगात्मकत्वादित्यर्थः। नहि सद्भावमात्रेण[1] तयोर्विशेषणत्वं सम्भवति। किन्तु अन्यव्यवच्छेदेन। स च न ज्यो-तिष्टोमे सम्भवति। अन्येषामपि गायत्रादीनां साम्नां तत्र विद्यमानत्वात्। अतस्तत्रासम्भवन् केवलबृहद्रथन्तरसामत्वलक्षणो गुणः कर्मान्तरं कल्प-यतीति ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् (२-३-२)**

इति।

सप्तपदम्। तुशब्दः पक्षं व्यावर्तयति। एकस्य ज्योतिष्टोमस्य रथन्तर-सामत्वबृहत्सामत्वात्मकयोर्लिङ्गयोर्भेदाद् ग्रहाग्रताविधिप्रयोजनार्थमुच्येत उक्तिः क्रियेतेति भावे लकारः। अथवा रथन्तरसामत्वं बृहत्सामत्वं चोच्येतेति कर्मण्येवास्तु। ननु सोमः स्यादिति कर्मान्तरविधिप्रतीतेः कथमेकत्वमत आह—एकत्वं गुणवाक्यत्वादिति। ग्रहाग्रतालक्षणगुणविधानार्थवाक्य-त्वादकर्मान्तरविधित्वेन बृहद्रथन्तरसामशब्दोक्तयोः कर्मणोः ज्योतिष्टोमेन सहैकत्वं विज्ञायत इत्यर्थः। अथवा नन्वनेकसामकत्वाज्ज्योतिष्टोमस्य बृह-

---

१. 'तद्भावमात्रं न' क.

द्रथन्तरसामशब्दयोस्तन्मात्रसामयुक्तकर्माभिधायिनोस्तद्वाचकत्वानुपपत्तिरि-त्याशङ्कानिरासार्थत्वेनेदमुच्यते— ज्योतिष्टोमस्य 'रथन्तरं पृष्ठं भवति' 'बृहत्पृष्ठं भवती'ति गुणवाक्यान्वयाद् बृहद्रथन्तरवत्त्वेनानेकसामकत्वेऽपि बृहद्रथन्तरसामव्यपदेशोपपत्तेस्तदुक्तकर्मैकत्वं विज्ञायत इत्यर्थः। वैकल्पिकत्वाच्चानयोरयोगव्यावृत्त्यैव विशेषणत्वसम्भवान्न कृत्स्नक्रतुसंयोगापरपर्यायोऽन्ययोगव्यवच्छेदोऽपेक्षितव्यः। यत्तु जगत्सामसामान्यतो दृष्टमुक्तम्, तदेवंजातीयकेषु तस्याप्रमाणत्वादयुक्तम्। निमित्तनैमित्तिकपौर्वापर्यवैपरीत्योक्तिश्च भविष्यद्वर्षगृहकर्मनिमित्तत्वदर्शनादनुपाल(?म्भनीया)म्भः।

तस्माद् ग्रहाग्रताभेदनिमित्तत्वेन कीर्त्यते।
ज्योतिष्टोमस्य पृष्ठस्थरथन्तरबृहत्स्तुतिः॥

अत्र रथन्तरसामाधिकरणे द्वे सूत्रे॥

अथ द्वितीयमवेष्ट्यधिकरणम्। तत्र 'राजा राजसूयेन स्वाराज्यकामो यजेते'ति वाक्यविहिते राजसूये क्रतौ "आग्नेयमष्टाकपालं निर्वपेत्, ऐन्द्रमेकादशकपालं, वैश्वदेवं चरुं, मैत्रावरुणीमामिक्षां, बार्हस्पत्यं चरु"मिति पञ्चहविष्कामवेष्टिं[3] विधायाम्नातानि 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये[4] विधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेव'मिति वाक्यान्युदाहृत्य किमत्र ब्राह्मणादीनां प्राप्तानां निमित्तार्थं श्रवणमुताप्राप्तानां प्राप्त्यर्थमिति सन्दिह्य, राजशब्दस्य राज्यकर्तृत्वनिमित्तत्वाद्वर्णत्रयवाचकत्वेन राजसूये त्रयाणामपि वर्णानामधिकारान्निमित्तार्थं श्रवणमिति पूर्वपक्षं कृत्वा राजशब्दस्य जातिनिमित्तत्वात्

१. 'रयन्या' ख. २. 'कनि' क. ३. 'मवेष्टिं नामेष्टिं वि' ख, ग. ४. 'निधाया' ख, ग.

क्षत्रियवाचकत्वेन राजसूये क्षत्रियस्यैवाधिकाराद्ब्राह्मणादिप्राप्त्यर्थं श्रवणमिति सिद्धान्तं वक्तुं सूत्रं —

**अवेष्टौ यज्ञसंयोगात्क्रतुप्रधान-**
***मुच्येत (२-३-३)**

इति ।

चतुष्पदम् । तत्रोच्यमानानिर्देशादुच्येतेत्येतत्साकाङ्क्षं पूर्वाधिकरणपूर्वपक्षसूत्रस्थगुणशब्दानुषङ्गेण पूरणीयम् । तस्य च पुल्लिङ्गस्य क्रतुप्रधानमित्यनेन नपुंसकलिङ्गेन सामानाधिकरण्यासम्भवात् तत्सिद्ध्यर्थं सरूपपदोपस्कारः कर्तव्यः । अवेष्टिशब्दश्च तत्सन्निधिपठितब्राह्मणादिवाक्योपलक्षणार्थो द्रष्टव्यः । तदयमर्थः—अवेष्टिसन्निधिपठिते ब्राह्मणादिवाक्ये श्रूयमाणं ब्राह्मणादिगुणस्वरूपं क्रतुप्रधानमुच्येत । बहुव्रीहिसमासोऽयम् । अवेष्टिसंज्ञकेन क्रतुना प्रधानेन सहितमुच्येतेत्यर्थः । अथवा क्रियाविशेषणमेवैतत् । तदा चान्तरेणैवोपस्कारं गुणशब्दः सम्बध्येत । ब्राह्मणादिर्गुणः क्रतुप्रधानत्वेनोच्येतेति । कारणमाह—यज्ञसंयोगादिति । अत्र कस्येत्यपेक्षा पूर्वाधिकरणसिद्धान्तसूत्रस्थस्यैकस्येति शब्दस्यानुषङ्गेण पूरणीया । एकस्य क्षत्रियस्यैव राजसूययज्ञसंयोगादिति । ततश्च तदन्तर्गतायामवेष्टौ ब्राह्मणवैश्ययोरप्राप्ते ब्राह्मणादिवाक्यै राजसूयाद्बहिर्वर्णत्रयसाधारणमवेष्ट्यन्तरं तत्प्रयोगान्तरं वोपदिश्यत इत्यभ्युपगन्तव्यम् । तत्र राजसूयमध्येऽनुष्ठीयमानायाः स्वाराज्यफलत्वं क्षत्रियकर्तृत्वं च स्यात् । बही राजसूयात्प्रयुज्यमानायास्तु त्रैवर्णिककर्तृत्वं, "एतयान्नाद्यकामं याजयेदि"ति वाक्यान्तरविहितान्नाद्यफलत्वं च प्रत्येतव्यम् । ननु यदि रथन्तरसामेत्यत्र

---

१ 'स्वाधि' क॰

* मुच्यते इति मुद्रितभाष्यादिपाठः॰

यदिशब्दोपहतत्वाद्विधिशक्तेः कर्मान्तरविध्यनुपपत्त्या बृहद्रथन्तरयोर्निमित्तार्थं श्रवणमित्युक्तम्। स च यदिशब्दोऽत्राप्यस्ति। अतः कथं कर्मान्तरविध्युपपत्तिः ? उच्यते— बृहद्रथन्तरयोर्हि वैकल्पिकत्वेन पक्षप्राप्तयोर्ज्योतिष्टोमे निमित्तार्थत्वेन श्रवणमुपपद्यते। ब्राह्मणवैश्ययोस्तु जातिशब्दत्वाद्राजशब्दस्य तत्कर्तृके राजसूये न कथञ्चिदपि प्राप्तिः सम्भवति। अतो यदिशब्दस्य निमित्तार्थत्वाभावान्निपातानेकार्थत्ववशेनार्थान्तरपरत्वकल्पना न दोषाय इति ॥

अत्रावेष्ट्यधिकरण एकं सूत्रम् ॥

अथ तृतीयमाधानाधिकरणम्। तत्र 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य' इति वाक्यान्युदाहृत्य किं ब्राह्मणादीनामाधाने प्राप्तानां वसन्तादिकालविधानं प्रति निमित्तार्थत्वेनात्र श्रवणमुत तेषामप्राप्तमेवाधानं कालविशिष्टं विधीयत इति सन्दिह्य "यदाहवनीये जुह्वती"त्यादिवाक्यैराहवनीयादिसाध्यत्वेनावगतैरग्निहोत्रादिकर्मभिस्तदुपायभूतस्याधानस्याक्षेपात् 'य एवं विद्वानग्निमाधत्त' इति वाक्यान्तरविहितत्वाद्वा प्राप्तेर्निमित्तार्थं श्रवणमिति पूर्वपक्षं कृत्वा कालविशिष्टाधानविधिं सिद्धान्तयितुं सूत्रं—

## आधानेऽसर्वशेषत्वात् (२-३-४)

इति।

द्विपदम्। तत्र हेतुमात्रनिर्देशात् क्रतुप्रधानमुच्येतेति पूर्वसूत्रोक्तप्रतिज्ञानुषङ्गेण योजना कर्तव्या। क्रतुशब्दश्च आधानस्याग्निसंस्कारत्वेन क्रतुत्वाभावात्कर्ममात्रवचनो द्रष्टव्यः। आधानशब्दोऽपि तद्वाक्योपलक्षणार्थः प्रत्ये-

---

१. 'कार्थवशेन' ग. २. 'कृतस्य' क, ग.

तव्यः। आधानवाक्येऽत्र श्रूयमाणो ब्राह्मणादिर्गुण आधानकर्मप्रधानत्वेनोच्येत। अप्राप्ताधानविधानार्थत्वेनोच्येतेत्यर्थः। तत्र हेतुः–असर्वशेषत्वादिति। आधानस्याग्निशेषत्वेनाग्निहोत्रादिसर्वकर्मशेषत्वाभावात् तैरनाक्षिप्तस्यास्मिन् वाक्ये विधेयत्वावश्यंभावादित्यर्थः। 'य एवं विद्वानि'ति तु वाक्यं यद्वृत्त-वर्तमानापदेशाभ्यामविधायकमेव।

तस्मादाधानमत्रैव विशिष्टं कालकर्तृभिः।
विधीयते नापरत्र न चाप्याक्षिप्तमध्वरैः॥

अत्राधानाधिकरणेऽप्येकं सूत्रम्॥

अथ चतुर्थमयनाधिकरणम्। तत्र "दाक्षायणयज्ञेन स्वर्गकामः प्रजाकामो वा यजेते"ति वाक्यमुदाहृत्य गुणफलसम्बन्धकर्मान्तरविधित्वे सन्दिह्य कर्मान्तरविधित्वं पूर्वपक्षयितुमाद्यं सूत्रं —

## अयनेषु चोदनान्तरं संज्ञोपबन्धात् (२-३-५)

इति।

त्रिपदम्। अयनशब्दो दाक्षायणयज्ञवचनः। स च तद्वाक्योपलक्षणार्थः। तस्य चैकत्वेऽपि दाक्षायणयज्ञे "द्वे पौर्णमास्यौ द्वे अमावास्ये यजेते"त्यावृत्तिमत्कर्मवाचित्वादयनेष्विति बहुवचननिर्देशस्तद्गतबहुत्वापेक्षो द्रष्टव्यः साकंप्रस्थायीयादितुल्यन्यायोदाहरणान्तरापेक्षया[3] छत्रिन्यायेन तद्तद्योगेऽपि तच्छब्दप्रयोगसिद्धेर्बहुवचनोपपत्तिः। तदयमर्थः– अयनेषूक्तलक्षणेषु चोद्यत इति व्युत्पत्या चोदनान्तरमेव फलवत्तया विधेयं स्यान्न गुणः। कुत इत्याह—संज्ञोपबन्धादिति। उद्भिदादिवत्कर्मसमानाधिकरणतया दाक्षा-

१. 'गुण आधानत्वे' ख. २. 'स्यावि' ख. 'स्याविशेषणत्वेन' ग. ३. 'या। वा छत्रि' ख, ग.

यणयज्ञसंज्ञाया उपबन्धात् समभिव्याह्रियमाणत्वादस्मिन् वाक्य इत्यर्थः ॥

अथ द्वितीयं पूर्वपक्षाभ्युच्चयसूत्रं —

## अगुणा* च कर्मचोदना (२—३—६)

इति ।

त्रिपदम् । तस्यार्थः—यस्मादगुणा दध्यादिवत्प्रसिद्धेन गुणेनानन्विता चोदना कर्मचोदनात्वेन प्रसिद्धा, तस्मादपि कर्मान्तरमिति चोदना(शब्दान्तराऽन्तरशब्दा)ध्याहारेण योजना कर्तव्या ॥

अथ तृतीयमपि पूर्वपक्षाभ्युच्चयसूत्रं —

## समाप्तं च फले वाक्यम् (२-३-७)

इति ।

चतुष्पदम् । तस्यार्थः—यस्मात्फलस्यानुपादेयत्वेन तत्र कर्मविधानात् फले वाक्यं समाप्तं लक्ष्यते तस्मादपि कर्मान्तरमिति ॥

अथ चतुर्थं सिद्धान्तसूत्रं —

## विकारो वा प्रकरणात् (२—३—८)

इति ।

त्रिपदम् । वाशब्दः पक्षं व्यावर्तयति । दर्शपूर्णमासयोरेव विकारः प्रयोगान्यथात्वलक्षणो गुणोऽत्र वाक्ये फलाय चोद्यते, न कर्मान्तरम् । कुत इत्याह—प्रकरणादिति । सन्निधिलक्षणात्प्रकरणात् प्रकृतप्रत्यभिज्ञाया

---

* 'णाञ्च' इति न्यायमालापाठः.

१. 'तस्मा', २. 'चोदनात्वेन', ३. 'तदस्मादपि' क. ४. 'व्येति' ॥ ख, ग.

विद्यमानत्वादित्यर्थः । अथवोक्थ्यादिवदलौकिकस्यापि प्राकरणिकवाक्यान्तरालोचनेनावृत्तिलक्षणस्य गुणस्य फले विध्युपपत्तेरित्यर्थः ॥

अथ पञ्चमं सिद्धान्ताभ्युच्चयसूत्रं—

## लिङ्गदर्शनाच्च (२-३-९)

इति ।

द्विपदम् । 'त्रिंशद्वर्षाणि दर्शपूर्णमासाभ्यां यजेत', 'यदि दाक्षायणयाजी स्यादथो पञ्चदश वर्षाणि यजेतात्र ह्येषा संपत्सम्पद्यत' इति दाक्षायणयज्ञपञ्चदशवर्षानुष्ठानेन दर्शपूर्णमासत्रिंशद्वर्षानुष्ठानसम्पत्तिकीर्तनात्मकस्य लिङ्गस्य दर्शनाच्च दर्शपूर्णमासविकारो दाक्षायणयज्ञ इत्यर्थः ॥

अथ षष्ठं संज्ञोपबन्धनिर्वाहार्थं सूत्रं—

## गुणात्संज्ञोपबन्धः (२-३-१०)

इति ।

द्विपदम् । तस्यार्थः—दक्षस्योत्साहिन ऋत्विजो दाक्षाः, तत्कर्तृकमयनं दाक्षायणमित्येवं यौगिकार्थान्वयलक्षणाद्गुणात् संज्ञोपबन्धो दर्शपूर्णमासयोरेवोपपद्यत इति ॥

अथ सप्तमं 'समाप्तं च फले वाक्य'मित्यस्य परिहारार्थं सूत्रं—

## समाप्तिरविशिष्टा (२-३-११)

इति ।

द्विपदम् । तस्यार्थः– या अनुपादेयफलान्वयेन कर्मणो विधेयत्वात् फले वाक्यपर्यवसानात्मिका वाक्यसमाप्तिरुक्ता सा गुणफलसम्बन्ध-

विधानेऽप्यविशिष्टा । उभयत्रापि फलस्योद्दिश्यमानत्वेनाविधेयत्वाविशेषादिति। एवं 'साकंप्रस्थायीयेन पशुकामो यजेते'त्यत्रापि प्रकृतेऽमावास्यायागेऽनवदाय सान्नाय्यं कुम्भीभ्यां साकमाहवनीये होतुं प्रस्थानलक्षणः साकंप्रस्थायीयाख्यो गुणः पशुफलाय विधीयत इति योजनीयमिति ॥

अत्रायनाधिककरणे सप्त सूत्राणि ॥

अथ पञ्चमं श्वेतचर्वधिकरणम् । तत्रानारभ्याधीतं 'वायव्यं श्वेतमालभेत भूतिकामः', 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति च वाक्यमुदाहृत्य किं दार्शपौर्णमासिकयोरालम्भनिर्वापयोः श्वेतचरुगुणविध्यर्थमेतदुत यावदुक्तकर्मविधानार्थमाहोस्विद्यागचोदनार्थमिति त्रेधा सन्दिह्माद्यपक्षपरिग्रहार्थमाद्यं सूत्रं —

**संस्कारश्चाप्रकरणे-**

**ऽकर्मशब्दत्वात् (२-३-१२)**

इति ।

चतुष्पदम् । तत्र चशब्देन विकारो वेति पूर्वाधिकरणसिद्धान्तसूत्रस्थवाशब्दोक्तकर्मान्तरत्वातिदेशादप्रकरणे श्रूयमाणोऽयमालम्भाख्यो निर्वापाख्यश्च संस्कारोऽकर्मान्तरमिति प्रतिज्ञार्थः सम्पद्यते । अप्रकरणशब्दश्च हेतुगर्भो द्रष्टव्यः । अनारभ्याधीतानां पर्णमयीत्वादिवत्प्रकृत्यर्थत्वस्य न्याय्यत्वादिति[1] पुनः स्पष्टमेव हेत्वन्तरमाह—अकर्मशब्दत्वादिति । विधायकस्य श्वेतचरुसञ्चरितत्वेनाकर्मशब्दत्वादकर्मविषयत्वादित्यर्थः । ततश्च दर्शपूर्णमासयोः—'ईषामालभेते'ति विहिते शकटेषालम्भे श्वेतत्वं गुणो

1. 'त्वादिति' क.

विधीयते तण्डुलचूर्णादिना श्वेतीकृत्यालम्भः कर्तव्य इति। तथा 'चतुरो मुष्टीन्निर्वपती'ति विहिते निर्वापे चर्वाख्यो गुणो विधीयते। चरुरिति च चरुस्थालयत्रोच्यते। द्वितीयया सप्तमीं लक्षयित्वा चरौ निर्वापः कर्तव्यश्चरुपरिमितो वेति। वायव्यसौर्यशब्दौ च वायुगुणस्पर्शवत्त्वाद्वनस्पतीनां तेजस्वित्वसामान्याच्चाग्निसूर्ययोरीषाग्नेययोर्गौणौ द्रष्टव्यौ। भूतिब्रह्मवर्चसफलयोरपि दर्शपूर्णमासयोरेव सार्वकाम्यमाप्तयोरनुवादः। तस्माद्गुणविधी इति॥

अथ द्वितीयपक्षपरिग्रहार्थं द्वितीयं सूत्रं—

**यावदुक्तं वा कर्मणः**
**श्रुतिमूलत्वात् (२-३-१३)**

इति।

चतुष्पदम्। वाशब्दः पक्षं व्यावर्तयति। यावदुक्तमत्र वाक्यद्वये तावदेव प्रतिपत्तव्यं न ततोऽधिकम्। तच्च गुणफलविशिष्टालम्भनिर्वापमात्रविधानमभिमतम्। कारणमाह कर्मणः श्रुतिमूलत्वादिति। कर्मण आलम्भस्य निर्वापस्य च विधेयत्वेन श्रुतिमूलत्वात्। तच्च त्वदुक्तादेवाप्रकरणे श्रूयमाणत्वात् सिध्यतीति गुणविधिपक्षदूषणार्थतया सूत्रं व्याख्यातम्। वक्ष्यमाणयजिमत्त्वपक्षदूषणार्थमप्येतदेवं व्याख्यातव्यम्। यावदुक्तमेतत्स्यान्न यजिमत्, कुतः कर्मणः श्रुतिमूलत्वात्। श्रुतिमूलं हि सर्वत्र यागकर्म। न चात्र यागः श्रूयते। आलम्भनिर्वापमात्रश्रवणात्। तस्माद्वायुसूर्यावुद्दिश्य श्वेतद्रव्यालम्भचरुनिर्वापमात्रमत्र भूतिब्रह्मवर्चसफलार्थतया विधीयत इत्ययमेव पक्षो न्यायानिति॥

अथ तृतीयं पक्षं सिद्धान्तयितुं तृतीयं सूत्रं—

**यजिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां**
**कर्मसम्बन्धात् (२-३-१४)**

इति।

---

१. 'मेश्रु', २. 'त्वदूष' ख. ३. 'ख' क.

पञ्चपदम् । तुशब्दः पक्षं व्यावर्तयति । यजिर्याग एवापूर्वोऽत्र वाक्यद्वये फलार्थतया विधीयते । नालम्भनिर्वापमात्रद्वयम् । कारणमाह— द्रव्यफलभोक्तृसंयोगादिति । भोक्तृशब्दोऽत्र देवतावचन, देवताया भोक्तृत्वाभावेऽपि त्यज्यमानहविरुद्देश्यत्वात्मकहविर्भोक्तृमात्रवाची द्रष्टव्यः। तस्य च फलशब्दव्यवहितेनापि द्रव्यशब्देनान्वयो विवक्षितः । ततश्च द्रव्यस्य श्वेतादेः फलस्य भूत्यादेर्द्रव्यभोक्तुर्वाय्वादेर्देवतालक्षणस्यास्मिन् वाक्यद्वये संयोगात्समभिव्याहारादिति हेतुर्भवति । कथमयं हेतुर्याग-साधक इति चेदत आह—एतेषां कर्मसम्बन्धादिति । एतेषां द्रव्यादीनां यागकर्मणा विनानुपपत्तेस्तदाक्षेपकत्वादित्यर्थः ॥

अथ चतुर्थं सिद्धान्ताभ्युच्चयसूत्रं—

## लिङ्गदर्शनाच्च (२-३-१५)

इति ।

द्विपदम् । तस्यार्थः—'सोमारौद्रं चरुं निर्वपेदि'ति यजिशब्द-रहितेऽपि विहिते 'परिश्रिते याजये'दिति गुणविधिपरे वाक्ये यजिनानु-वादात्मकस्य लिङ्गस्य दर्शनाच्च यजिमती एते कर्मणी इति ॥

अत्र श्वेतचर्वधिकरणे चत्वारि सूत्राणि ॥

अथ षष्ठं वत्सालम्भाधिकरणम् । तत्राग्निहोत्रदोहाधिकारे श्रुतं 'वत्समालभेते'ति वाक्यमुदाहृत्य किमालम्भमात्रं संस्कारोऽयमुत यजिम-देतत्कर्मेति सन्दिह्य प्राणिद्रव्यालम्भसामान्याद्यजिमत्कर्मविधानं पूर्वपक्ष-यित्वा देवताभावादालम्भमात्रविधानं सिद्धान्तयितुं सूत्रं—

---

१. 'श्वात्म' क.

## विशये प्रायदर्शनात् (२-३-१६)

इति ।

द्विपदम् । तस्यार्थः—अस्मिन् यजिमद्यजिमत्कर्मविधिसंशये प्राय-दर्शनान्निर्णयः कर्तव्यः । दोहनादिसंस्कारकर्मप्रायपठितत्वाद्वत्सालम्भस्य यावदुक्तालम्भमात्रसंस्कारविधिरेवायं प्रत्येतव्य इत्युक्तं भवति । तच्च पूर्वा-धिकरणपूर्वपक्षसूत्रस्थयोर्यावदुक्तसंस्कारशब्दयोरनुषङ्गात्सिध्यतीति ॥

अथ द्वितीयं सिद्धान्ताभ्युच्चयसूत्रं—

## अर्थवादोपपत्तेश्च (२-३-१७)

इति ।

द्विपदम् । तस्यार्थः—वत्सनिकान्ता हि[2] पशव इति वत्सप्रियत्वा-भिधायकस्यार्थवादस्योपपत्त्यर्थं च मातृसमीपबन्धनात्मकयावदुक्तालम्भ-मात्रसंस्कारविधिरेवायं द्रष्टव्यः । संज्ञपनार्थत्वे त्वालम्भस्य वत्सप्रिय-त्वोक्तिरर्थवादेऽनुपपन्ना स्यात् ॥

तस्मात् प्रस्तावनार्थं गोः समीपे वत्सबन्धनम् ।
यल्लोके क्रियते सोऽयं वत्सालम्भोऽत्र कीर्तितः ॥ इति ।

अत्र वत्सालम्भाधिकरणे द्वे सूत्रे ॥

अथ सप्तमं चरूपधानाधिकरणम् । तत्राग्नौ श्रुतं 'चरुमुपदधातीति' वाक्यमुदाहृत्य किं चरोरुपधानमात्रं कार्यमुत यागोऽपीति सन्दिह्य 'नैवारश्चरुर्भवति, बृहस्पतेर्वा एतदन्नं यन्नीवारा' इति वाक्यशेषस्थाया बृहस्पतेर्देवताया लाभाच्चरोर्यागार्थत्वस्यावश्यंभाव्याच्च बार्हस्पत्यं चरुयागं कृत्वा पश्चाद्द्वितीयानिर्दिष्टस्य चरोः शेषस्य प्रतिपत्तिरूपमुपधानं कर्तव्य-मिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रं—

---

१. 'वैसू' क. २. 'पि' क.

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् (२-३-१८)

इति।

पञ्चपदम्। तुशब्द उत्सूत्रं पूर्वपक्षं व्यावर्तयति। संयुक्तश्चरुरर्थशब्देन कार्यशब्देनोपदधातीत्यनेन तदर्थ उपधानकार्यार्थ एव स्यान्न यागार्थोऽपि। कुत इत्याह—श्रुतिसंयोगादिति। 'चरुमुपदधाती'ति श्रुत्या समस्तस्य चरोरुपधानमात्रेण संयोगस्य गम्यमानत्वादित्यर्थः। स्थलनिर्वर्तकत्वेन चोपधानं प्रति चरोः प्राधान्याद्द्वितीयोपपत्तेर्न द्वितीयया प्रतिपत्तित्वसिद्धिः। 'बृहस्पतेर्वा एतद्न्नमि'ति त्वर्थवादत्वेन यथाकथञ्चिन्नेतव्यं न देवताविधित्वेन। चरोरपि न यागार्थत्वं स्वाभाविकं, किं तु श्रुत्यादिप्रमाणाधीनमेव तच्चोपधानार्थत्वेऽप्यस्तीति न तादर्थ्यानुपपत्तिरिति॥

अत्र चरूपधानाधिकरण एकं सूत्रम्॥

अथाष्टमं पात्नीवताधिकरणम्। तत्र 'त्वाष्ट्रं पात्नीवतमालभेते'ति प्रकृत्याम्नातं 'पर्यग्निकृतं पात्नीवतमुत्सृजती'ति वाक्यमुदाहृत्य किमयं पूर्वस्मिन्नेव कर्मणि गुणविधिरुत कर्मान्तरविधिरिति सन्दिह्य केवलेन पात्नीवतशब्देन त्वाष्ट्रपात्नीवतोभयविशेषणविशिष्टयागाप्रतीतेर्यागान्तरविधिं पूर्वपक्षयित्वा गुणविधिं सिद्धान्तयितुं सूत्रं—

## पात्नीवते तु *पूर्ववत्वादवच्छेदः (२-३-१९)

इति।

चतुष्पदम्। तुशब्दः पूर्वपक्षं व्यावर्तयति। पात्नीवतशब्दोऽयं मनोतास्थाग्निशब्दवद्विशिष्टानुवादो द्रष्टव्यः। ततश्चायमर्थः—त्वाष्ट्रपात्नीवत-

---

* भाष्ये न्यायमालायां कौस्तुभे च 'पूर्वत्वा'दित्येव पाठः, 'पूर्ववत्त्वादपच्छेद' इति कुतूहलवृत्तौ।

१. 'उपादान' क०

देवते पूर्वस्मिन्यागे 'पर्यग्निकृतं पात्नीवतमुत्सृजती'ति वाक्यस्थस्य पर्यग्नि-कृतशब्दस्य यथासिद्धप्राकृतपर्यग्निकरणोपस्थापकत्वात् कृतपर्यग्निकरणतो-क्त्या निर्वृत्तपूर्वाङ्गताया अर्थात्प्रतीतेः पूर्ववत्वात्पूर्वाङ्गवत्त्वादुत्तरेषामङ्गा-नामभावलक्षणोऽवच्छेदस्तदन्ताङ्गरीतिप्रतिपादनफलो गुण उत्सृजतिशब्देन विधीयते । तस्मान्न कर्मान्तरविधिरिति ॥

अत्र पात्नीवताधिकरणे एकं सूत्रम् ॥

अथ नवममंश्वदाभ्याधिकरणम् । तत्र 'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते, अंशुं गृह्णाती'ति वाक्यद्वयमुदाहृत्य किं ज्योतिष्टोमे ग्रहाभ्यासान्तरविधी एतावुत कर्मान्तरविधी इति सन्दिह्य । दाभ्यवाक्ये यागस्य श्रुतत्वादंशुवाक्ये गृह्णात्यनुमितत्वाच्चांश्वदाभ्यशब्दौ यागनामनी । नाम्नश्च प्रकृतादपि कर्मणो भेदकत्वमुक्तं किमुताप्रकृतात् । ततश्च गृह्णातिसामान्याज्ज्योतिष्टोमप्रकृतित्वे सति तदीयेतिकर्तव्यताप्राप्ते-र्द्रव्यदेवतासम्बन्धाद्यागान्तरविधी[1] इति पूर्वपक्षं कृत्वा ज्योतिष्टोमे ग्रहा-भ्यासविधी इति सिद्धान्तं वक्तुं सूत्रं—

*अद्रव्यत्वात्तु केवले
कर्मशेषः स्यात् (२-३-२०)

इति ।

पञ्चपदम् । तुशब्दः पक्षं व्यावर्तयति । कैश्चित्तुशब्दो न पठ्यते । अत्र केवले यजतिरहिते ग्रहणे नामधेये च श्रूयमाणेऽंशुग्रहोऽदाभ्यग्रहश्च कर्मणो ज्योतिष्टोमस्य शेषः स्यादिति प्रतिज्ञायते । तत्र हेतुः—अद्रव्यत्वादिति ।

*'अद्रव्यत्वात् केवले' इति भाष्ये न्यायमालायां कुतूहलवृत्तौ च पाठः ।

१ 'क्र....यान्तरौ' क. २. 'धिरिति' क.

उपलक्षणार्थमेतददेवताकत्वस्यापि। तथा च भाष्ये "न च द्रव्यदेवतं श्रूयत" इत्युक्तम्। न्यायसुधायामप्यदेवताकत्वस्यात्राभिप्रेतस्यास्पष्टत्वात् सूत्रेऽनुक्तिरित्युक्तम्। ततश्च द्रव्यदेवतयोरभावेन यागान्तरविधित्वासम्भवादिति हेतुरुक्तो भवति॥

नन्वत्रादाभ्यवाक्ये यत्सोमायेति पदं श्रुतम्।
तद्देवताविधानार्थमस्तु नैवं भविष्यति॥

'यत्ते सोमादाभ्यमि'ति मन्त्रवर्णात्प्रसिध्यतः।
सोमस्य देवतात्वेन यस्मात्तदनुवादकम्॥

अतो गृह्णातिसामानाधिकरण्यात् ग्रहनामधेयत्वमंश्वदाभ्यशब्दयोरैन्द्रवायवादिशब्दवदङ्गीकृत्य तद्वदेव ज्योतिष्टोमे ग्रहाभ्यासान्तरविधित्वमत्र वाक्यद्वये द्रष्टव्यं, न यागान्तरविधित्वम्। अंशुवाक्ये यज्यश्रवणाददाभ्यवाक्ये श्रुतस्यापि गृहीत्वाशब्दार्थसङ्क्रान्तविधिशक्तिना प्रत्ययेनाविधेयत्वात्।

तस्माद्यागमनूद्यात्र ग्रहणस्य विधिर्भवेत्।
अदाभ्यवाक्येंऽशुवाक्ये त्वश्रुतेर्यजिनान्वयः॥

गृह्णात्युपस्थापितेन ज्योतिष्टोमात्मनेष्यते।
यद्वा प्रकरणे ज्योतिष्टोमस्यास्त्यनयोः श्रुतिः॥

केषांचित्तैत्तिरीयाणां सा चानन्यप्रयोजना।
ग्रहयोरनयोः कर्मविनियोगं करिष्यति॥

अत्रांश्वदाभ्याधिकरणे[3]ऽप्येकं सूत्रम्॥

---

१. 'प्रेतस्याविस्पष्टस्य' ख. २. 'क्ये श्रुत्वापि गृहीत्वा शब्दाश्च संक्रा' क. ३. 'णे एकं' ग.

अथ दशममग्न्यधिकरणम् । तत्र 'य एवं विद्वानग्निं चिनुत' इति वाक्यमनन्तरपठितानि 'अथातोऽग्निमग्निष्टोमेनानुयजाति तमुक्थ्येन तं षोडशिने'त्यादिवाक्यानि चोदाहृत्य किमग्निशब्दस्य यागनामत्वमङ्गीकृत्य चिनुत इत्याख्यातेन कर्मान्तरविधिरभ्युपगन्तव्यः, किं वा द्रव्यवचनत्वमङ्गीकृत्य ज्योतिष्टोमादिषु गुणविधिरिति सन्दिह्य पूर्वपक्षं पूर्वपक्षयितुमाद्यं सूत्रम् —

अग्निस्तु लिङ्गदर्शनात्
क्रतुशब्दः प्रतीयेत (२-३-२१)

इति ।

पञ्चपदम् । तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । अत्राग्निरित्यग्निशब्दमाह । अग्निशब्दोऽयं क्रतुशब्दः प्रतीयेत क्रतुनामतया प्रतीयेतेत्यर्थः । ततश्च तन्नामकयागान्तरविधिरयमित्यर्थादुक्तं भवति । कारणमाह—लिङ्गदर्शनादिति । लिङ्गं ह्यस्मिन्नर्थे दृश्यते 'अग्नेः स्तोत्रमग्नेः शस्त्रं, षडुपसदोऽग्ने'रित्यग्नेः स्तोत्रशस्त्रोपसत्सम्बन्धकीर्तनात्मकम् स्तोत्रशस्त्रोपसदो हि यागस्य भवन्ति । तस्मादग्नेर्यागत्वसिद्धिरिति । तथा 'अथातोऽग्निमग्निष्टोमेनानुयजती'त्यस्मिन् वाक्येऽग्निमग्निष्टोमाख्येन संस्थाविशेषेणानुयजति ज्योतिष्टोमानन्तरं यजतीति यजतिनानुवादः पूर्वस्मिन् वाक्ये चिनोतेर्यजिमद्वचनत्वं साधयति । संस्थाविधित्वाभावे त्वस्य वाक्यस्याग्निमग्निष्टोमादिभिर्यागैरनुयजतीत्यग्निष्टोमादीनामनुयागत्वोक्तिरग्नेर्यागत्वे न सिध्यतीति पूर्वत्र यागविधित्वकल्पना स्यादिति ॥

---

१. 'जतिम', २. 'रनुया' क.

अथ द्वितीयं सिद्धान्तसूत्रं —

**द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् (२-३-२२)**

इति ।

पञ्चपदम् । वाशब्दः पक्षं व्यावर्तयति । द्रव्यमेवाग्निशब्दस्यार्थः स्यान्न यागः । रूढ्या ज्वलनाख्यद्रव्यवचनोऽयमग्निशब्दः स्यान्न यागनामधेयमित्युक्तं भवति । कुत इत्याह—चोदनायास्तदर्थत्वादिति । 'अग्निं चिनुत' इत्यस्याश्चोदनाया ज्वलनाख्यद्रव्यस्य चयनाख्यसंस्कारविधानार्थत्वादित्यर्थः । तस्य च संस्कृतस्याग्नेः क्रतुसम्बन्धो'ऽथातोऽग्निमग्निष्टोमेनानुयजती'त्येवमादिभिर्वाक्यैः क्रियते । तत्रानुशब्दश्चयनोत्तरकालमाह । अग्निमन्वग्निचयनोत्तरकालमग्निष्टोमादिभिर्यजेतेत्यर्थः । ततश्च नानुशब्दादग्नेर्यागत्वसिद्धिरिति ॥

अथ तृतीयं लिङ्गदर्शनपरिहारसूत्रं —

**तत्संयोगात्क्रतुस्तदाख्यः**
**स्यात्तेन धर्मविधानानि (२-३-२३)**

इति ।

षट्पदम् । तस्यार्थः—'अग्नेः स्तोत्र'मित्यादावग्निशब्दवाच्यचयनसंस्कृतज्वलनाख्यद्रव्यसंयोगाल्लक्षणयाऽग्न्याख्यः क्रतुः स्यात् । तेन कारणेनाग्नेः स्तोत्रादिधर्मविधानान्युपपद्यन्त इति ॥

अत्राग्न्यधिकरणे त्रीणि सूत्राणि ॥

अथैकादशं प्रकरणान्तराधिकरणम् ।

तद्गते गुणभेदोक्तिप्रसक्तानुप्रसक्ततः ।
कीदृग्गुणः कर्मभेत्ता किदृङ् नेति निरूपणे ॥

षष्ठात्प्रकरणाद्वाध्येऽनास्थया पञ्चमोदितात् ।
कर्मभेदाभिधानार्थमारब्धं तेन सङ्गतम् ॥

तत्र कुण्डपायिनामयने श्रुतानि 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुति', 'मासं दर्शपूर्णमासाभ्यां यजन्ते', 'मासं वैश्वदेवेन' इत्यादीनि वाक्यान्युदाहृत्य, किमयं नित्याग्निहोत्रादौ मासविधिरुत कर्मान्तरविधि-रिति सन्दिह्य अग्निहोत्रादिशब्दैस्तेषामेव कर्मणामुपस्थापनात् तेष्वप्राप्तस्य मासस्यानुपादेयस्यापि विधिर्न्याय्य इति पूर्वपक्षं कृत्वा कर्मान्तरविधिं सिद्धान्तयितुं सूत्रं —

## प्रकरणान्तरे

## प्रयोजनान्यत्वम् (२-३-२४)

इति ।

द्विपदम् । तत्र कस्येत्यपेक्षायामग्निहोत्रादिवाक्यस्येत्युपस्कर्तव्यम् । तदयमर्थः— नित्याग्निहोत्रादिप्रकरणात्प्रकरणान्तरे कुण्डपायिनामयनप्रकरणे श्रूयमाणस्यास्याग्निहोत्रादिवाक्यस्य तत्रत्यादग्निहोत्रादिवाक्यात्प्रयोजना-न्यत्वमिति । वाक्यस्य हि प्रयोजनं कर्मविधानमेव । ततश्च तत्रत्यवाक्यप्रयो-जनत्वेन विधीयमानात्कर्मण एतद्वाक्यप्रयोजनत्वेन विधीयमानं कर्मान्यदेव नामैकत्वेऽपि स्यादित्युक्तं भवति । कुत इत्यपेक्षायां तस्मादेव पूर्वप्रकरण-विच्छेदात्मकात्प्रकरणान्तरादित्येव हेतुत्वेन सम्बध्यते । अग्निहोत्रा-दिकर्मोद्देशेन मासविधेरसम्भवादिति च हेतुरुन्नेयः । असम्भवश्च देशकालफलनिमित्तसंस्कार्याणामनुपादेयत्वात्, ततश्च मासोद्देशेन कर्म-विधिरेवात्र न्याय्यः । उपसद्भिश्चरित्वेति चोपसत्त्वः परमग्निहोत्रमत्र

१. 'कर्मान्तरम्' क. २. 'त्याग्नि' ३. 'त्वम् । वा', ४. 'दनात्म' ख.

विधीयते। न च नित्याग्निहोत्रे सन्त्युपसदः, तस्मादपि कर्मान्तरविधि-रिति ॥

अत्र प्रकरणान्तराधिकरण एकं सूत्रम् ॥

अथ द्वादशं रुक्कामाधिकरणम्। तत् प्रकरणान्तरस्यैव प्रकारान्तरेण भेदहेतुत्वप्रदर्शनार्थम्। तत्र 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' 'अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इत्यनारभ्याम्नातानि वाक्यान्युदाहृत्य किमेतैः प्राकृतेष्वाग्नेयादिषु फलविधिरुत कर्मान्तरविधिरिति सन्दिह्याग्नेयादिशब्दैस्तेषामेव प्रत्यभिज्ञायमानत्वात् तदुद्देशेन फलविधित्वं न्याय्यमिति पूर्वपक्षं कृत्वा कर्मान्तरविधित्वं सिद्धान्तयितुं सूत्रं —

## फलं चाकर्मसन्निधौ (२-३-२५)

इति।

त्रिपदम्[1]। तस्यार्थः— तत्र प्राकृताग्नेयादिकर्मसन्निध्यभावे श्रूयमाणं रुगादिफलं च कालवत्कर्मभेदकत्वेन द्रष्टव्यमित्यध्याहृत्य योजना कर्तव्या। हेतुस्तु तस्मादेव प्राकृताग्नेयादिकर्मसन्निध्यभावादिति द्रष्टव्यः। फलस्योद्देश्यत्वेनानुपादेयत्वस्य स्वर्गकामाधिकरणे साधयिष्यमाणत्वादिति च हेतुरुन्नेयः।

न चोभयोर्विधेयत्वमुद्देश्यत्वं च सम्भवि।
इत्युद्दिश्य फलं कर्म विधातव्यं बलाद्भवेत् ॥

एवमेव निमित्तस्य देशसंस्कार्ययोरपि।
अनुपादेयतासाम्यात्कर्मभेत्तृत्वमूह्यताम् ॥

---

१. 'दम्। तत्र' ख.

अत्र रुक्मामाधिकरण एकं सूत्रम् ॥

अथ त्रयोदशं सन्निध्यधिकरणम् ।

तद्द् देशकालसंस्कार्यनिमित्तफललक्षणम् ।
कर्मभेऽनुपादेयपञ्चकं यदसन्निधौ ॥

उक्तं पूर्वाधिकरणद्वयेनास्य तु सन्निधौ ।
कर्माभेदकतोक्त्यर्थं प्रत्युदाहरणात्मना ॥

तत्रावेष्टिप्रकरणपठितम् 'एतयान्नाद्यकामं याजयेत्' इति फल-संयुक्तं वाक्यं, दर्शपूर्णमासप्रकरणपठितानि च 'समे दर्शपूर्णमासाभ्यां यजेत', 'पौर्णमास्यां पौर्णमास्या यजेत', 'अमावास्यायाममावास्यया यजेत', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'शेषात्स्विष्टकृते समवद्यति' इति । देशकालनिमित्तसंस्कार्यसंयुक्तानि वाक्यान्युदाहृत्य किं कर्मणो-ऽसन्निधाविव सन्निधावपि देशादिसम्बन्धे कर्मभेदोऽस्त्युत नास्तीति सन्दिह्य सन्निधावपि देशादेरुद्देश्यत्वस्य कर्मण उपादेयत्वस्य चानपायाद-स्तीति पूर्वपक्षं कृत्वा नास्तीति सिद्धान्तं वक्तुं सूत्रं —

सन्निधौ त्वविभागात्
फलार्थेन पुनःश्रुतिः (२-३-२६)

इति ।

पञ्चपदम् । तुशब्दः पक्षं व्यावर्तयति, विशेषं[1] वा द्योतयति । फलग्रहणं देशादेरप्युपलक्षणार्थम् । तदयमर्थः– अवेष्टेर्दर्शपूर्णमासयोश्चा-नन्तरवाक्यविहितत्वेन सन्निधौ सत्याविभागाद् विपरिवृत्त्यपरपर्यायाद-

---

१. 'अर्थं' ग.

भेदबुद्धेस्तस्यैव कर्मणः फलसंयुक्ते वाक्ये फलार्थेन देशादिसंयुक्तेषु देशाद्यर्थेन च पुनःश्रुतिरनुवादात्मिकास्थेया । एतच्छब्दश्चाम्नाद्यवाक्ये विशेषादवेष्टिं विशिनष्टि । तस्मात्कर्मोद्देशेन देशादिविधिरेवात्र न्याय्यः। न खलूद्दिश्यमानत्वादनूद्यमानत्वमुपादीयमानत्वाच्च विधीयमानत्वमङ्गीक्रियते, किंतु प्राप्त्यप्राप्तिभ्याम् । तत्र देशादीनां निष्पन्नरूपत्वेनोद्देश्यानामप्यप्राप्तत्वाद्विधेयत्वं भवति, कर्म त्वसिद्धत्वेनोपादेयमपि सद्वाक्यान्तरप्राप्तत्वेनानूद्यमानतां प्रतिपद्यते, तस्मान्न कश्चिद्दोष इति ॥

अत्र सन्निध्यधिकरणेऽप्येकं सूत्रम् ॥

अथ चतुर्दशमाग्नेयाधिकरणम् । तत्र 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'ति कालद्वयसंयुक्तं 'यदाग्नेयोऽमावास्यायां भवती'ति चैककालयुक्तं वाक्यमुदाहृत्य किमुभयकालादाग्नेयात्कर्मान्तरमिदममावास्यायां विधीयते उत तस्यैव केनापि प्रयोजनेनानुवाद इति सन्दिह्य कर्मान्तरविधिं पूर्वपक्षयितुमाद्यं सूत्रम् —

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत (२-३-२७)**

इति ।

पञ्चपदम् । तुशब्दस्तस्यैवानुवाद इत्युत्सूत्रं सिद्धान्तं व्यावर्तयति । अत्र कथं प्रतीयेतेत्यनुपादानादाग्नेयोऽयमभ्यासेन कर्मान्तरं समिदादिवत् प्रतीयेतेत्यध्याहृत्य योजना कर्तव्या । केन हेतुनाभ्यासः कर्मभेदं करोतीति तु न वक्तव्यमेवेत्याह—उक्तहेतुत्वादिति । उक्तः कर्मभेदकत्वे हेतुः अविशेषादनर्थकं हि स्यादित्येवंरूपो यस्याभ्यासस्य स उक्तहेतुस्तस्य

भावस्तत्त्वम् । तस्मादभ्यासस्य भेदकत्वहेतोरभ्यासाधिकरणे पूर्वमेवोक्तत्वादित्यर्थः ।

अथ द्वितीयं पक्षान्तरसूत्रम् —

**अविभागात्तु कर्मणो *द्विरुक्तेन §प्रतीयेत (२-३-२८)**

इति ।

षट्पदम् । अभ्यासाधिकरणोक्तन्यायवैषम्योक्त्यर्थत्वेन तुशब्दो व्याख्येयः । पूर्वसूत्रादाग्नेय इत्यनुवर्तते । अत्र द्विरुक्तेन वाक्यद्वयकृतेन द्विर्वचनेन द्विरभिधानेनैक एवाग्नेयः प्रतीयेत न द्वाविति भावनिष्ठाभ्युपगमनेन व्याख्या कर्तव्या । कारणमाह—कर्मणोऽविभागादिति । वाक्यद्वयविहितस्याग्नेयकर्मण एकप्रत्ययात्मकादविभागोपलम्भादित्यर्थः । अथवा अभ्यासेन प्रतीयेतेति पूर्वसूत्रोक्तस्यार्थस्य साक्षादेव प्रतिषेधार्थं भावनिष्ठान्तरेण द्विरुक्तपदं सप्तम्यन्तं छित्वा न प्रतीयेतेति नञ्सम्बन्धं च कृत्वा, उक्तार्थादेवाविभागाद्द्विरुक्ते द्विर्वचनात्मकेऽभ्यासे सत्यपि न कर्मान्तरं प्रतीयेतेति सप्तपदं सूत्रं व्याख्यातव्यम् । ततश्च वैकल्पिकेन वचनद्वयेनैकस्यैवाग्नेयस्यायं विधिरित्यभ्युपगम्य सकृदेवामावास्यायामाग्नेयोऽनुष्ठातव्य इत्युक्तं भवतीति ।

अथ तृतीयं सिद्धान्तसूत्रम् —

**अन्यार्था वा पुनःश्रुतिः (२-३-२९)**

इति ।

---

* 'द्विरुक्तो न विधीयेत' इति कुतूहलवृत्तौ. § 'विधीयते' इति भाष्यपाठः.

त्रिपदम्। अत्र सिद्धान्तिनोऽप्याग्नेयैकत्वस्येष्टत्वान्न तन्निवृत्त्यर्थो वाशब्दः। किं तु वैकल्पिकत्वे वचनद्वयस्यैकस्यावश्यमानर्थक्यप्रसङ्गात् तन्मात्रनिवृत्त्यर्थो द्रष्टव्यः। तदयमर्थः—अमावास्यायामप्येक एवाग्नेयोऽस्तीति यदुक्तं, तदभ्युपगच्छामः। तस्य त्वेकेनाच्युतवाक्येनैव विहितत्वाद्वाक्यान्तरपुनःश्रुतिरन्यार्थेति मन्यामहे। अस्ति हि 'ऐन्द्राग्न एकादशकपालोऽमावास्यायां भवतीत्यैन्द्राग्नविधायकं तत्र वाक्यं, तच्छेषत्वेनैन्द्राग्नस्तुत्यर्थेत्युक्तं भवति। आग्नेय एव तावदग्निदेवत्यत्वात्प्रशस्तः, ऐन्द्राग्नस्त्विन्द्रसहिताग्निदेवत्यत्वात् ततोऽपि प्रशस्त इत्येवंरूपा स्तुतिः।

तस्मादसन्नयदर्शे पुरोडाशावुभौ स्मृतौ।
आग्नेयोऽच्युतवाक्योक्त ऐन्द्राग्नश्च तथापरः॥
ऐन्द्रस्तु सन्नयदर्शे माहेन्द्रो वा विकल्पतः।
द्वितीयः स्यात्पुरोडाश उभयत्रापि नापरः॥

अत्राग्नेयाधिकरणे त्रीणि सूत्राणि॥

इति महोपाध्यायश्रीमदृषिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे द्वितीयस्याध्यायस्य
तृतीयः पादः समाप्तः।

अथ द्वितीयस्याध्यायस्य चतुर्थे पादे

## प्रथमं यावज्जीवाधिकरणम् ।

तत्र 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति विहितकाम्यकर्मानन्तरपठितं'यावज्जीवमग्निहोत्रं जुहुयाद्' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति वाक्यद्वयमुदाहृत्य, किं यावज्जीविकोऽभ्यासोऽयं विधीयमानः कर्मधर्मः स्यादुत नियमात्मकः कर्तृधर्म इति सन्दिह्याद्यपक्षं पूर्वपक्षयितुमाद्यं सूत्रं —

### यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् (२-४-१)

इति ।

चतुष्पदम् । तस्यार्थः—यावज्जीविको यावज्जीवभावित्वेन श्रूयमाणोऽयमभ्यासः प्रकरणात् प्रकरणानुग्रहार्थं कर्मण एवाग्निहोत्रादेर्धर्मः स्यान्न कर्तुः । ततश्च कर्मोद्देशेन कालोपदेश एव यावज्जीवशब्देन क्रियत इत्युक्तं भवति । तथाच कालवत् तन्निमित्तस्याभ्यासस्यापि कर्माङ्गत्वसिद्धिः । तस्माज्ज्योतिष्टोमवदभ्यस्तरूपमेकमेवेदं यावज्जीवकालभाव्यग्निहोत्रादिकर्म स्यादिति ।

अथ द्वितीयं सिद्धान्तसूत्रं—

### कर्तुर्वा श्रुतिसंयोगात् (२-४-२)

इति ।

त्रिपदम् । वाशब्दः पक्षं व्यावर्तयति । कर्तुरेवायं धर्मो नियमात्मकश्चोद्यते न कर्मणः । कारणमाह—श्रुतिसंयोगादिति । यावज्जीवाख्यात-

शब्दयोरस्मिन् पक्षे श्रुतिवृत्तत्वलाभादित्यर्थः। पक्षान्तरे हि जीवनेन कालस्य जुहोतियजतिभ्यां चाभ्यासस्य लक्षणा स्यादिति ॥

अथ तृतीयं सिद्धान्ताभ्युच्चयसूत्रं[1]—

**लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत, तत्रानर्थकमन्यत् स्यात् (२-४-३)**

इति।

दशपदम्। तस्यार्थः—'अप वा एष सुवर्गाल्लोकाच्च्यवते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादये'दित्यतिपादनलक्षणलिङ्गदर्शनादपि कर्तृधर्मः। नियम इति चकारेणानुषज्यते। कथमनेन लिङ्गेनैतत् सिध्यतीत्यत आह—कर्मधर्मे हि प्रक्रमेण नियम्येतेति। कर्मधर्मे हि यावज्जीविकाभ्यासे अभ्यस्तरूपमेकमेव तत्कर्म जीवनपरिमितकालपर्यन्तं प्रथमेनैव प्रक्रमेण नियम्येत व्याप्येत असमाप्तमेवावतिष्ठेतेत्यर्थः। तत्र को दोष इत्यत्राह—तत्रानर्थकमन्यत् स्यादिति। तत्र तथा सति प्रक्रान्तस्य कर्मणस्तावन्तं कालमसमाप्तौ सत्यां तावति कालेऽतिपन्नेऽतिपत्तिः स्यात्। तत्र मृतस्य प्रायश्चित्तानुष्ठानाशक्तेरनर्थकमन्यत् प्रायश्चित्तविधानं स्यात्। कर्तृधर्मे तु जीवतस्तस्य मासि[2] मासि दर्शपूर्णमासारम्भसमाप्त्योश्चोदनादुपपद्येतातिपादनं प्रायश्चित्तविधानं चेति ॥

अथ चतुर्थमपि तादृशं सूत्रं—

***व्यपवर्गं च दर्शयति कालश्चेत् कर्मभेदः स्यात् (२-४-४)**

इति।

---

१. 'ति ॥ तृती' २. 'सि दर्श' क.

*'अपवर्गं' इति शास्त्रदीपिकायां न्यायमालायां च पाठः.

सप्तपदम्। अत्रापि यस्मात् 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति दर्शपूर्णमासयोः व्यपवर्गं समापनं श्रुतिर्दर्शयति तस्मादपि कर्तृधर्म इति योजना चशब्दबलाद्द्रष्टव्या। अस्यानन्तरं कथं व्यपवर्गदर्शनादेतत्सिद्धिरित्यपेक्षायां तत्रानर्थकमन्यत् स्यादिति पूर्वसूत्रावयवानुषङ्गो द्रष्टव्यः। तत्र कर्मधर्मपक्षे दर्शपूर्णमाससमाप्त्युत्तरकालाभावादनर्थकमन्यत् सोमयागविधानं स्यादिति च व्याख्या कर्तव्या। ननु विधानान्यथानुपपत्त्या कालः कल्पनीय इति चेदत आह—कालश्चेत् कर्मभेदः स्यादिति। विधानार्थवत्त्वाय तु दर्शपूर्णमाससमाप्त्यनन्तरं सोमयागस्य कालोऽस्तीत्यभ्युपगमे यावज्जीवसमाप्यत्वायोगात् कर्तृधर्मपक्षवत् प्रतिमासं दर्शपूर्णमासकर्मप्रयोगभेदः स्यादित्यर्थः। एतच्च सर्वं'मस्ति चेद्दर्शपूर्णमासनिर्मुक्तः सोमकालः, ततो मदुक्त[1] एव कर्मप्रयोगभेदः स्यादि'ति वार्तिकव्याख्यानार्थं न्यायसुधोक्तमेवास्माभिः प्रायेण लिखितमिति मन्तव्यम्॥

अस्य च सूत्रावयवस्य व्याख्यानान्तरमपि वार्तिकेऽस्ति—'कालश्चेत् कर्मभेदः स्यादित्यस्यापरा व्याख्या। यदि यावज्जीविकः कर्मधर्मकालश्चोद्यते[2], ततो दर्शपूर्णमासमध्य एव सोमोऽन्यानि च कर्माणि कर्तव्यानि स्युः। ततश्च विततस्य कर्मणः कर्मान्तरेण भेदे[3] सति दर्शपूर्णमासाभ्यामिष्ट्वेति च बाध्येत। '[4]अपवा एतद्यज्ञाश्छिद्यत' इत्यादि निन्दितव्यमनुष्ठीयेते'ति। अस्यापि च व्याख्यानं न्यायसुधायामेवं कृतं—कर्मधर्मभूताभ्यासकालश्चेद्यावज्जीविकत्वेनात्र चोद्यते, ततो विततस्य दर्शपूर्णमासकर्मणः सोमयागेन विच्छेदः स्यात्। तत्र दर्शपूर्णमाससमाप्त्युत्तरकालविरोधः 'अपवा एतद्यज्ञश्छिद्यते' 'यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रपतेदि'ति निन्दोन्नीतनिषेधविरोधश्च स्यादिति। अत्रानन्तरं भाष्यकारेणोत्तरसूत्रस्थैवंशब्दार्थवत्त्वाय तत्परिगृहीतलिङ्गदर्शनद्वयमुपन्यस्तम्— 'आहि-

---

१. 'यथोक्त', २. 'चेते', ३. 'विच्छेदे', ४. 'अथवा एष सुवर्गाल्लोकाच्छिद्यते एत' इति मुद्रिततन्त्रवार्तिकपाठः।' 'लविधिवि', क.

त्वाग्निर्वा एष सन् नाग्निहोत्रं जुहोति, न दर्शपूर्णमासाभ्यां यजते, तदा आहुतिभाजो देवतास्ता अनुध्यायिनीः करोती'त्येकं, 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया वा एष ताभ्यां मुच्यते मृत्युना वे'त्यपरम्। अत्र देवताया नायमस्मभ्यं ददातीत्येवंरूपानुध्यानदर्शनं जरामरणनिर्मोचनदर्शनं च कर्तृधर्मत्वपक्षे युज्यते न कर्मधर्मत्वपक्ष इत्युक्ते, तत्र हेत्वपेक्षायाम्—

## अनित्यत्वात्तु नैवं स्यात् (२–४–५)

इति।

पञ्चपदं पञ्चमं सूत्रमवतारयितव्यम्। तत्र 'तुशब्दोऽन्वाचये' इति भाष्यवचनाच्चार्थे[1] भवति। यदेतदनुध्यानं जरामरणनिर्मोचनं चोक्तं तत् कर्मधर्मत्वपक्षे कर्मणोऽनित्यत्वात् काम्यत्वेन नित्यत्वायोगादे[2]वं न स्यात्, तस्मादपि कर्तृधर्म इत्यर्थः। अ[3]थवा यज्जीवनस्य काललक्षणार्थत्वं कर्मधर्मत्वपक्षेऽभिमतं तज्जीवनस्यानित्यत्वात् निमेषादिवन्नियतपरिमाणत्वाभावादेवं न स्यात्, तस्मादपीत्यर्थः॥

अथ षष्ठमपि सिद्धान्ताभ्युच्चयसूत्रं—

## विरोधश्चापि पूर्ववत् (२-४-६)

इति।

चतुष्पदम्। तस्यार्थः—यस्मात् कर्मधर्मपक्षे पूर्ववत् प्रकृतित्वेन पूर्वभूतदर्शपूर्णमासवद् विकृतीनामप्यभ्यासापत्तेः, सर्वाभ्यासस्य चैकस्मिन् कालेऽशक्यत्वाद्विरोधः कर्मणां स्यात् तस्मादपि कर्तृधर्म इति। अथ कर्तृधर्मपक्षेऽपि यावज्जीवशब्देन जीवनपरिमितकालोक्तेस्तुल्यो विरोध इति शङ्कानिरासार्थं सप्तमं सूत्रं—

---

१. 'भविष्यति'. २ 'व'. ३. यथा वा' क.

## *कर्तुस्तु (क?ध)र्मनियमात् कालशास्त्रं §निमित्तं स्यात् (२-४-७)

इति ।

षट्पदम् । तुशब्दो विरोधतुल्यत्वं व्यावर्तयति । एवं समर्थितात् कर्तुर्धर्मनियमाद्धेतोः सिद्धान्ते पूर्वपक्षिणः कालशास्त्रं जीवनपरिमितकालविधायकत्वेनाभिमतं यावज्जीवमिति शास्त्रं निमित्तं निमित्तशास्त्रमेव स्यात् । ततश्च कालाभ्यासयोरविहितत्वेनानङ्गत्वान्न प्रकृतिविकृत्यैककाल्यापत्तिविरोधः । अथवा पूर्वैरेव सिद्धान्तसूत्रैरुक्तप्रायत्वादस्यार्थस्योपसंहारसूत्रमेवैतद्द्रष्टव्यम् । यद्वा पूर्वं कर्तृधर्मो नियमश्चोद्यते इत्येतावदेवोक्तं न यावज्जीवशब्दनिर्वाह उक्तः तदर्थमिदं सूत्रम् । उक्तेन न्यायेन कर्तृधर्मे नियमे सिद्धे सति कालशास्त्रतया कालवचनतया भासमानमपि यावज्जीवमित्येतच्छब्दरूपं वस्तुतो निमित्तशास्त्रमेव स्यात् निमित्तप्रतिपादकमेव स्यादित्यर्थः । पशुसोमचातुर्मास्येषु नैयमिकत्वोक्त्यर्थतया वैतद् व्याख्येयम् । तत्राप्युक्तात् कर्तृधर्मनियमाद्धेतोः 'षट्सु षट्सु मासेषु पशुना यजेत', 'चतुर्षु चतुर्षु मासेषु चातुर्मास्यैर्यजेत', 'वसन्ते वसन्ते ज्योतिषा यजेते'ति वीप्सासंयुक्तं कालशास्त्रं निमित्तशास्त्रं स्यादित्यर्थो भवति ॥

अत्र यावज्जीवाधिकरणे सप्त सूत्राणि ॥

अथ द्वितीयं शाखान्तराधिकरणम् । तत्र शाखान्तरस्थमग्निहोत्रादिकर्म किं भिद्यते किं वा सर्वशाखास्थमेकरूपमेवेति सन्दिह्य भिद्यत इति पूर्वपक्षं वक्तुमाद्यं सूत्रं —

---

* 'कर्तुस्तु नियमा'दिति शास्त्रदीपिकायां, 'कर्तुस्तु धर्मनियमा'दिति कुतूहलवृत्तौ.

§ 'निमित्तार्थं' इति कुतूहलवृत्तौ.

**नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्ति-**
**वचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे***
**कर्मभेदः स्यात् (२-४-८)**

इति ।

चतुष्पदम् । तत्र विशेषशब्दस्य नामादिभिस्त्रिभिरपि सम्बन्धकरणान्नामविशेषस्य रूपविशेषस्य धर्मविशेषस्य पुनरुक्तेर्निन्दाया अशक्तेः समाप्तिवचनस्य प्रायश्चित्तस्यान्यार्थपश्चकस्य च दर्शनात् शाखान्तरे विहितानामग्निहोत्रादिकर्मणां भेदः स्यादित्यर्थो भवति । तत्र नामविशेषः—काठकम्, कालापकमिति। रूपविशेषः—अग्नीषोमीयद्वादशकपालैकादशकपालादिः। धर्मविशेषः—कारीर्यध्ययनादौ भूमिभोजनाभोजनादिः। पुनरुक्तिः—एकस्यां शाखायां विहितस्य शाखान्तरे पुनर्वचनम् । निन्दा-'यथातिथये प्रद्रुताये'त्युदितहोमनिन्दा' 'प्रातः प्रातरनृतं ते वदन्ती'-त्यनुदितहोमनिन्दा च द्रष्टव्या । अशक्तिः—सर्वशाखाप्रत्ययोपसंहारासामर्थ्यम् । समाप्तिवचनम्—अत्रास्माकमग्निः परिसमाप्यतेऽत्रास्माकमिति शाखिनां वचनम् । प्रायश्चित्तम् – उदितानुदितहोमयोरुभयोरपि प्रायश्चित्तविधानमभिमतम् । अन्यार्थदर्शनम् – इष्टवतामनिष्टवतां च द्वादशाहे 'यदि पुरा दिदीक्षाणाः स्युर्यद्यदिदीक्षाणाः स्यु'रिति दर्शनं प्रथमं, 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि'मिनोतीति वेद्यर्धविहितस्य यूपमानस्यातिदेशेन यूपैकादशिनीं प्राप्तस्य वेदिदेशातिक्रमायोगाद्वेदिसम्मानस्य वेद्याधारश्येनादिपक्ष्याकारस्थलावयवभूतपक्षद्वयसम्मानस्य वा अर्थप्राप्तत्वेनानुवादत्वोपपत्तेः 'यत्पक्षसम्मितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्' इत्यादिपक्षसम्मानं निन्दित्वाऽथ 'यद्वेदिसम्मितां मिनुयादि'ति-

* 'रेषु कर्म' इति भाष्यपाठः.

१. 'ककपा', २. 'क्षाकारयावय', ३. 'नयार्थस्य चार्थं' क पाठः.

वेदिसम्मानपरिग्रहाच्छाखान्तरीयस्य विरोधिनो 'रथाक्षमात्राणि यूपान्तरालानि भवन्ती'ति वचनान्तरस्य तच्छाखीये कर्मण्यप्राप्तिद्योतनात्मकं द्वितीयम् । 'द्वे संस्तुतानां विराजमतिरिच्यते तिस्रः संस्तुतानां विराजमतिरिच्यन्त' इति द्वयोस्तिसृणां च स्तोत्रीयाणामतिरेकदर्शनं तृतीयम् । 'ये पुरोडाशिनस्त उपवसन्ति ये सान्नाय्यिनस्ते वत्सान् धारयन्ती'ति सान्नाय्यसान्नाय्यिनां सारस्वते दर्शनं चतुर्थम् । 'उपहव्योऽनिरुक्तो रथन्तरसामाश्वः श्यावो दक्षिणा' । 'उपहव्योऽनिरुक्तो बृहत्सामाश्वः श्वेतो रुक्मललाटो दक्षिणे'ति सामसंस्थादक्षिणाभेददर्शनं पञ्चममिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम्—

**एकं वा संयोगरूपचोदनाख्याविशेषात् (२-४-९)**

इति ।

त्रिपदम् । वाशब्दः पक्षं व्यावर्तयति । एकमेव सर्वशाखास्थमग्निहोत्रादिकर्मेति ब्रूमः । कुत इत्याह—संयोगरूपचोदनाख्याविशेषादिति । अत्रा'र्थसंयोगस्याविशेषा'दितिभाष्यव्याख्यानार्थं संयोगः प्राधान्यात् फलसंयोगोऽभिमत इति वार्तिकम् । तदेव न्यायसुधाकारो व्याचकार—संयोग इति । संशब्दस्य समीहितवाचित्वात् समीहितेन योग इत्यवयवार्थयोगाशयोऽर्थशब्द इत्याशय' *इति । अतो नार्थशब्दः सौत्रः । रूपं द्रव्यदेवतम् । चोदना स(र्व)धात्वर्थभावनाविषयो विधिः । आख्या नामधेयम् । एतेषां चतुर्णां प्रत्यभिज्ञानकारणानां सर्वशाखास्वविशेषादित्यर्थः ॥

अथ तृतीयं पूर्वपक्षसूत्रनिर्दिष्टभेदहेतुनवकप्रथमहेतुनिरासार्थं सूत्रं—

---

१. 'कोऽश्वः श्वेतो दक्षि'. ग, २. 'गवि'.

*अत्र किंचिद् गलितमिव भाति । मुद्रितन्यायसुधापाठस्त्वेवं 'संयोग इति । संशब्दस्य समीहितवाचित्वात् फलस्यैव च समीहितत्वात् समीहितेन योग इत्यवयवार्थसंयोगात् फलान्वयवाची संयोगशब्द इत्याशयः ।

## न नाम्ना स्यादचोदनाभिधानत्वात् (२-४-१०)

इति ।

चतुष्पदम् । तस्यार्थः—काठकादिनाम्नः कर्मनामत्वेऽप्युत्पत्तिचोदनागतत्वाभावान्न नाम्ना भिन्नेन कर्मभेदः स्यात् । परमार्थतस्तु—नेदं कर्मनाम, ग्रन्थनामत्वेनाभ्युपगमात् । अथवा चोद्यत इति व्युत्पत्त्या कर्मवाचिचोदनाशब्दाभ्युपगमेनाकर्माभिधानत्वात् काठकादिनाम्नामिति व्याख्या कर्तव्या । क्वचित्तु चोदनाभिधानत्वादिति पाठो दृश्यते तत्र चोदयतीति व्युत्पत्त्या चोदनाशब्दो ग्रन्थवचनः । काठकादिशब्दानां ग्रन्थाभिधानत्वादित्यर्थः । कर्मणि तु लक्षणयैव प्रवृत्तिरित्युक्तं भवतीति ॥

अथ चतुर्थं नामभेदाद्भेदे दोषाभिधानार्थं सूत्रं—

## सर्वेषां चैककर्म्यं स्यात् (२-४-११)

इति ।

चतुष्पदम् । तस्यार्थः—काठकादीनामभेदाच्च कर्मभेदेऽभ्युपगम्यमाने सर्वेषामेकशाखाधीतानामग्निहोत्रदर्शपूर्णमासादीनां काठकादीनामैक्यादैककर्म्यं स्यादिति ॥

अथ पञ्चममपि तादृशं सूत्रं—

## कृतकं चाभिधानम् (२-४-१२)

इति ।

त्रिपदम् । तस्यार्थः—यस्मात् काठकाद्यभिधानं कृतकमिति पूर्वं 'माख्याप्रवचना'दिति सूत्रेणास्माभिरुक्तं, न च प्रवचनं शब्दवत् कर्मणां सम्भवति तस्मादपि न नाम्ना कर्मभेद इति ॥

---

१. 'नामैक्या'. क.

अथ षष्ठं रूपभेदाद्भेदपरिहारार्थं सूत्रम्—

## एकत्वेऽपि परम् (२-४-१३)

इति।

त्रिपदम्। तस्यार्थः—रूपभेदाख्यं यत् परं कर्मभेदकारणमुक्तं तत् कर्मैक्येऽपि विकल्पेनानेकाङ्गनिवेशोपपत्तेर्युक्तमेवेति॥

अथ सप्तमं धर्मभेदाद्भेदपरिहारार्थं सूत्रं—

## विद्यायां धर्मशास्त्रम् (२-४-१४)

इति।

द्विपदम्। तस्यार्थः—भूमिभोजनादिधर्मशास्त्रं (यद्) भेदकत्वेनोक्तं, तत् कर्माङ्गत्वावेदकश्रुत्यादिप्रमाणाभावान्न कर्मविषयं, किं तु विद्याविषयम्। विद्याशब्दश्च तत्साधनभूताध्ययनोपलक्षणार्थः अध्ययनाङ्गमित्युक्तं भवति। न च न धर्मशास्त्रं भेदकारणमुक्तं, किंतु धर्मविशेषमात्रमिति वाच्यम्। धर्मविशेषस्याचारत्वेनाननुमाय शास्त्रमविश्रान्तेरिति॥

अथाष्टमं भाष्यकारमते पुनरुक्त्यनुभाषणसूत्रम्—

## आग्नेयवत् पुनर्वचनम् (२-४-१५)

इति।

द्विपदम्। तस्यार्थः—यथाग्नेयस्यामावास्यायां पुनर्वचन'माग्नेयस्तूक्तहेतुत्वादि'त्याग्नेयाधिकरणपूर्वपक्षसूत्रे भेदकमुक्तं, तथा प्रतिशाखमग्निहोत्रादिपुनर्वचनं भेदकमिति। यदुक्तमिति। वार्तिककारमते तु यत्पुनर्वचनं भेदकत्वेनोक्तं तद् 'अन्यार्था वा पुनःश्रुतिरि'त्याग्नेयाधिकरण-

१. 'क्ष्वे' ग. पाठः.

सिद्धान्तसूत्रे यथाग्नेयस्य पुनर्वचनमन्यार्थत्वान्न भेदकमित्युक्तं, तथा प्रतिशाखमग्निहोत्रादिपुनर्वचनमपि यथासम्भवमर्थवादत्वेन गुणार्थत्वेन वान्यार्थत्वान्न भेदकमित्येवं पौनरुक्त्यपरिहारार्थत्वेन व्याख्येयम् ॥

अथ नवमं भाष्यकारमतेऽनुभाषितपौनरुक्त्यपरिहारार्थं, वार्तिककारमते पौनरुक्त्यस्यैव परिहारान्तरार्थं सूत्रम्—

**अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् (२-४-१६)**

इति ।

त्रिपदम् । वाशब्दः पूर्वत्रानुभाषणव्यावृत्त्यर्थः । उत्तरत्र पूर्वपरिहारव्यावृत्त्यर्थः । प्रतिशाखं भिन्नानामध्येतॄणां श्रुतिसंयोगस्याविशेषान्न कञ्चिदध्येतारं प्रति द्विर्वचनमित्येवं पूर्वत्र व्याख्या । उत्तरत्र त्वर्थवादार्थं गुणार्थं वेदं द्विर्वचनं न भवति । समस्तेतिकर्तव्यतोपेतप्रधानश्रवणलक्षणस्य श्रुतिसंयोगस्य सर्वशाखास्वविशेषादिति ॥

अथ दशमं श्रुतिसंयोगाविशेषोपपादनायैकस्य पुंसोऽनेकशाखाध्ययननिरासार्थं—

***वाक्यासमवायात् (२-४-१७)**

इति

एकपदं सूत्रं भाष्यकारानुदाहृतमपि वार्तिककारेणोदाहृतम् । प्रतिचरणं शाखानां व्यवस्थितत्वादेकस्मिन् पुरुषे शाखान्तरवाक्यस्यासमवायादिति चास्य व्याख्या कर्तव्या ॥

---

* शास्त्रदीपिकायां न्यायमालायां चाप्यस्य सूत्रस्य पाठो नास्ति.

अथैकादशं भाष्यकारमते निन्दादिष्वपरिहृतेषु मध्ये बुद्धिस्थशाखासमाख्याबलेन पूर्वपक्षनिरासार्थं सूत्रम्—

## अर्थासन्निधेश्च (२-४-१८)

इति।

द्विपदम्। तस्यार्थस्य कर्मणानुग्राहकतयार्थ्यमानस्याङ्गकाण्डस्य पुष्पफलकाण्डस्येव कृत्स्नस्यैकैकस्यां शाखायामसन्निधेरसामीप्यात् सामस्त्येनानिधानादभावादैककर्म्ये सादृश्याच्छाखासमाख्योपपत्तेश्चैकमेव सर्वशाखास्थं कर्म प्रत्येतव्यं, न केवलं पूर्वोक्तात् संयोगरूपचोदनाख्याविशेषात्मकाद्धेतुचतुष्टयादिति सोपस्कारं सानुषङ्गं च व्याख्यातव्यम्। वार्तिककारमते तु शाखान्तराध्यायिनां शाखान्तरीयार्थस्यासन्निधेरप्रत्यभिज्ञानाच्चाद्विर्वचनमिति। एवमेतदपि सूत्रं पौनरुक्त्यपरिहारार्थत्वेन व्याख्येयमिति॥

अथ द्वादशमपि पौनरुक्त्यपरिहारार्थं सूत्रं—

## न चैकं प्रति शिष्यते (२-४-१९)

इति।

पञ्चपदम्। तस्यार्थः—यस्मान्नैकं कठादिमेव पुरुषं प्रति तच्छाखागतमग्निहोत्रादि प्रधानं शिष्यते, किं तु पुरुषविशेषानुपादानादन्यशाखाध्यायिनमपि प्रति, तस्मादप्यद्विर्वचनम्। विकल्पेन सर्वशाखाभिरेकस्य कर्मणो विधानाभ्युपगमादिति॥

---

१. 'स्कारं' २. 'त'. ३. 'ख्या' क.

अथ त्रयोदशमपरिहृतेष्वपि निन्दादिषु मध्ये सिद्धान्ताभ्युच्चय-सूत्रं—

समाप्तिवच्च सम्प्रेक्षा (२-४-२०)

इति।

त्रिपदम्। असमाप्तिवच्चेति वा छेद इति वार्तिककारेणोक्तम्। 'न चैकं प्रतिशिष्यतेऽसमाप्तिवदि'ति सूत्रसंहितापाठेऽयमपि च्छेदः सम्भवतीत्यजितान्यायसुधाकाराभ्यां च व्याख्यातम्। तत्र पूर्वच्छेदे समाप्तेरापेक्षिकत्वस्य सिद्धान्तलिङ्गत्वोक्त्यर्थं सूत्रम्। उत्तरच्छेदे त्व-समाप्तेरापेक्षिकत्वस्य सिद्धान्तलिङ्गत्वोक्त्यर्थमिति विशेषः। यस्मादन्वा-रोहेषु मैत्रायणीयानामग्निः समाप्यते नास्माकमित्यध्येतॄणां समाप्तिवद-समाप्तिवद्वा सम्प्रेक्षा दृश्यते, तस्मादप्येकं कर्मेति योजना कर्तव्या। एतदुक्तं भवति—यस्मान्मैत्रायणीयानपेक्ष्यान्वारोहापरपर्यायेषु स्थला-रोहणमन्त्रेषु अग्नेः समाप्तिर्जाता, अस्मानपेक्ष्य तत ऊर्ध्वमपि कर्तव्या-न्तरसद्भावान्न तत्राग्नेः समाप्तिर्जातेत्येवं रूपाध्येतॄणामेकस्यैवाग्नेरध्येत्रन्तर-समाप्त्यस्तित्ववदात्मसमाप्तिनास्तित्ववद्वा सम्प्रेक्षाबुद्धिर्व्यवहारो वा विद्यते तस्मादपि सर्वशाखास्थमेकं कर्म द्रष्टव्यं, न केवलं पूर्वोक्तैश्चतुर्भिः पञ्चभिर्वा हेतुभिरिति॥

अथ चतुर्दशं निन्दादित्रयपरिहारार्थं सूत्रं—

एकत्वेऽपि पराणि* (२-४-२१)

इति।

---

१. 'ष्वेव नि' २. 'पूर्वे' क० पाठः.

* 'णि निन्दाशक्तिसमाप्तिवचनानि' इति भाष्ये, न्यायमालायां शास्त्रदीपिकायां च पाठः.

त्रिपदम्। तस्यार्थः—यानि पराणि निन्दाशक्तिसमाप्तिवचनानि कर्मभेदकारणान्युक्तानि तान्येकत्वेऽप्यविरुद्धानि। एकस्मिन्नेवाग्निहोत्रे तुल्यार्थयोरुदितानुदितहोमयोरन्योन्यनिन्दयेतरेतरविधेर्विकल्पो भविष्यति। तथैकशाखाविहितेष्वप्याज्यावेक्षणविष्णुक्रमणाद्यङ्गेष्वन्धपङ्ग्वादीनामशक्तेः साधनसम्पन्नानां च सर्वशाखाविहितेष्वप्यङ्गेषु कल्पसूत्रादिभ्यो ज्ञानसम्भवाच्छक्तेः उभयोरपि पक्षयोः शक्त्यशक्ती समाने। एवं समाप्तिवचनमपि कर्मैकत्वेऽपि हौत्राध्वर्यवादिकर्मसमाप्त्यपेक्षयोपपत्तेर्नान्यत्वं साधयतीति॥

अथ पञ्चदशं भाष्यकारमते प्रायश्चित्तानुभाषणार्थं वार्तिककारमते तत्सामान्यपरिहारार्थं सूत्रं—

## प्रायश्चित्तं निमित्तेन (२-४-२२)

इति।

द्विपदम्। तस्योदितानुदितकालातिक्रमेण निमित्तेन प्रायश्चित्तं विधीयमानं भेदकत्वेन यदुक्तं तत्परिहर्तव्यमित्यनुभाषणार्थत्वेऽर्थः। सामान्यपरिहारार्थत्वे तु उदितानुदितकालयोर्द्वयोरप्यतिक्रमे[1] प्रायश्चित्तं विधीयमानं यद्भेदकत्वेनोक्तं तत् केनचिन्निमित्तेन कर्मैक्येऽप्युपपत्तेर्न भेदकमित्यर्थः॥

अथ षोडशमनुभाषणपरिहारार्थं विशेषपरिहारार्थं वा सूत्रं—

## प्रक्रमाद्वा नियोगेन (२-४-२३)

इति।

---

१. ०द्वयोरप्य०' क.

त्रिपदम्। वाशब्दः पूर्वत्रानुभाषितव्यावृत्त्यर्थः। उत्तरत्र सामान्यपरिहारोक्तिजनितविशेषसन्देहव्यावृत्त्यर्थः। प्रक्रमवशेन वैकल्पिकानामप्यङ्गानां यदेव प्रक्रान्तं तदेवानुष्ठेयमिति नियोगापरपर्यायान्नियमात् तदतिक्रमे कर्मैक्येऽपि प्रायश्चित्तमविरुद्धमित्युपस्कारानुषङ्गसिद्धोऽस्यार्थः पक्षद्वयेऽपि तुल्य इति ॥

अथ सप्तदशं समाप्तिवचनस्य पूर्वोत्तरपक्षसाधकत्वेनोपन्यस्तस्य न्यायानुसारेण निर्णेयत्वात्, न्यायेन च वक्ष्यमाणेनैकत्वावधारणात् तस्यैव समाप्तिः साधिका, न भेदस्येत्येतदभिधानार्थं सूत्रं—

**समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत (२-४-२४)**

इति।

चतुष्पदम्। तस्यार्थः—समाप्तिः समाप्तिवचनं, यथा ज्ञाते ज्ञानानुसारेण स्वशाखाविहिताग्न्यङ्गभूतपदार्थविषयत्वेन प्रतीयेत। तत्र हेतुः—पूर्ववत्त्वादिति। समाप्तेः पूर्वेणारम्भेण सहितत्वात्। आरम्भो ह्युत्तरभाविन्याः समाप्तेः पूर्वो भवति, तेन तदपेक्षा सा तद्वशेन प्रवर्तेत। ततश्च येषां यावानग्न्यङ्गकलापः स्वशाखानुसारेण ज्ञातुमनुष्ठातुं वारब्धस्तेषां तत्समाप्त्यसमाप्त्योरग्निसमाप्त्यसमाप्त्युपचारोपपत्तेरेकत्वमेव युक्तमिति न्याय इति ॥

१. 'स्यार्थः—पूर्वेणा'. २. 'इति ॥ अष्टादश'. क.

अथाष्टादशमन्यार्थदर्शनपञ्चके प्रथमपरिहारार्थं सूत्रं—

**लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् (२-४-२५)**

इति ।

एकादशपदम् । तस्यार्थः—यददीक्षितदर्शनं द्वादशाहे भेदालिङ्गमुक्तं तद् भेदपक्षेऽप्ययुक्तत्वान्न पक्षविशेषसाधकं स्यात् । कुत इत्याह—सर्वशेषत्वादिति । ताण्डकविहितस्य प्राथम्यस्य सर्वशाखास्थज्योतिष्टोमशेषत्वादित्यर्थः । ननु ताण्डकविहितं प्राथम्यं तद्विहितमेव ज्योतिष्टोमं विषयीकरोति, कथं सर्वशाखास्थज्योतिष्टोमशेषत्वमस्योच्यते, अत आह—न हि तत्र कर्मचोदनेति । हिर्हेतौ । ताण्डकस्य सामवेदत्वेन तत्र यजुर्वेदविषयायाः कर्मचोदनाया ज्योतिष्टोमोत्पत्तिविधेरभावादित्यर्थः । ततश्च पूर्वपक्षसिद्धान्तयोर्दोषसाम्ये सत्युभयत्राप्येवं कल्पनीयमित्याह—तस्माद्द्वादशाहस्याहारव्यपदेशः स्यादिति । तस्मात् सर्वेषां द्वादशाहादर्वाग्-ज्योतिष्टोमपश्चाद्भावापत्तेः दोषसाम्यात् तत्परिहारार्थं यदि पुरा द्वादशाहेनेदिदीक्षाणाः यदि द्वादशाहेनादिदीक्षाणा इति च द्वादशाहस्य द्वादशाहपदस्याहारेणाध्याहारेण पक्षद्वयेऽप्युभयथा व्यपदेशः स्यात् नान्या गतिरित्यर्थः ॥

अथैकोनविंशं द्वितीयलिङ्गदर्शनपरिहारार्थं सूत्रं—

***द्रव्ये वाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् (२-४-२६)**

इति ।

---

* 'द्रव्ये चाचो' इति कुतूहलवृत्तौ न्यायमालायां भाष्ये शास्त्रदीपिकायां च पाठः.

१. 'दकर्मत्वेन' २. 'नादीक्षणाः'. क.

एकादशपदम् । वाशब्दोऽस्य भेदलिङ्गदर्शनत्वं व्यावर्तयति । अग्न्याख्ये द्रव्ये यूपैकादशिन्या अचोदितत्वाद्धर्मज्ञानानपेक्षत्वेन विपक्ष-वेदिसम्मानरथाक्षान्तरालविधीनां मध्ये न कस्यचिद्व्यवस्था स्यात् । यदि ह्यग्नौ यूपैकादशिन्या निर्देशः स्यात् ततः कश्चित्सम्मानविधि-र्व्यवतिष्ठेत न त्वसावस्ति । तस्माद्भेदपक्षेऽपि ज्योतिष्टोमेऽग्नौ सति पश्वेका-दशिनीसद्भावेऽपि यूपैकादशिन्या अभावेन पक्षमानतावेदिमानतारथा-क्षमात्रान्तरालतानामप्रसङ्गा'न्नान्तरिक्षे न दिवीति'वन्निषेधो नित्यानुवादः पूर्वपक्षसिद्धान्तयो'रेकयूप एकादश पशवो नियोक्तव्या' इत्यस्य विधेः शेषत्वेनाङ्गीकर्तव्यः । ततश्च यासु विकृतिषु अग्निभावेऽपि पश्वेकादशिनी विहिता तद्विषयत्वं रथाक्षमात्रान्तरालविधेः भवतीति ॥

अथ विंशं तृतीयलिङ्गपरिहारार्थं सूत्रं—

## विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् (२-४-२७)

इति ।

चतुष्पदम् । तस्यार्थः—षोडशिग्रहणस्या'तिरात्रे षोडशिनं गृह्णाति, न गृह्णाती'ति विहितत्वात् प्रतिषेधाच्चाग्रहणपक्षे द्वयोः, ग्रहणपक्षे तिसृणां स्तोत्रीयाणां विराजमभिसम्पन्नानामेकविंशतिसद्भावासद्भावाभ्यामतिरेकः स्यादित्यैककर्म्येऽपि लिङ्गोपपत्तिरिति ॥

अथैकविंशं चतुर्थलिङ्गपरिहारार्थं सूत्रं—

## सारस्वते विप्रतिषेधाद्यदेति स्यात् (२-४-२८)

इति ।

१. 'न पक्ष', २. 'अग्न्यभावे'. क.

पञ्चपदम् । तस्यार्थः— सर्वसोमयागानां ज्योतिष्टोमपश्चाद्भाव-नियमेन सारस्वते द्वादशाहवत्पक्षद्वयेऽप्यनिष्टप्रथमयज्ञत्वनिमित्तपुरोडाश-दर्शनविप्रतिषेधाविशेषाद्यदा पुरोडाशिन इति कालभेदनिमित्तं पुरोडाशित्वं स्यात्। तथा सान्नाय्यित्वमपि। मित्रावरुणयोरयने सारस्वतसत्रविशेषे यथामावास्यायामतिरात्रः स्यात् तथा दीक्षेरन्, तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेवामावास्यस्य सान्नाय्यवत्सानपाकुर्युः, तं पक्षमामावास्येन यजित्वा पौर्णमास्यां गामुपेयुः, पौर्णमासेनोत्तरं यजित्वामावास्यायामायुष-मुपेयुः एवमावर्तयन्तो व्रजेयुरिति वाक्येन प्रतिमासमेकस्मिन् पक्षेऽमावा-स्याख्यकर्मविधानात्पक्षान्तरे च पौर्णमास्याख्यकर्मविधानात् पुरोडाशि-शब्दः पौर्णमास्याख्यकर्मयोगिकाललक्षणार्थः। सान्नाय्यिशब्दश्चामावा-स्याख्यकर्मयोगिकाललक्षणार्थ इत्येवमवश्यं पक्षद्वयेऽप्यङ्गीकर्तव्यम्। तस्मान्न कर्मैकत्वे कश्चिद्विशेष इति॥

अथ द्वाविंशं पञ्चमलिङ्गस्यानुभाषणार्थं सामान्यपरिहारार्थं वा सूत्रं —

## उपहव्येऽप्रतिप्रसवः* (२-४-२९)

इति।

द्विपदम्। तत्राद्ये तावत्पक्षेऽयमर्थः— उपहव्यस्य भेदे सत्य-तिदेशप्राप्तबृहद्रथन्तरविकल्पनिवृत्तिः प्रतिप्रसवाख्या पुनःश्रुतिप्रयोजनं स्यात्। एकत्वे तु शाखाद्वयप्रत्ययत्वात्पुनःश्रुतावपि विकल्पापत्तेर्न तन्निवृत्त्याख्यः प्रतिप्रसवः प्रयोजनमिति पुनःश्रुत्यानर्थक्यं स्यादिति

---

* 'हव्येऽप्रातिप्रसवः' कुतूहलवृत्तौ.

यदुक्तं तत्परिहर्तव्यमिति । द्वितीये तु उपहव्ये बृहद्रथन्तरपुनःश्रुतेर्न प्रतिप्रसवात्मको विकल्पाभावः प्रयोजनत्वेनेष्टः येन तदसम्भवात्पुनः-श्रुत्यानर्थक्यं स्यादिति ॥

अथ त्रयोविंशमनुभाषणपरिहारार्थं पुनःश्रुत्यैदमर्थ्यात्मकविशेष-परिहारार्थं वा सूत्रं —

गुणार्था वा पुनःश्रुतिः २-४-३०

इति ।

त्रिपदम् । वाशब्दोऽनुभाषितपुनःश्रुत्यानर्थक्यनिवृत्त्यर्थः सामा-न्यपरिहारोक्तिजनितविशेषपरिहाराभावाशङ्कानिवृत्त्यर्थो वा द्रष्टव्यः । गुणार्था संस्थादक्षिणाव्यवस्थाख्यस्य गुणस्य विधानार्था बृहद्रथ-न्तरपुनःश्रुतिः स्यात् । 'यदा रथन्तरसामा तदाग्निष्टोमसंस्थः श्याव-दक्षिणश्च भवति', 'यदा बृहत्सामा तदोक्थ्यसंस्थो रुक्मललाट-दक्षिणश्च भवती'ति पक्षद्वयेऽपि तुल्योऽर्थः ॥

अथ चतुर्विंशं परिहृतेषु पूर्वपक्षलिङ्गेषु[1] सिद्धान्तलिङ्गाभि-धानार्थं सूत्रं —

प्रत्ययं चापि दर्शयति (२-४-३१)

इति ।

चतुष्पदम् । तस्यार्थः- शाखान्तरविहिताङ्गानुवादेन तद्धर्म-विधानं शाखान्तराधीतस्य मन्त्रस्य स्वशाखाधीतेन मन्त्रेण सह विकल्प-

---

१. 'पक्षेषु लिङ्गेषु' ग. पाठः.

वचनं चान्योन्यधर्मसाङ्कर्यं सूचयत् सर्वशाखाप्रत्ययं कर्म द्योतयति । मैत्रायणीयानां हि प्रयाजा नाम्नाताः 'समानत्र होतव्या' इति तु सहहोमात्मको गुणस्तेषां समाम्नातः । तथाऽश्मादानमन्त्रः 'कुटरुरसी'ति केषांचिन्नाम्नातः तेषामपि "कुक्कुटोऽसीत्यश्मानमादत्ते, कुटरुरसीति वे'ति तेन सह विकल्पवचनं श्रूयते, तस्मादप्यैककर्म्यं स्यादिति ॥

अथ पञ्चविंशं पूर्वपक्षसूत्रं —

अपि वा*क्रमसंयोगाद्विधिपृथक्त्व-
मेकस्यां व्यवतिष्ठेत (२-४-३२)

इति ।

षट्पदम् । अपि वेति सर्वशाखाप्रत्ययत्वं कर्मणो व्यावर्तयति । एकस्यामित्यत्र वीप्सा द्रष्टव्या । एकैकस्यां शाखायां विधिपृथक्त्वं कर्मव्युत्पत्त्या विधेयकर्मान्यत्वं व्यवतिष्ठेत । तत्र हेतुः—अक्रमसंयोगादिति । क्रमग्रहणं परिमाणस्याप्युपलक्षणार्थम् । अन्यशाखाविहिताङ्गोपसंहारे स्वशाखाविहितानामङ्गानां तद्विहितक्रमपरिमाणसंयोगाभावप्रसङ्गादिति ॥

अथ षड्विंशं सिद्धान्तसूत्रं —

§विरोधिनां त्वसंयोगादैककर्म्यें
तत्संयोगाद्विधीनां ¶सर्वप्रत्ययः (२-४-३३)

इति ।

---

* 'वा श्रुतिसंयोगाद्' कुतूहलवृत्तौ   § 'विरोधिना त्व' कुतूहलवृत्तौ न्यायमालायां, ¶ 'सर्वकर्मप्रत्ययः' भाष्ये न्यायसुधायां च पाठः.

सप्तपदम् । तुशब्द उक्तदोषव्यावृत्त्यर्थः । ऐककर्म्ये विधीनां तत्संयोगाद्विरोधिनामसंयोगात्सर्वप्रत्यय इति पदानामन्वयः । कर्मैकत्वे सति सर्वशाखास्थानां विधीनां कर्मव्युत्पत्त्या विधेयानामङ्गानां तेनैकेन कर्मणा संयोगाद्धेतोः विरोधिनां क्रमकालपरिमाणानामसंयोगात् सर्वप्रत्ययः सर्वाभ्यः शाखाभ्योऽवगतिरङ्गानामेकस्य कर्मणः स्यादित्यर्थः ॥

तदेष तावत्सूत्रस्य तात्पर्यार्थोऽस्य जायते ।
क्रमादयः पदार्थानां धर्मत्वाद्धर्मिणां सताम् ॥

कथं तेषां बाधकाः स्युस्तस्मात्तदविरोधिनाम् ।
तेषां परिग्रहः कार्यः परित्यागो विरोधिनाम् ॥

तथा सति च सर्वाभ्यः शाखाभ्यो येऽङ्गसङ्गतौ ।
स्वशाखीयाङ्गमात्रस्थाः परिमाणक्रमादयः ॥

पूर्वावधारितास्तेषां विरोधित्वेन बाधया ।
सङ्कलय्याखिलैरङ्गैर्जन्यतेऽन्यस्तु यः क्रमः ॥

परिमाणं च तद् ग्राह्यं द्वयमत्र भविष्यति ।
शिष्टाकोपाधिकरणे यदा ह्युक्तं क्रमादिभिः ॥

आचान्त्यादिपदार्थानां स्मार्तानामप्यबाधनम् ।
तदा श्रौतपदार्थानां बाधस्तैः शङ्क्यते कथम् ॥

तस्मात्सर्वं सर्वशाखाप्रत्ययं कर्म साङ्गकम् ।

---

१. 'ककर्मणः' क.

इति निगदितमेतत्कर्मणां षट्प्रमाणी-
बलकृतमनिवार्यैर्हेतुभिर्भेदरूपम् ।
तदनुगुणतयेष्टं यत्प्रसङ्गागतं यद्
द्वयमपि कथितं तल्लक्षणेऽस्मिन् द्वितीये ॥

प्रायो न्यायसुधोक्तोऽयमस्माभिः परिकीर्तितः ।
भाष्यवार्तिकगूढोऽर्थः[1] सूत्राणामिति गम्यताम् ॥

अत्र शाखान्तराधिकरणे षड्विंशतिः सूत्राणि ॥

इति महोपाध्यायश्रीमहर्षिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे द्वितीयस्याध्यायस्य
चतुर्थः पादः ।
समाप्तश्चाध्यायः ।

---

१. 'कगुह्योऽत्र' क.

## ॥ तृतीयोऽध्यायः ॥

अथ तृतीयस्याध्यायस्य प्रथमे पादे

### प्रथमं शेषलक्षणाधिकरणम् ।

---

तत्र प्रथमसूत्रोक्तप्रतिज्ञापञ्चकस्थयोः ।
प्रमाणरूपयोर्धर्मस्योक्तयोर्लक्षणद्वये ॥

अन्यानि त्रीणि वर्ण्यन्ते साधनादीन्यतः परम् ।
दशभिर्लक्षणैरेवं सङ्गतिं वक्तुमादितः ॥

सूत्रं सूत्रकृता

**अथातः शेषलक्षणम् (३-१-१)**

इत्यदः ।

सूत्रितं, त्रिपदं तस्य त्रेधार्थो वार्तिकोदितः ॥

शेषलक्षणवृत्तेश्च विग्रहोऽपि द्विधा कृतः ।
तत्सर्वमुच्यतेऽस्माभिः संक्षेपादत्र तद्यथा ॥

इहानन्तर्यहेत्वर्थौ ज्ञेयौ प्रथमसूत्रवत् ।
अथात इति शब्दौ द्वौ शेषलक्षणमित्यपि ॥

जातौ स्यादेकवचनं समासः कर्मधारयः ।
शिष्टानि लक्षणान्यन्ये दशाध्याय्या इतीप्सितम् ॥

सूत्रशेषो वक्ष्यत इति प्रथमान्तं पदं यदि ।
द्वितीयान्तत्वक्लृप्तौ तु वक्ष्याम इति सिध्यति ॥

शब्दान्तरादिभिः षड्भिः प्रमाणैर्भेदलक्षणे ।
कर्मणां कथिते तस्मात् स्थिताद्धेतोरनन्तरम् ॥

लक्षणान्यभिधास्यन्ते दशाप्यत्र यथाक्रमम् ।
यद्वाङ्गवचनः शेषशब्दो नान्याभिधायकः ॥

समासश्चापि षष्ठीतत्पुरुषोऽत्रापि पूर्ववत् ।
शेषस्य लक्षणमिति दशाध्याय्येव कथ्यते ॥

कथं तदिति चेत्सर्वैः शेषत्वस्य निरूपणात् ।
तत्र तावत्तृतीयस्य शेषलक्षणतां प्रति ॥

न कस्यचिद्विवादोऽस्ति साक्षाच्छेषनिरूपणात् ।
चतुर्थेऽपि प्रयोज्यत्वं शेषाणामेव चिन्त्यते ॥

नाशेषाणामतः सोऽपि शेषस्यैवेह लक्षणम् ।
पञ्चमेऽपि पदार्थानां शेषभूतः क्रियाक्रमः ॥

निरूप्यते ततः सोऽपि शेषलक्षणतां व्रजेत् ।
षष्ठे निष्पादकत्वेन कर्तुः शेषस्य कर्मणाम् ॥

अधिकाराभिधानेन शेषलक्षणता स्फुटा ।
तथैवोत्तरषट्केऽपि शेषाणामतिदेशतः ॥

सामान्यतो विशेषाच्च प्राप्तिर्विकृतिगोचरा ।
ऊहबाधौ तथा तन्त्रप्रसङ्गौ च क्रमेण षट् ॥

उच्यन्तेऽर्थास्ततश्चास्ति शेषलक्षणतात्र च ।
यद्वा तृतीय एवायमध्यायः शेषलक्षणः ॥

साक्षात्सपरिवारस्य शेषस्यात्र निरूपणात् ।
ततश्चैतत्तृतीयार्थप्रतिज्ञामात्रमिष्यते ॥

प्रातिस्विकी प्रतिज्ञा तु प्रात्यध्यायं भविष्यति ।
उत्तरत्र विशेषेण स्वस्थाने सूत्रभाष्ययोः ॥

एवं समासद्वैविध्यात् सूत्रस्यार्थे व्यवस्थिते ।
अथशब्दस्याधिकारोऽप्यर्थो वक्तुं हि शक्यते ॥

अथ शब्दानुशासनमित्यत्रेवात्र तद्यथा ।
शेषलक्षणमत्राधिकृतं वेद्यमतः परम् ॥

तदादरेण श्रोतव्यं विशेषात्तत्परैरिति ।
स च शेषविचारोऽत्र पञ्चधा क्रियतेऽधुना ॥

कः शेषः केन वा शेषः कथं च विनियुज्यते ।
कानि चास्य प्रमाणानि बलं चैषां कथं न्विति ॥

एतत्तात्पर्यतोऽत्राऽन्यदुपोद्घातादि नेष्यते ।
एवमत्राधिकरणे वक्ष्यमाणं प्रकीर्तितम् ॥

श्रोतृबुद्धिसमाधानसुखग्रहणसिद्धये ।
सन्देहः पूर्वपक्षश्च तस्मादत्रानपेक्षितौ ॥

अत्र शेषलक्षणाधिकरण एकं सूत्रम् ।

अथ द्वितीयं परार्थत्वाधिकरणम् ।

तत्र पूर्वाधिकरणप्रतिज्ञार्थेषु पञ्चसु ।

मध्ये

**शेषः परार्थत्वात् (३-१-२)**

इति हेतुस्वरूपयोः ॥

उक्त्यर्थं द्विपदं सूत्रमेकमेवाविशेषतः ।
हेतूक्तिः श्रुतितस्तत्र स्वरूपोक्तिरथार्थतः ॥

तेनायमर्थः शेषत्वहेतुरत्र परार्थता ।
न तु प्रयोज्यताधिक्याविनाभावान्तचोदनाः ॥

न चोपकारकत्वं तत्स्वरूपं नापि चापरम् ।
किंतु पारार्थ्यमेवेति नियमाद्धेतुरूपयोः ॥

श्रुत्यर्थाभ्यां द्वयमिदं सूत्रेणैकेन वर्णितम् ।
चोदनासूत्रवत् तेन वाक्यभेदो न जायते ॥

अत्र परार्थत्वाधिकरणेऽप्येकं सूत्रम् ॥

अथ तृतीयं बादर्यधिकरणम् ।

तत्र शेषस्वरूपे तच्छब्दोक्तौ चास्य कारणे ।
पूर्वाधिकरणेनोक्ते शेषत्वाश्रय उच्यते ॥

चत्वार्यत्र तु सूत्राणि तेषां व्याख्या द्विधा कृता ।
भाष्ये पूर्वा स्वपक्षेण वृत्तिकृत्पक्षतः परा ॥

तत्र स्वपक्षेण तावत् किं द्रव्यगुणसंस्कारेष्वेव शेषत्वमुत यागफलपुरुषेष्वपीति सन्दिह्य द्रव्यगुणसंस्कारेष्वेवेति पूर्वपक्षं वक्तुमाद्यं सूत्रम् । तच्च

**द्रव्यगुणसंस्कारेष्वेव* बादरिः (३-१-३)**

इति ।

---

* 'षु बादरिः' इत्येव मुद्रितपुस्तकादिषु दृश्यते.

(द्वि?त्रि)पदम् । तस्यार्थः– द्रव्यगुणसंस्कारेष्वेव शेषभावं बादरिराचार्यो मन्यते स्म न यागफलपुरुषेष्वपि । तस्य ह्युपकारलक्षणमेव शेषत्वमित्यभिमतम् । तच्च द्रव्यादित्रय एव सम्भवति, न यागादित्रये । तथाहि–द्रव्यस्य व्रीह्यादेर्यागं प्रति निष्पादकत्वेन स्वभावत एव शेषत्वं दृश्यते । गुणोऽप्यरुणादिरेकहायन्यादिद्रव्यपरिच्छेदद्वारा दृष्टमेव क्रयशेषत्वं भजते । संस्कारेणाप्यवहन्त्यादिना व्रीह्यादेः पुरोडाशादिनिष्पत्तियोग्यत्वापादनद्वारा प्रत्यक्ष एव यागं प्रति शेषभाव आश्रितः । यागफलपुरुषास्तूपकार्यत्वादन्यैः सर्वदा शेषिण एव । अतः कथं तेषामुपकारकत्वलक्षणं शेषत्वं भवेदिति ॥

एवं बादरिमतेन पूर्वपक्षेऽभिहिते जैमिनिमतेन सिद्धान्तं वक्तुं त्रीणि सूत्राणि—

**कर्माण्यपि जैमिनिः फलार्थत्वात् (३-१-४)**

**फलं च पुरुषार्थत्वात् (३-१-५)**

**पुरुषश्च कर्मार्थत्वात् (३-१-६)**

इति ।

चतुस्त्रित्रिपदानि । तत्राद्यसूत्रगतयोः कर्मफलशब्दयोः प्रथमाद्वितीयान्तत्वसाधारण्येऽप्यन्त्यसूत्रगतप्रथमान्तपुरुषशब्दावैलक्षण्यार्थं प्रथमान्तत्वमेव द्रष्टव्यम् । ततश्च कर्माण्यपि शेषभूतानि, फलं च शेषभूतं, पुरुषश्च शेषभूत इति जैमिनिराचार्यो मन्यते स्मेतीतिशब्दमध्याहृत्य शेषपदानुषङ्गेण व्याख्या कर्तव्या । कथं तर्हि 'जैमिनिस्तु खल्वाचार्यः कर्माण्यपि शेषभूता(नीति?नि) मन्यते स्मेत्यनितिशब्दं भाष्यकृद्व्या-

ख्यानं सङ्गच्छत इति चेत्, इतिशब्दोपस्कारेण भाष्यव्याख्याकरणादिति ब्रूमः । अथवा कर्मफलशब्दौ द्वितीयान्तावेव भाष्यानुपस्काराय द्रष्टव्यौ, किं पुरुषशब्दावैलक्षण्येनाङ्गीकृतेन । अतस्तत्र सेतिशब्दे पूर्वयोश्चानितिशब्दे व्याख्याने क्रियमाणे न कश्चिद्दोषः । ऐकरूप्यं च निर्देशानामसुसाधं सर्वत्र । न हि द्रव्यगुणसंस्कारेष्विति सप्तम्या निर्देशः कथमप्यैकरूप्यमापादयितुं शक्यः । अतस्तत्र यथा सप्तम्यानुगुण्याय शेषभावं मेन इति व्याख्या क्रियते एवमत्रापि प्रथमाद्वितीयानुगुण्याय यथोक्तैव व्याख्या सूत्रत्रये कर्तव्येति न काचिदनुपपत्तिः । कः पुनरेषामपि शेषत्वमनने जैमिनेर्हेतुपरामर्शः । अत आह—फलार्थत्वात् पुरुषार्थत्वात् कर्मार्थत्वादिति । जैमिनेर्हि पारार्थ्यलक्षणमेव शेषत्वमभिमतं, न बादरिवदुपकारलक्षणमिति सर्वत्र तादर्थ्यमपदिष्टम् । तदयमर्थः— फलार्थमेव हि सर्वं कर्म क्रियते, न स्वार्थं, स्वरूपनिष्पत्तेरप्रयोजनत्वात् । तथा फलमपि पुरुषोपभोगार्थमेव कर्मणा साध्यते नान्यार्थम्, अनुपभुज्यमानस्य तस्य फलशब्दवाच्यत्वायोगात् । एवं पुरुषोऽपि कर्मार्थ एव युक्तः । न हि कर्म पुरुषं कर्तारमन्तरेणात्मानं लभते । तस्मादेषामपि शेषत्वमन्योन्यार्थत्वादस्त्येव, न केवलं द्रव्यगुणसंस्काराणाम् । तेषामपि नोपकारलक्षणं शेषत्वं, किं तु पारार्थ्यलक्षणमेव । तच्च पूर्वमेव व्याख्यातम् । तस्मात् त्रिकद्वयेऽपि शेषत्वं समानमेव । एतावांस्तु विशेषः— यदुत यागफलपुरुषाणां किञ्चिदपेक्ष्य शेषत्वं किञ्चिदपेक्ष्य शेषित्वमिति द्व्याकारत्वमिष्यते । द्रव्यगुणसंस्काराणां तु सर्वदैव शेषत्वमिति ॥

अथ वृत्तिकारमतेन व्याख्या । तस्य न बादरिमतं पूर्वपक्षः किंतु चत्वार्यपि सिद्धान्तसूत्राण्येव । तानि च पूर्वसूत्रोक्तपारार्थ्य-

सामान्यलक्षणयुक्तशेषत्वविषयप्रदर्शनार्थानि । ततश्च त्रिकद्वयेऽपि पारार्थ्यलक्षणत्वाच्छेषत्वस्य बादरिग्रहणं पूजार्थमेव, जैमिनिग्रहणवद्द्रष्टव्यम् । सूत्रार्थस्तु यथोक्त एवात्रापीति शेषत्वविषयविवेकः सिद्ध इति । अत्र बादर्यधिकरणे चत्वारि सूत्राणि ॥

अथ चतुर्थं तेषामर्थाधिकरणम् ।

तत्र शेषस्वरूपे तद्धेतौ तद्वत्तदाश्रये ।
पूर्वत्र्यधिकरण्योक्ते कथं च विनियुज्यते ॥

इत्युत्तरत्र्यधिकरण्योच्यते सङ्गतिस्त्वियम् ।
तत्र प्रथममत्राधिकरणे चिन्त्यते त्विदम् ॥

ये निर्वापप्रोक्षणावहननाद्याः पदार्थकाः ।
ये चोत्पवनमुख्याः स्युः शाखाच्छेदादयश्च ये ॥

ते किमौषध आज्ये च सान्नाय्ये च व्यवस्थिताः ।
उत सर्वेऽपि सर्वत्र कर्तव्या अव्यवस्थया ॥

इति तत्र त्विदं सूत्रं सिद्धान्तोपक्रमात्मकम्।

## तेषामर्थेन सम्बन्धः (३-१-७)

इति त्रिपदमादिमम् ॥

तस्यार्थः– तेषां धर्माणामर्थेन प्रयोजनेन हेतुना सम्बन्धः प्रत्येतव्यो धर्मिभिः । ये यत्र क्रियमाणाः प्रयोजनवन्तो भवन्ति ते तत्रैव कर्तव्या नान्यत्रेत्युक्तं भवति । ततश्चावहननादयः आज्यसान्नाय्ययोरप्रयोजनत्वान्न कर्तव्याः । तथोत्पवनादयः औषधसान्नाय्ययोः, शाखाहरणादयश्चाज्यौषधयोरिति सिद्धं भवति । तस्माद्व्यवस्थिता धर्मा इति ॥

अथाव्यवस्थां पूर्वपक्षयितुं द्वितीयं सूत्रं —

विहितस्तु सर्वधर्मः स्यात् संयोगतो-
ऽविशेषात्प्रकरणाविशेषाच्च (३-१-८)

इति ।

अष्टपदम् । तुशब्दः पक्षं व्यावर्तयति । सर्वधर्म एवंजातीयकः स्यात् न व्यवस्थितः । कुत इत्याह— विहित इति । यतः प्रयोजनवशेन प्राप्तो यत्र प्रयोजनं तत्रैव व्यवतिष्ठेत । श्रुतिविहितस्तु यत्र यत्र विहितस्तत्र तत्र कर्तव्यो भवति । सर्वत्र चैवमादयो विहिता दृश्यन्ते तस्मात् सर्वत्र कर्तव्याः । कथं सर्वत्र विहिता इति चेत्, अत आह— संयोगतोऽविशेषात् प्रकरणाविशेषाच्चेति । तत्र संयोगोऽपूर्वेण सह साध्यसाधनसम्बन्धोऽभिप्रेतः । स सर्वेषामाज्यौषधसान्नाय्यानामविशिष्टः । यदेकस्यापूर्वसाधनत्वं धर्मसम्बन्धे कारणं तदितरस्याप्यविशिष्टमित्युक्तं भवति । एवं प्रकरणमपि सर्वेषामविशिष्टम् । एकत्र विहितत्वादेकफल-साधनत्वाच्च सन्निध्यपेक्षालक्षणयोस्तद्रूपयोः सर्वत्र तुल्यत्वात् । तस्मात् सर्वे सर्वत्र कर्तव्या इति ॥

अथ तृतीयं सिद्धान्तसूत्रम् —

अर्थलोपादकर्म स्यात् (३-१-९)

इति ।

त्रिपदम् । तस्यार्थः— सर्वेषां सर्वत्राकर्मानुष्ठानमेव स्यात् । कुत इत्याह—अर्थलोपादिति । अर्थस्य प्रयोजनस्याङ्गकार्यस्य लोपात्सर्वत्र

सर्वैरजन्यमानत्वात्। न ह्यवहननेन सान्नाय्याज्ययोरुत्पवनेनौषधसान्नाय्ययोः शाखाहरणेनाज्यौषधयोश्च किञ्चित्प्रयोजनं जन्यमानं पश्यामः। तस्मात्प्रयोजनवशेन व्यवतिष्ठन्ते सर्वत्र धर्मा इति॥

अथ चतुर्थं पदोत्तरं सूत्रं—

**फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् (३-१-१०)**

इति।

अष्टपदम्। इमानि च तानि पदानि दृष्टाभावेऽप्यदृष्टस्य कल्पयितुं शक्यत्वात्, नैवेतरत्राप्यर्थलोपः तस्मात् किमिति न क्रियेरन्निति तन्न्यावृत्त्यर्थस्तुशब्दः। विध्यन्यथानुपपत्त्या ह्यदृष्टं कल्प्यते। स च विधिरन्यथैव दृष्टार्थतयोपपन्नः सर्वत्र। यतोऽवघातादीनां चेष्टयानुष्ठानेन सह व्रीह्यादिषु फलं तुषकणविमोकादिकं दृष्टमुपलभ्यते, अन्यत्र तु चेष्टामात्रम्। दृष्टस्य हि फलस्य विप्रयोगे व्रीह्यादिष्वभावे तदभावाद्धेतोरन्यत्राज्यादिषु शब्दार्थः प्रयोजनशून्यमनुष्ठानमात्रमवहननादेः कल्प्येत। क्वचिद् दृष्टे सति फलेऽर्थापत्तिक्षयान्नान्यत्रादृष्टकल्पनावकाशोऽस्ति तस्माद्व्यवतिष्ठेरन् यथासंयोगं धर्मा इति॥

अत्र तेषामर्थाधिकरणे चत्वारि सूत्राणि॥

अथ पञ्चमं यज्ञायुधाधिकरणम्। तत्र "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानी"ति वाक्यान्युदाहृत्य, किमेतेषां स्फ्यादीनां यज्ञायुधशब्दानुसारेण यज्ञे यथाशक्ति विनियोगः कर्तव्यः, उत यथासंयोगं व्यवस्थेति सन्दिह्य व्रीह्यादिद्रव्येष्ववघातादिसाङ्कर्यनिराकरण-

वत् स्फ्यादिद्रव्याणामुद्धननादिक्रियासांकर्यनिराकरणस्य यज्ञायुध-शब्दार्थसङ्कोचप्रसङ्गादशक्तेर्यथाशक्तिविनियोगे पूर्वपक्षिते यथासंयोगं व्यवस्थां सिद्धान्तयितुं सूत्रं —

**द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्येत (३-१-११)**

इति ।

षट्पदम् । तस्यार्थः- स्फ्यादिद्रव्यमप्यवघातादिसंस्कारवत् तदर्थमेव चोद्येत येन कर्मणा संयुक्तं तच्छेषतयैव नियम्यत इत्यर्थः । कुत इत्याह- उत्पत्तिसंयोगादिति । तस्य द्रव्यस्य तेन कर्मणोत्पत्तावेव संयोगात् । एवं हि श्रूयते—"स्फ्येनोद्धन्ति, कपालेषु श्रपयति, अग्निहोत्रहवण्यां हवींषि निर्वपति, शूर्पेण विविनक्ति, कृष्णाजिन-मधस्तादुलूखलस्यावस्तृणाति, शम्यायां दृषदमुपदधाति, उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्यां पिनंष्टि" इति । अत एषां येन कर्मणा संयुक्तमुत्पन्नं तदेव तेन कर्तव्यं नान्यत् । तथा तत्कर्म तेनैव कर्तव्यं नान्येनेत्यपि द्रष्टव्यम् । तस्मात् स्फ्यादीनामप्यवघातादि-वद्यथासंयोगं विनिवेशः स्यात् । यज्ञायुधवाक्यस्य च वैशब्द्संयोगे-नानुवादसारूप्याद्विधायकशब्दाभावाच्च यथाप्राप्तानुवादत्वमेव विज्ञायते ॥

तस्मात्पूर्वत्र संस्कारसाङ्कर्यं नाश्रितं यथा ।
तथा न द्रव्यसाङ्कर्यमत्राश्रयणमर्हति ॥

अत्र यज्ञायुधाधिकरण एकं सूत्रम् ॥

अथ षष्ठमरुणाधिकरणम् । तत्र 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाती'ति वाक्यमुदाहृत्य, किमिदमारुण्यमेतद्वाक्यगतेनैकहायनीद्रव्येण सम्बध्यते किं वा प्रकरणगतेन द्रव्यमात्रेणेति सन्दिह्य एकहायन्याः

क्रयं गुणं च प्रति क्रयस्य सोमद्रव्यं च प्रति विध्यनुवादनिमित्तवाक्यभेद-प्रसङ्गाद्वाक्यान्तरप्राप्तप्रकरणगतद्रव्यमात्रानुवादेनारुण्यविधौ वैरूप्यप्रसङ्गा-भावात् कृत्स्ने प्रकरणे निवेशस्तस्य प्रत्येतव्यः । अरुणयेत्येतच्च पृथग्वाक्यम् । तत्र तृतीयया प्रकरणगतानि कृत्स्नानि यागसाधनद्रव्या-ण्यनूद्य प्रातिपदिकेन तत्र गुणस्य विधीयमानत्वात् प्राकरणिकानि ग्रहचमसादीनि सर्वाण्यारुणीकर्तव्यानीति गम्यते । तस्मान्नैकहाय-नीमात्रेणारुण्यसम्बन्ध इति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम्—

अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् (३-१-१२)

इति ।

पञ्चपदम् । तस्यार्थः— एकहायन्यारुण्ययोर्द्रव्यगुणयोरर्थैकत्वं प्रयोजनैकत्वमेकक्रयार्थत्वात्मकमत्र श्रूयते । उभयोरपि क्रीणातिना सम्बन्धात् । तथा सति तयोरैककर्म्यात् तस्मादेवार्थैकत्वशब्दोक्तादे-कक्रयात्मककर्मसम्बन्धलक्षणादेककार्यत्वाद्धेतोः परस्परानियमो विशेषण-विशेष्यभावात्मको द्रव्यान्तरगुणान्तरव्यवच्छेदेन स्यात् । वैरूप्य-प्रसङ्गस्तु विशिष्टविधिना परिहियेत । तस्मान्न कृत्स्ने प्रकरणे गुणस्य निवेश इति ॥

अत्रारुणाधिकरण एकं सूत्रम् ॥

अथ सप्तमं ग्रहाधिकरणम् । तत्र 'ग्रहं सम्मार्ष्टी'ति वाक्यमुदाहृत्य किमेकस्य ग्रहस्यैतद्वाक्यविहितं संमार्जनं कर्तव्यमुत सर्वेषामिति सन्दि-ह्यैकस्येति पूर्वपक्षं वक्तुमाद्यं सूत्रं —

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् (३-१-१३)

इति ।

त्रिपदम् । तस्यार्थः- ग्रहमित्येकवचनोक्तेनैकत्वेन युक्तमेतत्सम्मार्जनमेकस्यैव ग्रहस्य कर्तव्यं न सर्वेषामिति ब्रूमः । कुत इत्याह— श्रुतिसंयोगादिति । तस्मादेवैकत्वयुक्तशब्दोक्तादेकत्वश्रुतेर्ग्रहसम्मार्गाभ्यां संयोगात्, ग्रहसम्मार्गयोर्वैकत्वश्रुत्या संयोगात् । ततश्च यथा 'पशुना यजेते'त्यत्रोपादेयगतमेकत्वं विवक्षितं तथोद्देश्यगतमपि विवक्षितव्यमेवेति मन्यते ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

## सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् (३-१-१४)

इति ।

षट्पदम् । तस्यार्थः- वाशब्दः पक्षं व्यावर्तयति । सर्वेषां ग्रहाणां सम्मार्जनं कर्तव्यं, नैकस्यैव । कुत इत्याह— लक्षणत्वादिति । ग्रहत्वस्यामूर्तत्वेन सम्मार्गानर्हत्वाद्व्यक्तयः सम्मार्ष्टव्यत्वेनावतिष्ठन्ते, तासां च स्वतः सङ्केतानर्हत्वात् ग्रहत्वं लक्षणत्वेनाश्रीयते । ततः किमित्याह- अविशिष्टं हि लक्षणमिति । हिशब्दोऽवधारणे, हेतौ प्रसिद्धौ वा । तच्च ग्रहत्वलक्षणं लक्षणं सर्वासां ग्रहव्यक्तीनामविशिष्टमेव जातेः कासुचिद्व्यक्तिषु पक्षपाताभावात् । तस्मादेष वाक्यार्थो भवति- यद्ग्रहत्वजात्या लक्षितं व्यक्तिजातं तत्सर्वं सम्मार्ष्टव्यमिति । अतः प्रतिग्रहं सम्मार्ग-

विधानादेकस्मिन्नप्यसम्मृज्यमाने तद्गतशास्त्रबाधप्रसङ्गात् सर्वे सम्मार्ष्टव्या इति ॥

अथ तृतीयं शङ्कोत्तरं सूत्रं —

## चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत (३-१-१५)

इति ।

पञ्चपदम् । इयं च शङ्का-यथा 'पशुमालभेते'त्येक एव पशुरालभ्यते, एवमिहापि भवत्विति सा तुशब्देन व्यावर्त्यते । नेदं पश्वेकत्वतुल्यं ग्रहैकत्वमित्यर्थः । तदेव दर्शयति- चोदित इत्यादिना । पशौ सक्तुवन्निष्प्रयोजनत्वेन संस्कार्यत्वाभावात्कारकसामान्यलक्षणापुरःसरं करणत्वे तृतीयार्थे द्वितीयालक्षिते सति भूतभव्यसमुच्चारणन्यायेनालम्भकल्पितं यागं प्रति करणत्वेन चोदिते यथाश्रुति श्रुतैकत्वापरित्यागेन तत्करणत्वं प्रतीयेत । कुतः? सर्वेषां जातिद्रव्यसंख्यानां परार्थत्वात्परस्य यागस्य परस्या भावनाया वा शेषत्वात् यागं भावनां वा प्रत्युपादेयत्वादित्यर्थः । ततश्चार्थापत्तिकल्पितविशेषणविध्यन्तरविहितत्वात्सर्वविशेषणविवक्षोपपत्तिस्तत्र युक्ता नात्र ।

इति वैषम्यमनयोर्यस्मादेकत्वसंख्ययोः ।
पशुग्रहस्थयोस्तस्मादनुदाहरणं पशुः ॥

अत्र ग्रहाधिकरणे त्रीणि सूत्राणि ॥

अथाष्टमं चमसाधिकरणम् । तत्रापि 'ग्रहं सम्मार्ष्टी'त्येतदेव वाक्यमुदाहरणम् । अयं तु सन्देहः—किं चमसा अपि संमार्ष्टव्या उत नेति । तत्र सम्मार्ष्टव्या इति पूर्वपक्षं वक्तुमाद्यं सूत्रं —

**संस्काराद्वा गुणानामव्यवस्था**
**स्यात् (३-१-१६)**

इति ।

पञ्चपदम् । वाशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । गुणशब्दः सम्मार्ष्टव्यगुणभूतसम्मार्गवचनः । बहुवचनं तु तस्य प्रतिग्रहावृत्तिप्रवृत्त-बहुत्वापेक्षं द्रष्टव्यम् । तदयमर्थः– गुणानां सम्मार्गाणां ग्रहमात्रगतत्व-रूपाया व्यवस्थाया अभावः स्यात् । एकत्ववदेव ग्रहत्वस्यापि प्रदर्शना-र्थत्वाच्चमसेष्वपि सम्मार्गः कर्तव्य इत्युक्तं भवति । तत्र हेतुः- संस्कारादिति । भावप्रधानो निर्देशः । गुणानामित्यत्रापि सम्बध्यते । सम्मार्गाणां गुणानां सम्मार्ष्टव्यसंस्कारत्वादित्यर्थः । संस्काराश्चापूर्वसाधनप्रयुक्त-त्वात् प्रत्यपूर्वसाधनमावर्तनीया भवन्ति । तस्माच्चमसा अपि सम्मा-र्ष्टव्या इति ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य**
**शब्दप्रमाणत्वात् (३-१-१७)**

इति ।

षट्पदम् । वाशब्दः पक्षं व्यावर्तयति । ग्रहेष्वेव सम्मार्गव्यवस्था स्यान्न चमससाङ्कर्यमिति ब्रूमः । तत्र हेतुः– अर्थस्य श्रुतिसंयोगादिति । अर्थस्य ग्रहशब्दाभिधेयस्य ग्रहस्य श्रुत्या सम्मार्गेण संयोगात् । अथवा अर्थस्य विधेयत्वेन प्रयोजनभूतस्य सम्मार्गस्य श्रुत्या ग्रहेण संयोगात् ।

यद्वा अर्थस्योद्देश्यस्यापूर्वसाधनत्वस्य श्रुत्युक्तग्रहसंयोगेनैव लक्ष्यत्वादित्यर्थः। सर्वथा ग्रहशब्देन सन्निकृष्टावान्तरापूर्वसाधनस्य ग्रहार्थस्यैवोपस्थापितत्वात् तस्यैव सम्मार्गः कर्तव्य इत्युक्तं भवति। ननु भोजनार्थस्थालसम्मार्गोपदेशवद्ग्रहसम्मार्गोपदेशः पात्रान्तरसम्मार्गस्याप्युपलक्षणार्थः। कस्मान्न स्यादिति शङ्कोत्तरत्वेन तस्य शब्दप्रमाणत्वादिति सूत्रावयवो व्याख्येयः। तस्य ग्रहसम्मार्गोपदेशस्य शब्दैकप्रमाणत्वान्न स्थालसम्मार्गोपदेशतुल्यत्वम्। स्थालसम्मार्गोपदेशो हि लौकिकत्वेनार्थप्रमाणकत्वात् प्रदर्शनार्थोऽपि स्यान्न त्वयम्। तस्माद्यथाशब्दमेवासौ व्यवतिष्ठेतेति॥

अत्र चमसाधिकरणे द्वे सूत्रे॥

अथ नवमं सप्तदशारत्न्यधिकरणम्। तत्र 'सप्तदशारत्निर्वाजपेयस्य यूपो भवती'ति वाक्यमुदाहृत्य किमिदं सप्तदशारत्नित्वं वाजपेयस्य षोडशिपात्रे निविशते किं वा तदङ्गपशुयूप इति सन्दिह्य प्रकरणानुग्रहाव्यवहितसम्बन्धयोः सम्भवात् सप्तदशारत्निर्वाजपेयस्येति सम्बन्धमङ्गीकृत्य तस्य स्वतस्तदसम्भवाद्यूपशब्देन षष्ठीश्रुत्या सामान्यतः प्राप्तसम्बन्धिविशेषवचनत्वेनानुवादीभवता खादिरत्वोर्ध्वत्वसामान्येन षोडशिपात्रं लक्षयित्वा तत्र निवेशः सप्तदशारत्निकाया अङ्गीकर्तव्य इति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रम् —

## आनर्थक्यात्तदङ्गेषु (३-१-१८)

इति।

द्विपदम्। तस्यार्थः—अत्र प्रकरणानुग्रहाव्यवहितसम्बन्धापेक्षणे वाजपेयशब्दस्य वाजपेये यूपाभावेन यूपशब्देनानन्वयाद्यूपशब्दोऽनर्थक एव स्यात्।

षोडशिपात्रलक्षणा च तेन सामानाधिकरण्यानन्यथासम्भवयोरभावाद्-नुपपन्ना । तथा सप्तदशारत्नित्वमपि न साक्षाद्यूपद्वारा सम्बन्धिद्वारेण वा वाजपेयस्य सम्भवति । स्वतोऽनर्हत्वाद्यूपाभावात्सम्बन्ध्यनुपादानाच्च । अत एवंरूपाद्यूपसप्तदशारत्निशब्दयोरानर्थक्यात्तदङ्गेषु वाजपेयाङ्गभूतेषु सप्तदशसु पशुषु सप्तदशारत्नित्वं यूपद्वारेण निविशत इत्यङ्गीकुर्मः । यूपशब्देनोर्ध्वपात्रलक्षणातो व्यवहितसम्बन्धः साधीयान् । प्रकरणमपि पशूनां तदङ्गत्वान्न बाधितं भविष्यतीति ॥

अत्र सप्तदशारत्न्यधिकरण एकं सूत्रम् ॥

अथ दशममभिक्रामाधिकरणम् । तत्र 'अभिक्रामं जुहोती'ति प्रयाजत्वसन्निध्याम्नातमभिक्रमणं किं प्रयाजमात्राङ्गं जुहोतीत्यस्य प्रकृतप्रयाजग्राहित्वात्, उत कृत्स्नदर्शपूर्णमासाङ्गमिति सन्दिह्य पश्चिमपक्षं पूर्वपक्षयितुमाद्यं सूत्रं —

## कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् (३-१-१९)

इति ।

पञ्चपदम् । तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्तसूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । कर्तृगुणे कर्तुरध्वर्योरग्निपभिमुखीकृत्य पदविक्षेपलक्षणव्यापारात्मकत्वेन तच्छेषभूतेऽभिक्रमणे ब्रूमः-वाक्यभेदः स्यादिति । यथारुणाधिकरणपूर्वपक्षे गुणस्यामूर्तत्वेनाकर्मसाधनत्वाद्वाक्यभेदेनोपवर्णितः कृत्स्नप्रकरणनिवेशः, एवम(न्य?)त्राप्यभिक्राममिति भित्त्वा वाक्यं कृत्स्न एव प्रकरणे निवेशोऽभिक्रमणस्य वक्तव्य इत्यर्थः । कुत इत्याह—कर्मासमवायादिति । कर्मणोऽभिक्रमणस्य

कर्मणि होमे साधनत्वेन सम्बन्धानुपपत्तेः । न ह्यभिक्रमणेन होमं कुर्या-दित्येवममूर्तस्याभिक्रमणस्य 'व्रीहिभिर्यजेते'ति मूर्तानां व्रीहीणामिव क्रिया-साधनत्वं संभवति । तस्मात्कर्तृद्वारेण कृत्स्ने प्रकरणे निवेशः ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण (३-१-२०)**

इति ।

सप्तपदम् । तुशब्दः पूर्वपक्षं व्यावर्तयति— साकाङ्क्षमेतदभिक्राममिति पदमुत्तरेण जुहोतीत्यनेन पदेन सहैकवाक्यं स्यान्न वाक्यभेदेन पृथग्भूतम् । तथा च सति तदभिहितैः प्रयाजैरेवाभिक्रमणस्य सम्बन्धसिद्धिः । साकाङ्क्षत्वे हेतुमाह— असमाप्तं हि पूर्वेण इति । हिर्हेतौ । यस्मात् पूर्वेणाभिक्राममित्येतत्पदमात्रेणा समाप्तमत्र वाक्यं गम्यते । न हि तदुत्तरासम्बद्धं कस्यचिदर्थस्य प्रतिपादनाय पर्याप्तं भवति । तस्मादर्थ-समाप्त्यर्थमेकवाक्यत्वावश्यम्भावादमूर्तस्यापि कर्मणः कर्तृद्वारेण कर्म-सम्बन्धाविघातात्, सन्निधिबलाच्च कृत्स्नेभ्यः कर्मभ्यः प्रयाजमात्रेण सम्बन्धस्य योग्यत्वात् तत्कर्त्रा सम्बन्धोऽध्यवसातव्यः । तस्मात् प्रया-जाङ्गमेवाभिक्रमणमिति ॥

अन्यथा वेदमधिकरणं व्याख्यायते— नैवात्राभिक्राममित्येतत्पदमा-त्रविच्छेदेन पूर्वपक्षः क्रियते, किं तु अवान्तरप्रकरणं प्रयाजानामनङ्गीकृत्य महाप्रकरणगतसमस्तजुहोत्यनुवादेनाभिक्रमणविधानात् । तदायं सूत्रार्थः— कर्तृगुणेऽभिक्रमणे प्रयाजकर्मणोऽवान्तरप्रकरणाभावेनानन्वयाद्वाक्यभेदः प्रयाजवाक्याभिक्रमणवाक्यैकवाक्यत्वाभावरूपः स्यादिति । उत्तरसूत्रेण

चावान्तरप्रकरणसद्भावादभिक्रमणस्य प्रयाजाङ्गभावः सिद्धान्त्यते । तत्राकाङ्क्षाग्रहणं सन्निधेरप्युपलक्षणार्थम् । तदयमर्थः— साकाङ्क्षमाकाङ्क्षा-लक्षणेनार्थात्सन्निधिलक्षणेन चावान्तरप्रकरणेन सहितं प्रयाजवाक्यं तेनाभिक्रमणेन प्रमाणेनाभिक्रमणवाक्येन सहैकवाक्यं स्यात्, न तु कृत्स्नानि वाक्यानि महाप्रकरणेन । एतदुक्तं भवति— यस्मात्प्रयाज-वाक्यमत्र प्रकारानुक्तेः कथं होतव्यमित्येवं साकाङ्क्षं, तस्मात्तदभिक्रम्य होतव्यमित्येवं प्रकारवाचिनाभिक्रमणवाक्येन सहैकवाक्यभूतं स्यात्, न कृत्स्नानि प्राकरणिकानि वाक्यानि । कुतः ? महाप्रकरणादवान्तरप्र-करणस्य प्राबल्यात् । नन्ववान्तरप्रकरणस्यानतिवृत्तौ सत्यामेतद्वक्तव्यं तत्त्वतिवृत्तमेव प्रयाजस्वरूपतज्जौहवचतुर्गृहीतादिगुणविधिना । अत आह— 'असमाप्तं हि पूर्वेण' इति । हिरवधारणे । अवान्तर-प्रकरणं पूर्वेण प्रयाजस्वरूपतद्गुणविधिमात्रेणासमाप्तमेवात्र गम्यते । तच्चाभिक्रमणात् परस्तादपि प्रयाजशेषाभिघारणाख्यप्रयाजगुणान्त-रविधिदर्शनादनुमीयते । तस्मादवान्तरप्रकरणात् प्रयाजाङ्गमेवाभि-क्रमणमिति ॥

अत्राभिक्रमणाधिकरणे द्वे सूत्रे ॥

अथैकादशमुपवीताधिकरणम् । तत्र दर्शपूर्णमासप्रकरणपठितम् । 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति वाक्यमुदाहृत्य, किमेतद्वा-क्यविहितमुपवीतमवान्तरप्रकरणेन सामिधेन्यङ्गमुत महाप्रकरणेन दर्श-पूर्णमासाङ्गमिति सन्दिह्य पूर्वाधिकरणन्यायेनावान्तरस्य सामिधेनी-प्रकरणस्याङ्गीकरणात्सामिधेन्यङ्गमिति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रं —

**सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् (३-१-२१)**

इति ।

पञ्चपदम्। तुशब्दः पूर्वपक्षं व्यावर्तयति। सामिधेनीधर्मत्वसर्वधर्मत्वाभ्यां सन्दिग्धेऽस्मिन्नुपवीते ब्रूमः सर्वधर्मः स्यादिति। कारणमाह—व्यवायादिति। सामिधेनीनां निवित्पदैर्व्यवधानात्। ततश्चावान्तरप्रकरणस्य विच्छिन्नत्वात् कृत्स्नस्य दर्शपूर्णमासकर्मणोऽङ्गमुपवीतं भवतीति॥

अत्रोपवीताधिकरण एकं सूत्रम्॥

अथ द्वादशं यज्ञावचराधिकरणम्। तत्र 'वैकङ्कतो यज्ञावचरः स्याद्वारणो यज्ञावचरः स्यादि'ति विहितयोर्होमाहोमार्थयोर्यज्ञावचरशब्दाभिहितयोर्यज्ञप्रचारार्थयोः वारणवैकङ्कतयोः पात्रयोः किमाधानप्रकरणमुल्लङ्घ्य सर्वकामार्थता स्यादुत तदनुल्लङ्घ्यानर्थक्यात्तदङ्गेष्वितिन्यायेन पवमानहविरर्थतेति सन्दिह्य पवमानहविरर्थतामुक्तप्रकारेण पूर्वपक्षयित्वा सर्वकर्मार्थतां सिद्धान्तयितुं सूत्रं—

**गुणानां च परार्थत्वादसम्बधः**
**समत्वात् स्यात् (३-१-२२)**

इति

षट्पदम्। तस्य चशब्दार्थवत्त्वायैवं व्याख्या कर्तव्या। यथा परार्थत्वात्कृत्स्नदर्शपूर्णमासार्थत्वादुपवीतस्य सामिधेनीमात्रेणासम्बन्धः पूर्वमुक्तः। एवं परार्थत्वात् परस्याग्नेः संस्कारार्थत्वाद्गुणानां तद्गुणभूतानामाधानपवमानहविषामपि समत्वात्परस्परमसम्बन्धोऽङ्गाङ्गित्वलक्षणसम्बन्धाभावः स्यादिति। अथवा 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम' इति वाक्या-लोचनया यज्ञशब्दस्य प्रधानयागवाचित्वावसायादाधानगुणभूतानामपि पवमानेष्टीनां

परार्थत्वेनाग्न्यर्थत्वेनायज्ञतयाधानसमत्वाद्यज्ञसंयोगेन श्रुतैः पात्रैरसम्बन्धः स्या''दिति न्यायसुधाकारानुसारेण व्याख्या कर्तव्या । ननु कथमाधानवत् पवमानहविषामप्यग्न्यर्थत्वम्, आधानप्रकरणपाठात्त्वाधानार्थत्वमेव तेषां युक्तम् । उच्यते- यथाधानमग्न्युद्देशेन विहितमग्निसंस्कारार्थं तथा पवमानहवींष्यपि 'यदाहवनीये जुह्व'तीत्याहवनीयोद्देशेन होमविधानादाधानप्रकरणगतत्वाच्च तद्वाक्यस्य सन्निहितपवमानहविर्होमपरित्यागकारणाभावादग्निसंस्कारार्थानि विज्ञायन्ते । ततश्च समानानामाधानपवमानहविषामसति मिथोऽङ्गाङ्गित्वे प्रकरणस्य तत्र पात्रविनियोजकत्वाभावाद्यज्ञावचरवाक्येन दर्शपूर्णमासादिसर्वयज्ञेषु तद्विनियोगो लभ्यत इति भाष्यकारमतेनैतत्सूत्रव्याख्या कृता । वार्तिककारमते तु नैतदधिकरणान्तरार्थं सूत्रं, किंतु पूर्वस्यैवाधिकरणस्य पदोत्तरतया शेषभूतम् ॥

ननु न व्यवधानं स्यात् सामिधेन्यङ्गतां गतैः ।
निवित्पदैरिति पदान्येतेभ्यः सूत्रमुत्तरम् ॥

निविदः सामिधेन्यश्च यस्मादग्निसमिन्धनम् ।
प्रकाशयन्ति तस्मात्ता उभय्योऽग्नेर्गुणा मताः ॥

एवं गुणानां तासां स्यान्न सम्बन्धः समत्वतः ।
अतश्च सामिधेनीनां निविद्भिर्व्यवधानतः ॥

अवान्तरप्रकरणाविच्छेदात्सर्वधर्मता ।
उपवीतस्य युक्तोक्ता महाप्रकरणादिति ॥

अत्र यज्ञावचराधिकरण एकं सूत्रम् ॥

अथ त्रयोदशं वार्त्रघ्नीवृधन्वत्यधिकरणम्। तत्र दर्शपूर्णमासप्रकरणपठितं 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्याया'मिति वाक्यद्वयमुदाहृत्य किमेतद्वाक्यविहितस्यानुवाक्यायुगलस्याज्यभागाभ्यां सम्बन्ध उत प्रधानाभ्यां दर्शपूर्णमासाभ्यामिति सन्दिह्य, पौर्णमास्यमावास्यासमभिव्याहारात् तच्छब्दवाच्याभ्यां प्रधानाभ्यामिति पूर्वपक्षं कृत्वा, आज्यभागाभ्यामिति सिद्धान्तं वक्तुं सूत्रं —

**मिथश्चानर्थसम्बन्धः*** (३-१-२३)

इति।

त्रिपदम्। तत्र साध्यानुक्तेः पूर्वसूत्रस्थयोर्गुणासम्बन्धपदयोरनुषङ्गेण साध्याकाङ्क्षापूरणार्थश्चशब्दः। अनुवाक्यालक्षणानां गुणानां प्रधानाभ्यामसम्बन्धः स्यादित्यर्थः। तत्र हेतुर्मिथोऽनर्थसम्बन्ध इति। अनर्थसम्बन्धादिति पञ्चम्यन्त एव वा पाठः। यस्मात् प्रधानानां षण्णामप्येकत्वान्मिथो द्वाभ्यामनुवाक्याभ्यामनर्थोऽप्रयोजनः सम्बन्धः, आज्यभागयोश्च द्वित्वात् सप्रयोजनः, तस्मादित्यर्थः। अथवा यस्मात् पुरोनुवाक्यानां मिथोऽन्योन्यसहितानां प्रधानैः सहार्थेन देवताप्रकाशनाख्येन कार्येण हेतुना सम्बन्धाभावः सोमस्य प्रधानदेवतायाः पर्वद्वयेऽप्यभावात् पुरोनुवाक्यामन्वाहेत्येकत्वसंख्याया विवक्षितत्वाच्च गम्यते तस्मादित्यर्थः। अत एतत् सिद्धं भवति– आज्यभागयोरग्नीषोमयोर्देवतयोस्तद्दैवत्ययोश्चानुवाक्ययोर्वाक्यान्तरविहितयोर्विद्यमानत्वाच्चदुद्देशेन वार्त्रघ्नतावृधन्वत्तामात्रविधेः क्रमप्रमाणतः सुशकत्वात् स एवात्र प्रयोजनवानङ्गीकर्तव्यः। पौर्णमास्यमावास्याशब्दौ च कालवचनौ द्रष्टव्याविति।

अत्र वार्त्रघ्नीवृधन्वत्यधिकरणेऽप्येकं सूत्रम्॥

* 'न्धात्' इत्येव भाष्यादिषु पाठः।

अथ चतुर्दशं मुष्टीकरणाधिकरणम् । तत्र ज्योतिष्टोमप्रकरणपठितं 'मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयती'ति वाक्यत्रयं, 'हस्तावनेनिक्ते उलपराजिं स्तृणाती'ति वाक्यद्वयं चोदाहृत्य किं मुष्टीकरणवाग्यमनयोः क्रमेण प्रमाणेनानन्तरविहितावेदनार्थत्वं हस्तावनेजनस्य चानन्तरविहितोलपराजिस्तरणार्थत्वमभिमतमुत त्रयाणामपि कृत्स्ने प्रकरणे निवेश इति सन्दिह्याद्यपक्षं—पूर्वपक्षं—पूर्वपक्षयित्वान्त्यपक्षं सिद्धान्तयितुमाद्यं सूत्रम् —

## आनन्तर्यमचोदना (३-१-२४)

इति ।

द्विपदम् । तस्यार्थः— अत्र मुष्टीकरणवाग्यमनयोरावेदनार्थत्वे हस्तावनेजनस्योलपराजिस्तरणार्थत्वे च यत् क्रमलक्षणमानन्तर्यं प्रमाणत्वेनाभिमतं पूर्वपक्षे तत् तत्राचोदना अङ्गाङ्गिभावस्यानाक्षेपकमप्रमाणमित्यर्थः । प्रमाणमत्र प्रमेयं चोदयत्याक्षिपतीति चोदनाशब्देनोच्यते । हेतवस्तु सूत्रानुक्ता अपि बहुषु पठितव्येषु केनचित् कस्यचिदानन्तर्यस्यावर्जनीयत्वम्, अनुष्ठानक्रमार्थत्वेन सन्निधिविशेषाम्नानार्थवत्त्वोपपत्तेरुभयाकाङ्क्षारूपावान्तरप्रकरणकल्पकत्वायोगः, श्रुतिवत् क्रमस्य साक्षाद्विनियोजकत्वाभावश्च, उत्तरसूत्रस्थचशब्दार्थवत्त्वाय द्रष्टव्याः ॥

अथ द्वितीयं सिद्धान्ताभ्युच्चयसूत्रं —

## वाक्यानां च समाप्तत्वात् (३-१-२५)

इति ।

त्रिपदम् । इतश्चानन्तर्यमप्रमाणं, यत एतानि सर्वाणि वाक्यानि पृथक् पृथक् समाप्तार्थानि दृश्यन्ते । तच्चार्थैकत्वविभज्यमानसाकाङ्क्ष-

त्वयोरभावेनैकवाक्यत्वासम्भवात् स्वध्यवसेयम् । तस्मान्नान्योन्यार्थ-तैषां कल्पयितुं शक्या इति कृत्स्ने प्रकरणे निवेशो मुष्टीकरणवाग्यमन-हस्तावनेजनानामङ्गीकर्तव्य इति ॥

अत्र मुष्टीकरणाधिकरणे द्वे सूत्रे ॥

अथ पञ्चदशं चतुर्धाकरणाधिकरणम् । तच्चमसाधिकरणोक्त-यथासंयोगधर्मव्यवस्थाप्रसङ्गागतेषु विचारेषु समाप्तेषु स किं संयोग एकदेशेनापि भवत्युत समस्तेनैवेति विचारार्थत्वाद् 'यत्प्रसक्त्या यो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवती'ति बुद्धिसन्निहितेन चमसा-धिकरणेन सङ्गच्छते । तत्र दर्शपूर्णमासप्रकरणपठितम् 'आग्नेयं चतुर्धा करोती'ति वाक्यमुदाहृत्य किमिदं चतुर्धाकरणमाग्नेयशब्देन द्विदेवत्य-योरपि ग्रहणात् सर्वार्थमुत तदग्रहणात् केवलाग्नेयार्थमिति सन्दिह्य सर्वार्थत्वं पूर्वपक्षयितुमाद्यं सूत्रं —

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् (३-१-२६)

इति ।

अष्टपदम् । तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । अयं चतुर्धाकरणरूपः शेषोऽग्निना गुणेन संयुक्तः श्रूयमाणोऽग्नेरुपलक्षणार्थत्वादग्नीषोमीयैन्द्राग्न-योरपि साधारणः प्रतीयेत न केवलाग्नेयार्थः । कुत इत्याह— मिथस्तेषामसम्बन्धादिति । अत्र पूर्वसूत्रादचोदनेत्यनुषज्यते । अर्थस्तु न तत्रोक्तः किंतु प्रसिद्ध एव । स्यादिति चास्यान्ते द्रष्टव्यम् । मिथस्तेषा-मसम्बन्धादचोदना स्यादिति । तेषामाग्नेयाग्नीषोमीयैन्द्राग्नानां मिथः पर-

स्परमसम्बन्धात्– असम्बन्धे सतीत्यर्थः, चतुर्धाकरणस्याग्नीषोमीयैन्द्राग्नयोरचोदना स्यान्न सम्बन्धे सति । अस्ति च तेषामग्निमत्त्वेन सम्बन्धः । तस्मात् त्रिष्वपि साधारणं चतुर्धाकरणमिति व्यवधारणकल्पनया भाष्यकारेणायं सूत्रावयवो व्याख्यातः । वार्तिककारस्तु विनैवानुषङ्गव्यवधारणकल्पनाभ्यामिमं सूत्रावयवं तच्छब्देन शेषशब्दोक्तस्य चतुर्धाकरणात्मकस्य कार्यस्य गुणशब्दोक्तस्य चान्यात्मकस्योपलक्षणस्य परामर्शं बहुवचनस्य चानेकोदाहरणस्थोपलक्षणकार्यबहुत्वाशयत्वमभिप्रेत्योपलक्षणकार्याणामग्न्यादिचतुर्धाकरणादीनां मिथः सम्बन्धाभावात् साधारणत्वमिति च व्याचकार ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन**
**सम्बन्धाल्लक्षणार्था गुणश्रुतिः (३-१-२७)**

इति ।

अष्टपदम् । वाशब्दः साधारण्यं व्यावर्तयति । व्यवस्थैव चतुर्धाकरणस्य प्रतीयेत । आग्नेयेन पुनर्द्विदेवत्ययोः साधारण्यम् । कुत इत्याह— अर्थसंयोगादिति । यस्मादर्थेनाग्निदेवत्यत्वरूपेण तद्धितार्थेनैकदेवत्यस्यैव संयोगो न द्विदेवत्ययोः, तस्मादित्यर्थः । अस्त्वेवं तथापि तस्योपलक्षणमात्रार्थत्वान्नात्यन्तादरः कर्तव्य इति चेदत आह— लिङ्गस्यार्थेन सम्बन्धादिति । लिङ्गशब्दोऽत्र गमकत्वसामान्यादुपलक्षणमाह— लिङ्गस्योपलक्षणस्याप्यग्निदेवत्यत्वस्य तद्धितवाच्यत्वादर्थेन सामर्थ्येन नैरपेक्ष्यलक्षणेन हेतुनोपलक्ष्यसम्बन्धस्येष्टत्वात् । सचात्रैकदेवत्यस्यैवास्ति न द्विदेवत्ययोः । तयोः सोमेन्द्रसापेक्षस्याग्नेर्देवतात्वेन केवलादग्निशब्दात्

तद्धितोत्पत्तौ सामर्थ्यविघातात् । तस्मान्नोपलक्षणत्वेनास्यानादरो युक्त इति। ननु यथाग्नेयस्य मस्तकं विरुज्य प्राशित्रमवद्यतीति हविर्मात्रात् प्राशित्रावदानं क्रियते तथैतत् कस्मान्न स्यादत आह– लक्षणार्था गुणश्रुतिरिति। प्राशित्रावदाने प्राशित्रमवद्यतीति सामान्यवाक्येन सर्वस्माद्धविषस्तदवदाने प्राप्ते कस्मात् प्रदेशात् कस्येत्यपेक्षायामाग्नेयस्य मस्तकादवदातव्यमन्ययोस्तु न देशविशेषनियमोऽस्तीत्येवं मस्तकाख्यप्रदेशविशेषलक्षणार्थाग्नेयत्वलक्षणस्य गुणस्य श्रुतिः इति चतुर्धाकरणात् प्राशित्रावदानस्य वैषम्योक्त्यर्थत्वेनायं सूत्रावयवो व्याख्येयः । अथवा यथा मनोतायामग्निशब्दः सोमस्याप्युपलक्षणमङ्गीक्रियते तथा चतुर्धाकरणे सोमेन्द्रयोरुपलक्षणत्वेनायं कस्मान्नाश्रीयत इति शङ्कोत्तरत्वेनैतद्व्याख्या कर्तव्या । तदा चायमर्थः– इयमग्निगुणश्रुतिर्मनोतायामिवान्यलक्षणार्था गत्यन्तराभावादाश्रयिष्यत यदि केवलाग्निदेवत्यः कश्चिन्नाभविष्यत् अस्ति तु सः, तस्मात्तस्यैव चतुर्धाकरणमिति ॥

प्रायः श्रुतिविनियोगः
शेषाणामत्र वर्णितः पादे ।
चिन्तान्तरं यदन्यत्
तत्सर्वं तत्प्रसङ्गतो ज्ञेयम् ॥

अत्र चतुर्धाकरणाधिकरणे द्वे सूत्रे ॥

इति महोपाध्यायश्रीमदृषिपुत्रश्रीपरमेश्वरविरचिते
सूत्रार्थसङ्ग्रहे तृतीयस्याध्यायस्य
प्रथमः पादः ।

अथ तृतीयस्याध्यायस्य द्वितीये पादे

## प्रथममर्थाभिधानाधिकरणम् ।

निरूप्यते चात्र पादे लिङ्गस्य विनियोकृता ।
लिङ्गं च नाम मन्त्राणामर्थप्रत्यायनं प्रति ॥

सामर्थ्यं, तच्च मुख्येऽर्थे गौणे चाप्यस्ति कुत्रचित् ।
तत्र किं मुख्य एवार्थे मन्त्राणां विनियोज्यता ॥

लिङ्गेन, यद्वा गौणेऽपि सास्त्येवेत्यत्र चिन्त्यते ।
शब्दाभिधेयो मुख्योऽर्थो गौणस्त्वर्थाद्गतः स्मृतः ॥

तत्र कृत्वा पूर्वपक्षमुभयोर्मुख्यगौणयोः ।
विनियोगो मुख्य एवेत्ययं सिद्धान्त उच्यते ॥

तदर्थं चेदं सूत्रम् —

**अर्थाभिधानसंयोगान्मन्त्रेषु* शेषभावः स्यात्तस्मादुत्पत्तिसंयोगोऽर्थेन नित्यसंयोगात् (३-२-१)**

इति ।

अष्टपदम् । तत्र तस्मादिति श्रुतेर्यस्मादित्यध्याहार्यम् । यस्मादर्थस्याभिधानेनाभिधानवृत्त्या संयोगान्मन्त्रेषु यागं प्रति शेषभावो मन्त्रा-

* 'सामर्थ्यान्मन्त्रेषु' इति भाष्यादिपाठः.

धिकरणसिद्धान्तात् स्यान्न गौणवृत्त्या संयोगात् , तस्मादुत्पत्तिसंयोग एतेषां स्यात् । उत्पत्तिशब्द औत्पत्तिकं लक्षयति—औत्पत्तिकेन नित्येन वृद्धव्यवहारसिद्धेन मुख्येनैवार्थेन संयोगः स्यान्न गौणादिकेनार्थेनेत्यर्थः । अथवा धातुलीनोपसर्गार्थन्यायानुसारेणोत्पत्तिशब्द एव व्युत्पत्तिशब्दस्यार्थं वदति, मध्यमपदलोपी न समासो द्रष्टव्यः । व्युत्पत्तिसिद्धेन मुख्येनार्थेन संयोग इति । तत्र हेतुः—अर्थेन नित्यसंयोगादिति । तेनैव हि मुख्येनार्थेन नित्यः संयोगो भवति शब्दानां, न गौणाद्यर्थेन । गौणाद्यर्थसंयोगो हि शब्दान्तरसमभिव्याहारान्यथानुपपत्त्याग्निर्माणवक इत्यादौ प्रयोगेऽभ्युपगम्यते । अतो न तेन संयोगस्तेषां नित्यः स्यात् । तस्माद् 'बर्हिर्देवसदनं दामी'त्ययं मन्त्रो मुख्ये दर्भलवन एव विनियोक्तव्यः, न तत्सदृशतृणान्तरलवन इति ॥

अथ द्वितीयं शङ्कोत्तरं सूत्रं —

## *संस्काराद्वाचोदिते न स्यात् (३-२-२)

इति ।

पञ्चपदम् । इयं च शङ्का—ननु गौणविनियोगे सति गौण्या वृत्त्या लवनमन्त्रे बर्हिःशब्देन दर्भवत् तत्सदृशतृणान्तरस्यापि प्रत्यायनाद् दर्भच्छेदवत् तृणान्तरच्छेदेऽपि मन्त्रप्रयोगान्महाविषयत्वं नाम गुणो मन्त्रस्य स्यादित्येतत्तावत् कैमुतिकन्यायसिद्धत्वान्नोच्यते । अपरस्तु—गौण्या वृत्त्या पूषादिशब्दैरग्न्याद्यभिधानात् पूषाद्यनुमन्त्रणमन्त्राणां दर्शपूर्णमासप्रकरणादनुत्कर्षो भवतीति महान् गुणो लभ्यते । तस्माद् गौणविनियोगोऽपि मन्त्राणामङ्गीकर्तव्य इति । सा वाशब्देन निवर्त्यते ।

---

* संस्कारकत्वादिति भाष्यपाठः

संस्कारत्वादचोदिते न स्यादिति । वाशब्दरहितचतुष्पदपाठे त्वार्थिकी शङ्कानिवृत्तिः । तत्र यत्तावदुक्तम्— गौणे मुख्येऽपि मन्त्रस्य विनियोगेऽङ्गीक्रियमाणे महाविषयत्वं नाम गुणो भवतीति । तदुभयत्र मन्त्रस्यावृत्तिप्रसङ्गेन दोषत्वादयुक्तमेव। यत्तु पूषाद्यनुमन्त्रणमन्त्राणां प्रकरणादनुत्कर्षो भवतीति गुणान्तरमुक्तं, तदनेन परिह्रियते । अचोदिते सति देवतात्वेन पूषादौ तदनुमन्त्रणमन्त्रो दर्शपूर्णमासमन्त्रः स्यात्, गौण्या वृत्त्याग्न्यादौ न विनियुज्येत । किंतु तत उत्कृष्य यत्र पूषादयो विहितास्तत्र लिङ्गेन प्रकरणं बाधित्वा नीयेत । तत्र हेतुः—संस्कारत्वादिति । पाठान्तरे तु भावप्रधानो निर्देशः यतो देवतास्मरणार्थत्वान्मन्त्रोच्चारणस्य देवतासंस्कारार्थत्वं मन्त्राधिकरणे साधितम् । न चान्यदेवताशब्देनान्यस्या देवतायाः स्मरणरूपः संस्कारः संभवति, अतिप्रसङ्गात् । अतो गौणविनियोगस्यानाश्रयणीयत्वात् मुख्य एवार्थे मन्त्रविनियोगो न्याय्य इति ॥

अत्रार्थाभिधानाधिकरणे द्वे सूत्रे ॥

अथ द्वितीयमैन्द्र्यधिकरणम् ।

पूर्वाधिकरणस्यैतदपवादतया स्थितम् ।
ऐन्द्र्यर्चाग्नेरुपस्थानं यस्मादत्र प्रसाध्यते ॥

तत्र 'निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति वाक्यमुदाहृत्य किमनयर्चा मुख्य इन्द्र उपस्थातव्य उत गौणो गार्हपत्य इति सन्दिह्य पूर्वाधिकरणन्यायेनैन्द्रस्य मन्त्रस्यापि प्रकाशनसामर्थ्याभावादिन्द्र एव प्रकाशयितव्यः । ततश्च मन्त्रसामर्थ्यानुसारेण विनियोगवाक्यार्थो वर्णयितव्यः । स च गृहपतेरयमित्यव-

यथार्थानुसारेण वा यज्ञसामर्थ्यसामान्येन गुणवृत्त्या वा तदभिधानाद्भविष्यति । अथवा गार्हपत्यशब्दोऽग्निवचन एवास्तु । सप्तम्यर्थस्तु द्वितीयया लक्षयिष्यते गार्हपत्ये गार्हपत्यसमीपे स्थित्वोपतिष्ठेतेन्द्रमिति । ततश्च मुख्य एवार्थे विनियोगोऽत्रापीति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुमाद्यं सूत्रं —

वचनात् त्वयथार्थमैन्द्री स्यात् (३-२-३)

इति ।

पञ्चपदम् । तुशब्दो मुख्यविनियोगं व्यावर्तयति । अयथार्थमिति क्रियाविशेषणम् । इयमैन्द्ययथार्थं, मुख्यार्थातिक्रमेण गौणार्थप्रकाशनार्थं स्यादित्यर्थः । कुत इत्याह— वचनादिति । वचनं हि भवति 'ऐन्द्या गार्हपत्यमुपतिष्ठत' इति । अत्रैन्द्रीगार्हपत्यगताभ्यां तृतीयाद्वितीयाविभक्तिभ्यामैन्द्या ऋचो गार्हपत्योपस्थानार्थत्वं विज्ञायते । यत्तु—द्वितीयया सप्तम्यर्थलक्षणमुक्तं, यच्च गार्हपत्यशब्दस्यावयवार्थद्वारा यज्ञसाधनत्वसामान्येनेन्द्रवचनत्वमुक्तं, तदुभयमप्यवयवार्थलक्षणाभ्यां रूढ्यर्थश्रुत्योः प्राबल्यात् परिहृतं वेदितव्यमिति ॥

अथ द्वितीयं शङ्कोत्तरं सूत्रं —

गुणाद्वाप्यभिधानं स्यात्सम्बन्धस्या-
शास्त्रहेतुत्वात् (३-२-४)

इति ।

सप्तपदम् । इयं च शङ्का—ननु वचनेनेन्द्रशब्दः शक्यो गार्हपत्याभिधानसमर्थः कर्तुम् । नच शब्दार्थसम्बन्धस्य शास्त्रहेतुत्वं दृष्टमतः

कथं वचनादयथार्थमुच्यते मन्त्रस्येति । सा वाशब्देन वार्यते । गुणाद् यज्ञसाधनत्वसामान्यादिन्द्रत्यर्थानुसरणाद्वाग्नेरिन्द्रशब्देनाभिधानं स्यादेव । न चैतावता शब्दार्थसम्बन्धस्य शास्त्रहेतुत्वं भवति । यतोऽत्र गत्यन्तराभावादन्यथानुपपत्त्या गौणार्थाभिधानमाश्रीयते। गुणादप्यभिधानं स्यान्न केवलं वृद्धव्यवहारासिद्धाच्छब्दार्थसम्बन्धादित्यपिशब्दार्थः ॥

अग्नैन्द्र्यधिकरणे द्वे सूत्रे ॥

अथ तृतीयं तथाह्वानाधिकरणम् । तत्र दर्शपूर्णमासयोः श्रुतं 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती'ति वाक्यमुदाहृत्य, किमत्र वाक्येऽवघातमुद्दिश्य तदङ्गत्वेन मन्त्रो विधीयते हविष्कृदेहीति मन्त्रेणावघ्नन्निति । अथ मन्त्रस्याह्वानेन सम्बन्धमङ्गीकृत्य प्रकारान्तरप्राप्ताह्वाने कालमन्त्रानुवादेन त्रिरिति विधीयते, अवघ्नन्निति तु काललक्षणार्थम्, अवघातकाले हविष्कृदेहीति त्रिराह्वयतीति इति सन्दिह्य पूर्वाधिकरणन्यायेन विधौ लक्षणाया अन्याय्यत्वान्मन्त्रस्य च वचनादयथार्थत्वस्य न्याय्यत्वादवघाताङ्गं मन्त्र इति पूर्वपक्षं वक्तुमाद्यं सूत्रं —

## तथाह्वानमपीति चेत् (३-२-५)

इति ।

पञ्चपदम् । अत्राह्वानमित्याह्वानप्रकाशनार्थो हविष्कृदेहीति मन्त्र उच्यते । तथाह्वानमपि हविष्कृदेहीति मन्त्रो भविष्यति । यथैन्द्री गौण्या वृत्त्या गार्हपत्यप्रकाशनार्थोक्ता एवमेषोऽपि मन्त्रः कयाचिद्गुणवृत्त्या हन्तिप्रकाशनार्थः स्यादित्यर्थः । इति चेदित्यस्यैवं चेत् पूर्वपक्षी मन्यत इत्यर्थः ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

## न कालविधिश्चोदितत्वात् (३-२-६)

इति ।

त्रिपदम् । तस्यार्थः- नैतदेवं, यद्धन्तिमन्त्रोऽयमिति, किं तर्हि कालविधिरेवायम् । आह्वानस्य विधिरिति चात्राभिधानमात्रमुच्यते । तच्च मुख्यस्यासम्भवाल्लक्षणारूपं विवक्षितम् । ततश्च यदावघ्नन् भवति, तदानेन मन्त्रेण त्रिराह्वानं कुर्यादित्याह्वानस्य काललक्षणामात्रमत्र त्रिरभ्यासविधिपरे वाक्ये क्रियत इत्युक्तं भवति । तत्र हेतुः— चोदितत्वादिति । अवघ्नन्ननेन मन्त्रेणाह्वयतीत्येवं सम्बन्धे क्रियमाणेऽर्थेनावघ्नतोऽध्वर्योः सहायसम्पत्त्यर्थस्य यजमानपत्न्याह्वानस्य रूपेण मन्त्रस्य च चोदितत्वात् प्राप्तत्वेनाविधेयत्वादित्यर्थः । कालोऽपि चाह्वानस्य योऽवहन्तेः स एव योग्यतया प्राप्तः । न हि तदर्थं सहायाह्वानं ततः प्रागूर्ध्वं वा घटते ॥

ततश्च त्रयमप्येतदनूद्य त्रित्वमेव तु ।
विधीयतेऽत्र सूत्रत्वात्सूत्रेऽनुक्तिर्न दोषभाक् ॥

अथ तृतीयं पदोत्तरं सूत्रं —

## गुणाभावात् (३-२-७)

इति ।

एकपदम् । ननु हन्तिरेव हविष्कृद् गुणयोगाद्भविष्यति । हन्तेरपि हि कथञ्चिदस्त्येव हविष्करणे कर्तृत्वम् । अतस्तस्य तच्छब्देन सम्बोधनमेहीत्याह्वानं च कस्मान्न स्यादिति पदानि । तत उत्तरमेतत् ।

सत्यपि हन्तेः कथञ्चिद्धविष्करणगुणयोगे न हविष्कृच्छब्देनामन्त्रण-माह्वानं च संभवति यजमानपत्नीवत्। कुतः, हविष्कर्त्र्या यजमान-पत्न्या यो गुणो धर्मः सम्बोध्याह्वाने सत्येषास्मीत्यागमनं तस्या-चेतनेऽवहन्तावभावादित्यर्थः। अथवा गुणशब्दः प्रयोजनमाह—अचेतनेऽवहन्तावामन्त्रणाह्वानयोः प्रयोजनाभावात्, अरण्यरुदितप्रा-यत्वापत्तेरित्यर्थः। पत्न्यां तु बुद्धिमत्त्वादर्थवदामन्त्रणमाह्वानं च। सा ह्यामन्त्रणविभक्तिप्रैषमध्यमपुरुषाणामर्थं ज्ञात्वागच्छतीति सैव हविष्कृद्युक्तेति ॥

अथ चतुर्थमस्यैव पक्षस्याभ्युच्चयसूत्रं—

## लिङ्गात् (३-२-८)

इति।

एकपदम्। तस्यार्थः— 'वाग्वै हविष्कृद्वाचमेव तदाह्वयती'ति स्त्रीलिङ्गेन वाक्छब्देन संस्तवः स्त्रियां यजमानपत्न्यां सम्भवति नाव्यक्तलिङ्गेऽवहन्तौ। तस्मादपि यजमानपत्न्याह्वानाङ्गमेवायं मन्त्रो नावहननाङ्गमिति ॥

अथ पञ्चममपि तादृशं सूत्रं—

## विधिकोपश्चोपदेशे स्यात् (३-२-९)

इति।

चतुष्पदम्। इतश्च यजमानपत्न्याह्वानाङ्गमिति चशब्दार्थः। कुत इत्याह—यतो विधिकोप उपदेशे स्यादिति। कोपशब्दो विरोध-माह। अवघातमन्त्रोपदेशे ह्यत्र वाक्ये क्रियमाणे 'अपहतं रक्ष इत्यवहन्ती'ति

मन्त्रान्तरविधिविरोधो जायेत । आह्वाने त्वयमेव मन्त्रो विहितो नान्यः कश्चिदस्ति । तस्मादाह्वानाङ्गमेवायं मन्त्र इति ॥

अत्र तथाह्वानाधिकरणे पञ्च सूत्राणि ॥

अथ चतुर्थं तथोत्थानाधिकरणम् । तत्र 'उत्तिष्ठन्नाहाग्नीदग्नीन् विहरेती'ति, 'व्रतं कृणुतेति वाचं विसृजति' इति च वाक्यद्वयमुदाहरणम् । तत् किमुत्थानवाग्विसर्गौ प्रति मन्त्रविधानार्थमुतोभयत्रापि कालार्थः संयोग इति सन्देहे पूर्वपक्षं पूर्वपक्षयित्वोत्तरपक्षमुत्तरपक्षयितुं सूत्रं —

## तथोत्थानविसर्जने (३-२-१०)

इति ।

द्विपदम् । तस्यार्थः— यथावहन्तिः काललक्षणार्थ उक्तः एवमुत्थानविसर्जने अपि द्रष्टव्ये । उत्थानकालेऽग्नीदग्नीन् विहरे'ति, प्रैषमाह 'व्रतं कृणुतेति', वचनकाले 'वाचं विसृजती'ति । ततश्चोभयत्रापि काललक्षणार्थः संयोग इति । अथवाधिकरणातिदेशोऽयं, न सिद्धान्तमात्रातिदेशः । यः पूर्वाधिकरणे पूर्वपक्षोऽङ्गाङ्गित्वविधिरिति स इह पूर्वपक्षः । यः सिद्धान्तः कालार्थः संयोग इति स इह सिद्धान्तः । पूर्वत्रानुवादे कालार्थत्वमुक्तमुदानीं विधाविति विशेष इति ॥

अत्र तथोत्थानाधिकरण एकं सूत्रम् ॥

अथ पञ्चमं सूक्तवाकाधिकरणम् । तत्र दर्शपूर्णमासप्रकरणपठितं 'सूक्तवाकेन प्रस्तरं प्रहरती'ति वाक्यमुदाहृत्य किं सूक्तवाकप्रस्तरप्रहरणयोः कालार्थोऽत्र संयोग उताङ्गाङ्गिभावार्थ इति सन्दिह्य कालार्थ इति पूर्वपक्षं वक्तुमाद्यं सूत्रं —

सूक्तवाके च कालविधिः परार्थत्वात् (३-२-११)

इति ।

चतुष्पदम् । तस्यार्थः— सूक्तवाके चाह्वानोत्थानविसर्जनेष्विव कालविधिः काललक्षणार्थता युक्ता, न प्रस्तरप्रहरणेन सहाङ्गाङ्गिभावार्थता । कुत इत्याह— परार्थत्वादिति । सूक्तवाकस्येष्टदेवताप्रकाशनार्थत्वात् प्रस्तरस्य स्रुग्धारणार्थत्वाच्चेत्यर्थः । ततश्च कृतार्थयोस्तयोः संयोगस्याङ्गाङ्गिभावार्थत्वासम्भवात् कालार्थत्वसिद्धिरिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

उपदेशो वा याज्याशब्दो हि
नाकस्मात् (३-२-१२)

इति ।

षट्पदम् । वाशब्दः पक्षं व्यावर्तयति । प्रस्तरप्रहरणं प्रति सूक्तवाकस्याङ्गत्वेनोपदेश एवायं स्यान्न कालविधिः । कारणमाह— याज्याशब्दो हि नाकस्मादिति । यतोऽकस्मादहेतुको याज्याशब्दो न भवति । यागाङ्गत्वं हि याज्याशब्दप्रवृत्तिनिमित्तम्, तदन्तरेण न भवतीत्यर्थः । याज्याशब्दश्चात्र श्रूयते । 'सूक्तवाक एव याज्या प्रस्तर आहुति'रिति । तस्मान्नात्र सूक्तवाकोच्चारणकाले प्रस्तरः प्रहर्तव्य इत्येवं काललक्षणार्थता अङ्गीकर्तव्येति ॥

अथ तृतीयमपि सिद्धान्तसूत्रं —

स देवतार्थस्तत्संयोगात् (३-२-१३)

इति ।

त्रिपदम् । तच्च ननु देवतासंकीर्तनमेव सूक्तवाकः शक्नोति कर्तुं न प्रहरणप्रकाशनं, तत् कथं तदङ्गभावस्तस्येत्यस्याः शङ्कायाः उत्तरत्वेन योज्यम् । सूक्तवाको न केवलमिष्टदेवताप्रकाशनार्थः, किंतु यक्ष्यमाणदेवताप्रकाशनार्थोऽपि । कुत इत्याह– तत्संयोगादिति । ताभिरेव देवताभिरस्य हरतेः संयोगात् । प्रहरणं ह्यत्र याजिरिष्यते । मान्त्रवर्णिकत्वाग्निदेवताविधिः । 'यदनेन हविषाशास्त' इति प्रस्तरस्येदंशब्दनिर्देशात् स एव हविष्ट्वं लभते । तस्मादङ्गाङ्गिभावः सूक्तवाकप्रहरणयोरिति ॥

अथ चतुर्थं प्रश्नोत्तररूपं सूत्रं —

***प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात् (३-२-१४)**

इति ।

षट्पदम् । तत्रेति चेदित्यन्तस्य प्रश्नांशस्यायमर्थः । अङ्गोपदेश इति चेत्पश्यसि तन्न । प्रतिपत्तिरेव हरतिरिति ब्रूमः । स्रुग्धारणव्यापृतस्य हि प्रस्तरस्य कृतार्थत्वेन प्रहरणं प्रतिपत्तिरेव न भवति । ततश्चाप्रधानकर्मणस्तस्य सूक्तवाकस्तद्गता देवता वा नाङ्गं स्यादिति कथमङ्गोपदेशोक्तिरिति । अथावशिष्टस्योत्तरांशस्यार्थः—अयं हरतिरुभयसंस्कारः स्याद्यागप्रतिपत्त्यात्मकोभयरूपसंस्कारः स्यात् रूपान्तरोपेतः संस्कारः स्यादित्युक्तं भवति, स्विष्टकृद्वत् । स हि प्रतिपत्तिर्यागश्च भवतीति यागत्वेन रूपान्तरेणोपेत इष्टः । अथवा याग एव

---

* 'प्रतिपत्तिरिति चेत्' 'स्विष्टकृद्वदुभयसंस्कारः स्यात्' इति भाष्ये सूत्रद्वयम् ।

सन् हरतिः स्विष्टकृदिवोभयस्य द्रव्यदेवतस्य संस्कारः स्यादित्यर्थः। स्विष्टकृत्यपि 'अयाडग्निरग्ने'रित्यादीष्टदेवताप्रकाशनात्मा देवतासंस्कारः समस्ति। द्रव्यसंस्कारश्च स्विष्टकृदग्न्युद्देशेन शेषस्य होतव्यत्वाद्विद्यते। अतस्तद्दृष्टान्तेन सूक्तवाकप्रस्तरप्रहरणयोरङ्गाङ्गित्वोपदेशासम्भवोपालम्भः सुपरिहर इति। एवमैकसूत्र्यं भाष्यकारोऽङ्गीचकार। वार्त्तिककारस्तु द्वे सूत्रे कल्पयामास। तत्र चेदित्यन्तमेकं सूत्रमवशिष्टमुत्तरमिति॥

अत्र सूक्तवाकाधिकरणे चत्वारि पञ्च वा सूत्राणि॥

अथ षष्ठं कृत्स्नोपदेशाधिकरणम्।

तत्र प्रहरणस्याङ्गं सूक्तवाक इति स्थिते।
किं कृत्स्नः सूक्तवाकः स्यादुभयोरपि पर्वणोः॥

उतेष्टदेवताद्वारा विभज्यैव प्रयोज्यता।
इत्यस्मिन् संशये पूर्वपक्षसूत्रमिदं स्मृतम्॥

## कृत्स्नोपदेशादुभयत्र सर्ववचनम् (३-२-१५)

इति।

त्रिपदम्। तस्यार्थः- उभयत्र दर्शे पूर्णमासे च सर्वस्य सूक्तवाकस्य वचनं कर्तव्यं न निष्कृष्टस्यार्थात्। कुत इत्याह- कृत्स्नोपदेशादिति। 'सूक्तवाकेन प्रस्तरं प्रहरती'ति कृत्स्नस्य सूक्तवाकस्य प्रहरणाङ्गत्वेनोपदेशात्। अथवाध्येतृभिः कृत्स्नस्य मन्त्रस्य सूक्तवाकत्वेनोपदेशाद्व्यपदेशादित्यर्थः। ततश्च यदि निष्कृष्य प्रयुज्येत न सूक्तवाकेन प्रह्रियेत कृत्स्नस्य सूक्तवाकत्वात्। तस्मादेकैकत्र सकलः प्रयोक्तव्य इति॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**यथार्थं वा शेषभूतसंस्कारात् (३-२-१६)**

इति ।

त्रिपदम् । वाशब्दः सर्ववचनं व्यावर्तयति । यथार्थमर्थानुसारेण वचनं स्यादिति सम्बध्यते । पौर्णमास्यां पौर्णमासीदेवतावाचिनः शब्दाः प्रयोक्तव्याः अमावास्याममावासीदेवतावाचिनः शब्दा इत्यर्थः । कारणमाह—शेषभूतसंस्कारादिति । कर्मशेषभूतदेवतासंस्कारस्य सूक्तवाकमन्तरेण क्रियमाणत्वात् । इष्टदेवताप्रकशनार्थत्वेनेष्टत्वात् सूक्तवाकमन्त्रस्येत्यर्थः । तस्मादुभयत्र तत्तदिष्टदेवतावाचिशब्दोपेतसूक्तवाकवचनादिशब्दात्मकोऽपकृष्य प्रयोगः कर्तव्य इति ॥

अथ तृतीयं कृत्स्नोपदेशादिति पूर्वपक्षहेतोरनुभाषणसूत्रं —

**वचनादिति चेत् (३-२-१७)**

इति ।

त्रिपदम् । सूक्तवाकशब्देन कृत्स्नोपदेशात् कृत्स्नस्य सूक्तवाकस्य वचनादुभयत्र सर्ववचनमिति यदुक्तं, तत्परिहर्तव्यमित्यर्थः ॥

अथ चतुर्थं परिहारसूत्रं —

**प्रकरणाविभागादुभे प्रति शब्दः* (३-२-१८)**

इति ।

चतुष्पदम् । तस्यार्थः— उभे पौर्णमास्यमावास्ये प्रति कृत्स्नेऽस्मिन्मन्त्रे सूक्तवाकशब्दः प्रवर्तते । उभयोरपि पौर्णमास्यमावास्ययोः सकलः

* 'कृत्स्नशब्दः' इति भाष्यादिषु पाठः.

सूक्तवाकः साधनं नैकदेश इत्युक्तं भवति। कारणमाह-प्रकरणाविभागादिति। प्रकरणस्योभे प्रत्यविभक्तत्वादित्यर्थः। ननु यथार्थमपकृष्य प्रयोगं साधयितुं प्रक्रान्तवान् सिद्धान्ती कथमुभे प्रति कृत्स्नस्याङ्गत्वमाह— तथो सति तत्र तत्र सकलः प्रयोक्तव्यः स्यात्। अतः कथं निष्कृष्टप्रयोगनिर्वाहः। उच्यते- नायं रूढिशब्दः सूक्तवाक इति, किंतु यौगिक एव। ततश्च यथा सूक्तं सुभाषितं भवति तथा वक्तीत्यवयवव्युत्पत्त्यनुसारेण इष्टदेवतावाचिमन्त्रवचनत्वावसायाद्यस्मिन् कर्मणि यावत्यो देवता इष्टास्तत्र तावद्देवताशब्दप्रयोगमात्रात् साकल्यं सूक्तवाकस्य स्यात्। अनिष्टदेवताशब्दप्रयोगे तु दुरुक्तवाकत्वं प्रसज्येत। इष्टदेवताशब्दोपेतसूक्तवाकप्रयोगे निष्कृष्य प्रयोगः कृत्स्नप्रयोगश्च निर्व्यूढः स्यादिति॥

अत्र कृत्स्नोपदेशाधिकरणे चत्वारि सूत्राणि॥

अथ सप्तमं लिङ्गक्रमसमाख्याधिकरणम्। तत्र 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयुः' इत्यादीन्यैन्द्रा(ग्न्याग्ना)दीनि काम्यकर्माणि 'इन्द्राग्नी रोचना दिवः' 'प्रचर्षणिभ्यः' इत्यादीनीन्द्राग्न्यादीनि देवतालिङ्गानि काम्यसमाख्यावन्ति याज्यानुवाक्यायुगळानि तत्तुल्यक्रमाम्नातानि चोदाहृत्य किमेतानि याज्यानुवाक्यायुगळानि क्रमसमाख्ये उल्लङ्घ्य लिङ्गात्तद्देवत्येषु सर्वेषु कर्मसु निवेक्ष्यन्ते, आहोस्वित् क्रमसमाख्यानुसारेण तेष्वेव काम्येषु कर्मस्विति सन्दिह्य पूर्वपक्षं पूर्वपक्षं कृत्वोत्तरपक्षमुत्तरपक्षं कर्तुं सूत्रं —

**लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् (३-२-१९)**

इति।

त्रिपदम् । लिङ्गक्रमात् समाख्यानादिति व्यस्तपाठे चतुष्पदम् । तस्यार्थः– लिङ्गक्रमात् लिङ्गसहितात् क्रमात् समाख्यानाच्च काम्ययुक्तं काम्यकर्ममात्रान्वितमेतद्याज्यानुवाक्यायुगळसमाम्नानं गम्येत, न तु लिङ्गबलीयस्त्वेन सर्वार्थम् । प्रमाणान्तरापेक्षस्य लिङ्गस्य सामान्य सम्बन्धाभावेनाविनियोजकत्वात् । न च क्रमसमाख्याव्यतिरिक्तमत्र प्रमाणमस्ति । तदपेक्षणे च काम्यकर्ममात्रविनियोग एव सिध्येन्मन्त्राणाम् । तयोस्तन्मात्रगतत्वेन तत्परतन्त्रस्य लिङ्गस्यान्यत्र विनियोजकत्वासम्भवात् । इदं च लिङ्गस्य सामान्यसम्बन्धापेक्षत्वमङ्गाङ्गिनोः स्वरूपमात्रात् परस्परैकाज्याभावे द्रष्टव्यम् । तत्सद्भावे तु केवलस्यैव लिङ्गस्य विनियोजकत्वमस्त्येवेति ॥

अत्र लिङ्गक्रमसमाख्यानाधिकरण एकं सूत्रम् ॥

अथाष्टममाग्नेय्यधिकरणम् । तत्र लिङ्गस्य सामान्यसम्बन्धमपेक्ष्य विनियोजकत्वे पूर्वाधिकरणोक्ते तत्प्रसङ्गाच्छ्रुतेरपि सति सम्भवे सामान्यसम्बन्धमन्यतः सिद्धमाश्रित्य विशेषमात्रपरत्वं सम्भवतीत्यनेनाधिकरणेन प्रतिपाद्यते । उदाहरणं तु ज्योतिष्टोमप्रकरणपठितानि 'आग्नेय्याग्नीध्रमुपतिष्ठते','ऐन्द्र्या सदो वैष्णव्या हविर्धान'मिति वाक्यानि । त्रेधा चात्र सन्देहः किं या आग्नेय्याद्याः प्रकरणपठिता 'अग्न आयाही'त्यादिकाः स्तोत्राद्यर्थत्वेन वाक्यान्तरविनियुक्ता ऋचस्ताभ्योऽन्या एव ग्राह्याः उपस्थानार्थं दाशतयीभ्य उद्धृत्य, उत ता वान्या वा आहोस्वित्ता एवेति । तत्रान्योपादानपक्षमविशेषपक्षं च पूर्वपक्षयितुमाद्यं सूत्रम् —

**अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् (३-२-२०)**

इति ।

पञ्चपदम् । तत्रान्योपादानपक्षेऽयमर्थः । येयमधिकारे प्रकरणे लिङ्गेन मन्त्रविधिः 'आग्नेय्याग्नीध्रमुपतिष्ठते' इत्यादिः सोऽतदाख्येषु गम्येत तत्र प्रकरण आख्या पाठो येषां ते तदाख्यास्ततोऽन्येऽतदाख्यास्तेषु मन्त्रेष्वित्यर्थः । कारणमाह—शिष्टत्वादिति । अतदाख्यानामप्याग्नेयीत्वाविशेषेण करणविभक्त्योपस्थानार्थत्वेन विनियुक्तत्वात् । अथवा अतदाख्यानां वाक्यान्तरेण कार्यान्तरे विनियुक्तत्वाद्विनियुक्तविनियोगस्य चान्याय्यत्वादित्यर्थः । अविशेषपक्षे त्वतदाख्यप्रापणार्थं सूत्रं द्रष्टव्यं नातदाख्यनिय(म?मार्थ)मर्थस्तूक्त एव । येनैव ह्याग्नेयीशब्दा विशेषणहेतुना ग्रहणमतदाख्यानामिष्टं तेनैव तदाख्यानामपि ग्रहणस्य सम्भवात् स्वतः प्राप्तत्वाच्च कण्ठतस्तदनुक्तिः सूत्रे न दोषाय । अथवा अधिकारे मन्त्रविधिरतदाख्येषु च प्रतीयेतेति चकारोत्कर्षात् कण्ठोक्तिरपि तदाख्यानां ग्रहणस्यास्त्येव । अनुत्कर्षे तु वाक्योपन्यासमात्रार्थत्वेन चकारोऽत्यन्तं नार्थवानासीत् । अथवा अप्यर्थत्वात्तत्राप्यर्थवा(न्ने?ने)व यद्यप्यधिकारेऽधिकृतमन्त्रग्रहणयोग्यत्वबुद्धिकृतिप्रकरणे मन्त्रविधिरयं, तथाप्यतदाख्येषु शिष्टत्वाद्भवतीति व्याख्याकरणात् ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

## तदाख्यो वा प्रकरणोपपत्तिभ्याम् (३-२-२१)

इति ।

त्रिपदम् । वाशब्दः पक्षद्वयं व्यावर्तयति । तदाख्य एवात्रोपस्थाने मन्त्रो ग्रहीतव्यः, नातदाख्यः, जातावेकवचनम् । कुत इत्याह— प्रकरणोपपत्तिभ्यामिति । प्रकरणादुपपत्तेश्च । तत्र प्रकरणात्तावत् प्रकृतग्रहणमेव युक्तं भवति । उपपत्तिरपि तद्ग्रहणानुगुणैव दृश्यते ।

यतः प्रकरणपठिताग्नेय्यनुवादेनोपस्थानार्थत्वमात्रविधानान्न सामान्यसिध्यन्तरापेक्षा लिङ्गस्य स्यात् । अतदाख्यविधौ तु सामान्यसम्बन्धाभावात् स्वयमेवोपस्थानं कुर्यात् तच्चाग्नेय्येति सम्बन्धद्वयविधानाद्वाक्यं भिद्येत । तस्मात्प्रकृतग्रहणमेव न्याय्यमिति ॥

* अथ तृतीयं शिष्टत्वादित्यत्राभिप्रेतोपदिष्टोपदेशदोषपरिहारार्थं सूत्रं —

सर्वेषां चोपदिष्टत्वात् (३-२-२२)

इति ।

त्रिपदम् । तस्यार्थः— सर्वेषामपि हि मन्त्राणामाश्विने वाचस्तोमे जपयज्ञस्वाध्यायादौ चोपदिष्टत्वान्नात्र प्रकृते कश्चिद्विशेषः उपदिष्टत्वस्य । अतस्तदाख्या एव ग्रहीतव्या इति ।

अत्र (आग्नेय्यधिकरणे) त्रीणि सूत्राणि ॥

अथ नवमं लिङ्गसमाख्याधिकरणम् । तत्र भक्षेहीत्यादिकं भक्षानुवाकमुदाहृत्य किं सर्वोऽप्ययं मन्त्रो भक्षणार्थं विनियुज्येत, उत ग्रहणावेक्षणसम्यग्जरणेष्वपि यथासामर्थ्यं विनियोक्तव्य इति सन्दिह्य सर्वभक्षार्थत्वं पूर्वपक्षयितुमाद्यं सूत्रं —

लिङ्गसमाख्याभ्यां
भक्षार्थतानुवाकस्य (३-२-२३)

इति ।

---

* इतः पूर्वम् "अनर्थकश्चोपदेशः स्यादसम्बन्धात् फलवता न ह्युपस्थानं फलवत्" इत्येकं सूत्रं भाष्यादौ दृश्यते । अत्रत्यसूत्रपा[illegible]मातृकासु न सूत्रमिदं न दृश्यते ।

त्रिपदम् । तस्यार्थः— भक्षार्थतात्र समस्तस्यानुवाकस्य युक्ता न ग्रहणाद्यवान्तरकार्यार्थतापि । कुत इत्याह— लिङ्गसमाख्याभ्यामिति । मन्त्रसामर्थ्यात् समाख्यातश्चेत्यर्थः । ननु लिङ्गमवेक्षणाद्यर्थतां साधयति न सर्वभक्षणार्थताम् । तथाहि— एहि वसो इत्यादि सध्यासमित्यन्तं ग्रहणं प्रकाशयितुं समर्थम् । तथान्नृचक्षसमित्याद्यवख्येषमित्यन्तमवेक्षणम् । एवं हिन्वम इत्यादिनाभिमातिगा इत्यन्तं सम्यग्जरणम् । तत्कथं लिङ्गेन सर्वभक्षार्थत्वसिद्धिः । उच्यते—नैतदत्र लिङ्गमभिमतं, किंतु भक्षणस्य विहितत्वात् भक्षयामीति च पदस्य भक्षप्रकाशनसामर्थ्यात् प्रागूर्ध्वं च वर्तमानानां विशेषणानामनन्यगतित्वेन तद्वदेव नान्तरीयकं तत्प्रकाशनसामर्थ्यं, ततश्च ग्रहणादीनामपि विहितभक्षविशेषणत्वेनैकप्रधानभक्षार्थानामेकवाक्यतया भक्षण एव विनियोगोऽनेन लिङ्गेन भवति । तथा भक्षानुवाक इति समाख्यापि सर्वस्यानुवाकस्य भक्षार्थतां बोधयति । तस्मादाभ्यां लिङ्गसमाख्याभ्यां सर्वभक्षार्थत्वसिद्धिरिति ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**तस्य रूपोपदेशाभ्यामपकर्षो ऽर्थस्य चोदितत्वात् (३-२-२४)**

इति ।

पञ्चपदम् । तस्यार्थः— तस्यानुवाकस्यापकर्षोऽर्थानुसारेण ग्रहणावेक्षणसम्यग्जरणविनियोगरूपो रूपोपदेशाभ्यां स्यात् । तत्र रूपं पूर्वोक्तमनुवाकावयवसामर्थ्यात्मकं लिङ्गमभिमतम् । उपदेशस्तु भक्षविधिरेव । स एव ग्रहणादीनामपि विधायकः । कथमित्याह—

अर्थस्य चोदितत्वादिति । भक्षविधिर्हि ग्रहणादीन्यपि चोदयित्वा भक्षमसमर्थश्चोदयितुमिति तान्यप्यर्थाच्चोदयति । ततश्च ग्रहणाद्यर्थस्य भक्षविधिवाक्येनैव चोदितत्वादित्यर्थः सम्पद्यते, तच्चोदनयैव तत्प्रकाशनार्थानां मन्त्रावयवानामपि तादर्थ्यचोदना तेनैव वाक्येनार्थादेव कृता भवति । सम्यग्जरणे तु विशेषोऽप्यस्ति । तद्धि भक्षणस्य द्रव्यक्षपणलक्षणप्रतिपत्तित्वाद्वमनविरेचनप्रायश्चित्तविधानाच्च प्रत्यक्षचोदितमेव भवति । अत एताभ्यां रूपोपदेशाभ्यां विभज्य विनियोगो भक्षानुवाकस्य कर्तव्य इति ॥

अत्र लिङ्गसमाख्याधिकरणे द्वे सूत्रे ॥

अथ दशमं गुणाभिधानाधिकरणम् । तत्र 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु वसुमद्गणस्य सोमदेव ते मतिविदः प्रातःसवनस्य गायत्रछन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामी'ति मन्त्रवाक्यमुदाहृत्य किं मन्द्रादिस्तृप्यत्वन्त एको मन्त्रः वसुमद्गणादिश्चापरः उत मन्त्रादिर्भक्षयाम्यन्त एक एव मन्त्र इति सन्दिह्यार्थप्राप्ततृप्तिप्रकाशनार्थत्वात् तृप्यत्वन्त एको मन्त्रः प्रत्यक्षविहितभक्षप्रकाशनार्थत्वाद् भक्षयाम्यन्तोऽपर इति पूर्वपक्षं कृत्वा द्वयोरैकमन्त्र्यं सिद्धान्तयितुं सूत्रं —

**गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्**
**तयोरेकार्थसंग्रहात् (३-२-२५)**

इति ।

पदपदम् । तस्यार्थः— अत्र तृप्यत्वन्तेन तृप्तेर्गुणाभिधानात् भक्षणं प्रति गुणत्वेनाभिधानात् प्रार्थनायां प्राप्तकालतायां वा लोटं

कल्पयित्वा भक्षणशेषत्वेन प्रतिपादनान्मन्द्रादिर्भक्षयाम्यन्तः सकल एको मन्त्रः प्रत्येतव्यः, न तु पूर्वपक्षोक्तप्रकारेण द्वौ । गुणाभिधानमेव कुत इत्याह— तयोरेकार्थसंयोगादिति । तयोस्तृप्तिभक्षणान्तयोर्मन्त्रावयवयोर्विशेषणविशेष्यभूततृप्तिभक्षणप्रकाशनात्मनैकेनार्थेन सम्बन्धात् । स च तृप्तेर्भक्षणानुनिष्पादित्वेन पृथगनुष्ठेयत्वाभावात् । ग्रहणादीनां तु पृथगनुष्ठेयत्वेन पृथगेव प्रकाश्यत्वात्तदर्थं मन्त्राणामपि पृथक्त्वमर्थापत्तेर्भवति । तृप्तौ तु भक्षणव्यतिरिक्तव्यापाराभावान्न पृथक्प्रकाशनापेक्षास्तीति विशेषादैकमन्त्र्यमभिमतमिति ॥

अत्र गुणाभिधानाधिकरण एकं सूत्रम् ॥

अथैकादशमिन्द्रपीताधिकरणम् । तत्रापि भक्षमन्त्र एवोदाहरणम् । तस्मिंश्च मन्त्रे इन्द्रपीतस्येत्यस्ति पदम् । ज्योतिष्टोमे च प्रदानान्यैन्द्राण्यनैन्द्राणि च विद्यन्ते । तत्र सन्देहस्त्रेधा भवति किमैन्द्रेष्वेवायं मन्त्रोऽनैन्द्राणां भक्षणममन्त्रकमेवेति प्रथमः । अथ तेष्वप्यूहेन मन्त्र इति द्वितीयः । उत यथाम्नातमेव सर्वत्र मन्त्र इति तृतीयः । तत्र प्रथमपक्षपरिग्रहार्थमाद्यं सूत्रं —

### लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम् (३-२-२६)

इति ।

चतुष्पदम् । तस्यार्थः— अनैन्द्राणां भक्षणस्यामन्त्रत्वं भवितुमर्हतीति ब्रूमः । कुत इत्याह— लिङ्गविशेषनिर्देशादिति । इन्द्रपीतस्येति नायं बहुव्रीहिः सवनविशेषणं च किं तु तत्पुरुषः सोमविशेषणं च

समासबलाबलविशेषाद्भवति । ततश्चेन्द्रेण पीतस्य सोमस्यैकदेशं भक्षयामीत्यर्थावगतेरिन्द्रपीतत्वात्मकस्य लिङ्गविशेषस्य निर्देशादनैन्द्राणां चातत्पीतत्वेन विलिङ्गत्वादन्यस्य च मन्त्रस्यानाम्नानादमन्त्रकमेव भक्षणं तेषां स्यात् । नन्वयमेव मन्त्रोऽनैन्द्राणामप्यूहेन प्रयुज्यतां कथममन्त्रत्वमत आह- समानविधानेष्विति । यतः समानविधानान्येतानि सर्वाणि सोमप्रदानानि न तु प्रकृतिविकृतिभावेन भिन्नविधानानि । अतः कथं प्रकृताविवोहेन मन्त्रप्राप्तिः । तस्मादस्मादिन्द्रपीतत्वलिङ्गनिर्देशादनैन्द्राणाममन्त्रत्वसिद्धिः ॥

अथ द्वितीयपक्षपरिग्रहार्थं द्वितीयं सूत्रं —

**यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति (३-२-२७)**

इति ।

पञ्चपदम् । वाशब्दोऽमन्त्रत्वं व्यावर्तयति । अनैन्द्रेष्वपि यथादेवतं तत्तद्देवतानुसारेण मन्त्रो भवति । तेष्वप्यूहेन मन्त्रः प्रयोक्तव्य इत्युक्तं भवति । कथं समानविधानत्वे सत्यूह इति चेदत आह- तत्प्रकृतित्वं हि दर्शयतीति । हिर्हेतौ । त ऐन्द्राः प्रकृतयो येषामनैन्द्राणां ते तत्प्रकृतयस्तद्भावस्तत्त्वं, यस्मादैन्द्रप्रकृतित्वमनैन्द्राणां श्रुतिर्दर्शयति तस्मादिति बहुव्रीहिः । अथवा तेषामैन्द्राणामनैन्द्रान् प्रति प्रकृतित्वं दर्शयतीति षष्ठीतत्पुरुष एवास्तु । एवं ह्यत्र श्रुतिः- 'अनुष्टुप्छन्दस' इति षोडशिनि भक्षमन्त्रं नमती'ति । अत्र हि सिद्धवन्नमतीत्यनूद्यानुष्टुप्छन्दस इत्यूहपर्यायनियमनविशेषविधानं दृश्यते । तच्च प्रकृतिविकृतिभाव एवोपपद्यत इति समानविधानत्वावगमादूहोपपत्तिः । तथा ग्रहण-

मन्त्रोऽप्येतद्दर्शयति । एवं हि स श्रूयते— 'इन्द्राय त्वा वसुमते गृह्णामी'ति। अनेन मन्त्रेण सर्वस्य सोमस्यैन्द्रप्रदानशेषत्वं गम्यते । ततश्च तद्धर्माणामपि तदर्थत्वं न्याय्यमित्यनैन्द्राणामसोमत्वादधर्मत्वाच्चातिदेशेन सोमस्य धर्माणां च तेषु प्राप्तिराश्रयणीया । ततश्च मन्त्रस्याप्यतिदेशप्राप्तस्योहेन प्रयोगो नानुपपन्न इति ॥

एवं द्वाभ्यां सूत्राभ्यां द्वौ पूर्वपक्षावुपन्यस्यापरिसमाप्त एवाधिकरणेऽन्तरोहविषयं चिन्तयितुं द्वादशं पुनरभ्युन्नीताधिकरणम् । तत्रेमावुदाहरणसंशयौ सवनमुखीयेष्वैन्द्रेषु चमसेषु ये होत्रकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेषु सशेषेष्वेव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्षाय नीयते तस्मिन् भक्ष्यमाणे किं पूर्वप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीय इन्द्रमित्रावरुणपीतस्येति किं वा नोपलक्षणीय इति । अयं च संशयो देवतान्तरसञ्चारेण पूर्वदेवतासम्बन्धोऽपनीतो नवेति संशयान्तराज्जायते ॥

तत्र सिद्धान्तेनोपक्रमः क्रियते तदर्थमिदमाद्यं सूत्रं —

**पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् (३-२-२८)**

इति ।

चतुष्पदम् । तस्यार्थः— पुनरभ्युन्नीतेष्वेतेषु चमसेषु भक्ष्यमाणेषु सर्वेषामिन्द्रस्य मित्रावरुणादीनां चोपलक्षणं कर्तव्यमिति ब्रूमः । कुत इत्याह— द्विशेषत्वादिति । प्रस्थितदेवताया इन्द्रस्यैतद्यागदेवतानां मित्रावरुणादीनां चोभयेषां शेषस्यास्मिंश्चमसे विद्यमानत्वादित्यर्थः ॥

अथ द्वितीयं पूर्वपक्षसूत्रं —

## अपनयाद्वा पूर्वस्यानुपलक्षणम् (३-२-२९)

इति ।

चतुष्पदम् । वाशब्दः सर्वोपलक्षणं व्यावर्तयति । पूर्वस्य प्रस्थितदेवताया इन्द्रस्योपलक्षणं न कर्तव्यम् । कुत इत्याह– अपनयादिति । यतः प्रदानकाले पात्रस्थात्तस्माच्छेषादाश्रावणप्रत्याश्रावणादिभिरन्यदेवतार्थं संकल्पितादपनीता पूर्वदेवता भवति, अतस्तच्छेषस्य तत्राभावात्तदुपलक्षणं केन हेतुना क्रियत इति ॥

अथ तृतीयं सिद्धान्तस्थापनासूत्रम् —

## अग्रहणाद्वानपनयः स्यात् (३-२-३०)

इति ।

चतुष्पदम् । वाशब्द इन्द्रानुपलक्षणं व्यावर्तयति । पूर्वस्या देवताया इन्द्रस्य तस्माच्छेषादन्यार्थाभिरप्याश्रावणादिक्रियाभिरनपनयः अपनयाभावः स्यात् । कुत इत्याह– अग्रहणादिति । पात्रस्थस्य पूर्वदेवतापीतशेषस्य देवतान्तरार्थत्वेन ग्रहणाभावात् । ततोऽन्यदेव हि तत्र द्रव्यं वचनात् सशेषेषु चमसेषु देवतान्तरार्थं गृह्यते न सोऽपि । स तु केवलं चमसोपलक्षणार्थमेवोपात्तः । तस्मात्सर्वेषामुपलक्षणमिति सिद्धमिति ॥

अत्र पुनरभ्युन्नीताधिकरणे त्रीणि सूत्राणि ॥

अथ त्रयोदशं पात्नीवताधिकरणम् । तच्च पूर्वापवादार्थं, तत्रोदाहरणसन्देहावुच्येते । द्विदेवत्यानामैन्द्रवायवादीनां शेषाः पूर्वमादित्यस्थाल्यां प्रक्षिप्तास्ततः पुनराग्रयणस्थाल्यां प्रक्षिप्यन्ते । पात्नीवतश्च ग्रह आग्रयणाद् गृह्यते । 'उपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाती'ति श्रुतेः । तस्मिन् पात्नीवते होमानन्तरं भक्ष्यमाणे किमिन्द्रवाय्वादयोऽप्युपलक्षणीया उत पत्नीवानेवाग्निरिति । तस्मिंश्च सन्देहे पूर्वपक्षं वक्तुमाद्यं सूत्रं —

## पात्नीवते तु पूर्ववत् (३-२-३१)

इति ।

त्रिपदम् । तुशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः । अप्यर्थ एव वास्तु पात्नीवतेऽपि पूर्ववदेवोपलक्षणं कर्तव्यमिति । यथा पुनरभ्युन्नीते सर्वेषामिन्द्रमित्रावरुणपीतस्येत्याद्युपलक्षणं कर्तव्यमित्युक्तम्, एवमत्रापीन्द्रवायुमित्रावरुणाश्विपत्नीवत्पीतस्येत्युपलक्षणं कर्तव्यमित्यर्थः ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

## ग्रहणाद्वापनीतः स्यात् (३-२-३२)

इति ।

चतुष्पदम् । वाशब्दः पूर्वपक्षं व्यावर्तयति । अपनीतः स्यादत्र पूर्वशेषः, न पुनरभ्युन्नीतवदपनीतः । अ(त्र) कारणमाह— ग्रहणादिति । आग्रयणप्राप्तानां द्विदेवत्यशेषाणां पत्नीवदर्थत्वेन ग्रहणात् । 'आग्रयणात् गृह्णाती'ति ह्याग्रयणस्यापादानत्वमात्रं श्रूयते । ततश्चाग्रयणादपेतत्वं

पत्नीवत्सम्बन्धकारणं, तच्च स्वत एवाग्रयणस्थवह्निदेवत्यशेषस्याप्यस्तीति सोऽपि पात्नीवत एव । तस्मात्पत्नीवत एवाग्नेरत्रोपलक्षणं कार्यमिति ॥

अत्र पात्नीवताधिकरणे द्वे सूत्रे ॥

अथ चतुर्दशं त्वष्ट्रधिकरणम् । तत्र तस्मिन्नेव पात्नीवते यो होममन्त्रः—'अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिबेति' किं तत्सामर्थ्यात् त्वष्टुरपि देवतात्वावगमात् सोऽप्युपलक्षणीय उत वचनाचोदितत्वेनादेवतात्वान्नोपलक्षणीय इति सन्दिह्य पूर्वपक्षं पूर्वपक्षं कर्तुमाद्यं सूत्रं —

## त्वष्टारं तूपलक्षयेत्पानात् (३-२-३३)

इति ।

चतुष्पदम् । तुशब्द उक्तार्थः, अथवा विशेषद्योतनार्थ एव । त्वष्टा तु नेन्द्रवाय्वादिवदनुपलक्षणीयः । किं तु प्रस्थितदेवतावत् त्वष्टारमुपलक्षयेदेवात्र भक्षकसङ्घः । कुत इत्याह— पानादिति । त्वष्टुरपि सोमपानस्य विद्यमानत्वात् । तच्च मन्त्रवर्णेनाग्नेः पत्नीवतस्त्वष्ट्रा सह पानस्य विहितत्वादिति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

## अतुल्यत्वात्तु नैवं स्यात् (३-२-३४)

इति ।

पञ्चपदम् । तुशब्देन सामान्येन पक्षं व्यावर्त्य तदेव पुनर्हेत्वभिधानार्थं विशेषेण प्रतिज्ञायते— नैवं स्यादिति । यदुक्तमुपलक्षणीयस्त्व-

ष्टेति तत्तथा न स्यादित्यर्थः । कुत इत्याह— अतुल्यत्वादिति । पत्नीवतस्त्वष्टुश्च पाने देवतात्वे च तुल्यत्वाभावात् । स च पत्नीवतोऽग्नेः सोमपाने त्वष्टुः साहित्यमात्रवचनात् तद्धितचोदनातो मान्त्रवर्णिकया-श्चोदनाया दुर्बलत्वाच्च द्रष्टव्यः । न च मन्त्रवर्णस्य देवतात्वं विना त्वष्टुरनुपपत्तिः सहभावमात्रप्रतिपादनेनाप्युक्तेनोपपत्तेः । न चोद्देशमात्रोपयोगिन्या देवतायाः पातृत्वमपि पारमार्थिकमस्ति, स्तुत्यर्थमात्रत्वेनोपन्यस्यमानत्वात्तु नानुपपत्तिः ॥

तस्मात्त्वष्टुर्देवतात्वं मन्त्रवर्णान्न गम्यते ।
ततश्च नोपलक्ष्यः स पत्नीवानिव भक्षणे ॥

अत्र त्वष्ट्रधिकरणे द्वे सूत्रे ॥

अथ पञ्चदशं त्रिंशदधिकरणम् । तत्र तस्मिन्नेव पात्नीवते यो याज्यामन्त्र 'ऐभिरग्ने सरथं याह्यर्वाङ्' इति, किं तत्सामर्थ्यात् त्रयस्त्रिंशदपि देवा उपलक्षणीया उत पत्नीवानेवेति संशये त्वष्टृवैलक्षण्यात् सर्वेऽप्युपलक्षणीयाः । त्वष्टुर्हि सहभावमात्रप्रतीतेरदेवतात्वमुक्तम् । अत्र त्वग्नेर्मादयितृत्वात् त्रयस्त्रिंशतश्च देवानां माद्यमानत्वात्सोमपानेन देवतात्वं प्रति न कश्चिद्भेदः । पात्नीवतचोदनापि पत्नीवन्मात्रस्य देवतात्वमाह । पत्नीवत्त्वं चाग्नेरिव 'अग्ने पत्नीवन्नि'ति मन्त्रवर्णात् त्रयस्त्रिंशतोऽपि 'पत्नीवतस्त्रिंशतमि'ति मन्त्रवर्णात्तुल्यमेवावगम्यते इति विशेषाशङ्कायामधिकरणातिदेशं कर्तुं सूत्रं —

त्रिंशच्च परार्थत्वात् (३-२-३५)

इति ।

त्रिपदम्। चशब्दः पूर्वसूत्रान्नैवमित्यनुषङ्गनार्थः। त्रिंशच्छब्दश्च त्रीनप्युपलक्षयति। त्रयस्त्रिंशच्च देवता नैवं स्युः त्वष्टृवन्नोपलक्षणीयाः स्युरित्यर्थः। कारणमाह- परार्थत्वादिति। त्वष्टृवत् पत्नीवतोऽग्नेः स्तुत्यर्थत्वेनोपन्यस्यमानत्वात् तेषामपीत्यर्थः। अथवा मन्त्रस्य पात्नीवतचोदनार्थस्मरणार्थत्वेन पराधीनत्वात्। ततश्च न स्वातन्त्र्येण त्रयस्त्रिंशद्विधानार्थत्वं सम्भवतीत्यर्थः। (यत्तु पत्नीव?) यत्तु पत्नीवान् देवतास्येति पत्नीवन्तो देवतास्येति च विगृहीतुं शक्यत्वात् पात्नीवतचोदनोभयत्र समानेत्युक्तं, तदयुक्तम्। कपिञ्जलत्रित्ववत् प्रथमप्राप्तस्यैकवचनान्तविग्रहस्यातिक्रमे कारणाभावात्। यत्तु- मदनक्रियाप्रयोज्यप्रयोजककर्तृभ्यां त्रयस्त्रिंशतोऽग्नेश्च देवतात्वं समानमिति, तन्न। प्रयोजककर्तुरग्नेरेव द्रव्यवत्त्वाद् देवतात्वमुचितम्। प्रयोज्यकर्तॄणां तु त्रयस्त्रिंशतस्तत्तद्द्रव्यभोक्तॄणां तेन च माद्यतां भृत्यादितुल्यत्वमेवेति ते नोपलक्षणीयाः॥

अत्र त्रिंशदधिकरण एकं सूत्रम्॥

अथ षोडशं वषट्काराधिकरणम्। तत्रानुवषट्कारदेवताग्निरुपलक्षणीया नेति सन्दिह्य 'सोमस्याग्ने वीहीत्यनुयजती'ति चोदनामन्त्रवर्णाभ्यामग्नेरसन्दिग्धदेवतात्वावगतेरुपलक्षणीयत्वं पूर्वपक्षयित्वानुपलक्षणीयत्वं सिद्धान्तयितुं सूत्रं—

## वषट्कारश्च कर्तृवत् (३-२-३६)

इति।

त्रिपदम्। वषट्कारशब्दोऽत्रानुवषट्कारग्राही भूत्वा तद्देवतां लक्षयति। अत्रापि चकारान्नैवमित्यनुषज्यते। तदयमर्थः- अनुवषट्-

कारदेवता च नोपलक्षणीया पातृत्वे सत्यपि प्रथमे देवताशेषपातृत्वात् कर्तृवत् यथा कर्ता होत्रादिः प्रथमपाता होतृपीतस्येत्येवमादिरूपेणानन्तरपातृभिरध्वर्य्वादिभिः कर्तृभिर्नोपलक्ष्यते तद्वदिति ।

अत्रानुवषट्काराधिकरणेऽप्येकं सूत्रम् ॥

एवमिन्द्रपीताधिकरणोत्तरपूर्वपक्षप्रसङ्गायातैः पञ्चभिरधिकरणैः प्रासङ्गिकमूहविचारं परिसमाप्य स्थितायथादेवतमूहपक्षादुत्तरत्वेन पूर्वमेव पूर्वपक्षमवस्थापयितुं सूत्रं —

**छन्दःप्रतिषेधस्तु**
**सर्वगामित्वात् (३-२-३७)**

इति ।

त्रिपदम् । इदं च 'यथादेवतं वा तत्प्रकृतित्वं हि दर्शयती'त्यत्रोहपूर्वपक्षेऽनुष्टुप्छन्दस इति भक्षमन्त्रं नमतीति यत् प्रदानानां प्रकृतिविकृतिभावे लिङ्गमुक्तं, यच्च ग्रहणमन्त्रवशेन सोमस्य धर्माणां च व्यवस्थोक्ता, तदुभयपरिहारार्थं द्रष्टव्यम् । तुशब्दस्तत्प्रकृतित्वदर्शनव्यावृत्त्यर्थः । चशब्दपाठे तु सोऽवधारणार्थः । तदयमर्थः— नात्र यथादेवतमूहः कर्तव्यः, किंतु अनैन्द्राणाममन्त्रकमेव भक्षणं स्यात् । यत्तु विनामविधानात्प्रकृतित्वं दर्शयतीति, तन्न, छन्दःप्रतिषेध एव सः, न विनामविधिः । जगती(ति?) छन्दस इति हि तृतीयसवनत्वात् षोडशिन्यपि मन्त्रः प्राप्नोति । न तु स तथा पठितव्यः । किंतु अनुष्टुप्छन्दस इति विपरिणम्य पठितव्य इति । एवं च जगतीछन्दःप्रतिषेध एवायमनुष्टुप्छन्दोविधिविशिष्टः प्रत्येतव्यः । विशिष्टविधानाच्च न वाक्यभेदः प्रसज्यते । एवमेकेन पदेनैकं लिङ्गं परि-

इत्यान्येन पदेनान्यल्लिङ्गं परिहर्तुमाह– सर्वगामित्वादिति । सोमेन यजेतेति कर्मोत्पत्तौ श्रुतस्य सोमस्य प्रत्यक्षया श्रुत्या ज्योतिष्टोमगतसर्वप्रदानगामित्वावगमान्न मानग्रहणमन्त्रवशेन केवलैन्द्रविषयता कल्पयितुं शक्यते । अनैन्द्राणाममन्त्रके एव मानग्रहणे भविष्यतः । ऐन्द्राणां तु समन्त्रके इति को विरोधः । तस्मात्समानविधानत्वेनोहाभावादमन्त्रकमेवानैन्द्राणां भक्षणमिति सिद्धमिति ॥

एवं प्रथमपूर्वपक्ष एवाधिकरणं स्थापयित्वा तत्प्रसङ्गेन कृत्वाचिन्तान्तरं कर्तुं सप्तदशमैन्द्राग्नाधिकरणम् । तत्र यस्मिन्नग्न्यादिसहित इन्द्रो देवतैन्द्राग्नादौ कर्मणि, तत्रायं मन्त्रोऽस्ति नेति सन्दिह्यास्तीति पूर्वपक्षं वक्तुमाद्यं सूत्रम् —

**ऐन्द्राग्ने तु लिङ्गभावात् स्यात् (३-२-३८)**

इति ।

चतुष्पदम् । तुशब्दो विशेषद्योतनार्थः । ऐन्द्राग्ने तु मन्त्रः स्यादेव भक्षणस्य, न त्वनैन्द्रवदमन्त्रकत्वम् । कुत इत्याह– लिङ्गभावादिति । इन्द्रपीतत्वलक्षणस्य लिङ्गस्य चिह्नस्य तत्रापि विद्यमानत्वादित्यर्थः । शक्यते चेन्द्राग्निभ्यां पीतस्यैन्द्राग्नस्यार्धमिन्द्रपीतमर्धमग्निपीतमिति व्यपदेष्टुम् । ततश्चैन्द्राग्नेऽपीन्द्रपीतस्येति विशेषणोपपत्तेः समन्त्रकमेव भक्षणं प्राप्नोतीति ॥

अथ द्वितीयं सिद्धान्तसूत्रम् —

**एकस्मिन् वा**
**देवतान्तराद्विभागवत् (३-२-३९)**

इति ।

चतुष्पदम् । वाशब्दः पक्षं व्यावर्तयति । एकशब्दः केवल-पर्यायः । यत्र शुद्ध एवेन्द्रो देवता नाग्न्यादिमिश्रः, तत्रैव मन्त्रो भवति नान्यत्रेत्यर्थः । कुत इत्याह– देवतान्तरादिति । भावप्रधानो निर्देशः । इन्द्रादिन्द्राग्न्योर्देवतान्तरत्वादित्यर्थः । यदा हीन्द्रमहेन्द्राधिकरणे गुणमात्राधिक्येऽपि इन्द्रान्महेन्द्रो देवतान्तरमिति साधितं तदा अन्यसहितस्य देवतान्तरत्वे किं वक्तव्यम् । यत्तु तत्रेन्द्रोऽर्धं पिबत्यर्धमग्निरित्युक्तं, तदयुक्तम् । न ह्यस्माकं देवता पिबतीति सिद्धान्तः सङ्कल्पविषयत्वेनैवोपयुज्यमानत्वाभ्युपगमात् । सङ्कल्पश्च मिश्रयोरिन्द्राग्न्योः क्रियते, न च मिश्रसङ्कल्पे सति इन्द्रपीतस्येत्यन्यतरव्यपदेशोऽवकल्पते । सापेक्षस्य हि तद्धितवत्समासोऽप्यनुपपन्न एव । तस्मादमन्त्रकमेवैन्द्राग्नैकभक्षणम् । अत्र दृष्टान्तमाह– विभागवदिति । यथा 'आग्नेयं चतुर्धा करोती'ति पुरोडाशविभागः केवलाग्निदेवत्यविषयः साधितः न त्वग्नीषोमीयादिमिश्रदेवत्यविषयः, तद्वदिति ॥

अत्रैन्द्राग्नाधिकरणे द्वे सूत्रे ॥

अथाष्टादशमपि तादृशं गायत्रच्छन्दोऽधिकरणम् । तत्र यत्तस्मिन्नेव भक्षमन्त्रे गायत्रच्छन्दस इति विशेषणं, किं तद्वशेन यत्र गायत्रमेव छन्दः, तत्रैव यागे मन्त्रवद्भक्षणमुत नानाच्छन्दस्केऽपीति सन्दिह्य पूर्वपक्षं वक्तुमाद्यं सूत्रं —

छन्दश्च देवतावत् (३-२-४०)

इति ।

त्रिपदम् । तस्यार्थः– छन्दश्छन्दोवाचिपदं च, देवतावद्देवतावाचिपदवत्स्यात् । यथेन्द्रपीतस्येति देवतावाचिपदमन्यसहितेन्द्रदेवत्ये

न सम्भवतीति तत्रामन्त्रकं भक्षणमिति स्थापितम्, एवं गायत्रच्छन्दस इति छन्दोवाचिपदमपि नानाच्छन्दस्के न सम्भवतीति तत्राप्यमन्त्रकमेव भक्षणं भविष्यतीति ॥

अथ द्वितीयं सिद्धान्तसूत्रं —

**सर्वेषु वाभावादेकच्छन्दसः (३-२-४१)**

इति ।

चतुष्पदम् । वाशब्दः पक्षं व्यावर्तयति । सर्वेष्वेव छन्दस्सु सत्सु गायत्रच्छन्दस इति विशेषणं स्यात् । कुत इत्याह– अभावादेकच्छन्दस इति । न हि केवलगायत्रच्छन्दाः कश्चित्सोमयागोऽस्ति, सर्वत्रानेकमन्त्रसमवायेन छन्दोन्तराणामनिवार्यत्वात् । तस्माद् 'रथन्तरसामा सोम' इतिवदन्यसाहित्येऽपि स्वसत्तामात्रेण गायत्रच्छन्दस इति विशेषणं सम्भवति । इन्द्रपीतपदमपि यदि केवलेन्द्रदेवत्यः कश्चित् सोमो नाभविष्यत् ततोऽन्यसहितेन्द्रदेवत्यान्न न्यवर्तिष्यत अस्ति तु स इति तत्रैव व्यवतिष्ठते । अत्र तु केवलगायत्रच्छन्दस्कयागाभावादनेकच्छन्दस्केऽपि अयोगव्यवच्छेदेन गायत्रच्छन्दस इति विशेषणोपपत्तेः समन्त्रकमेव भक्षणं युक्तमिति विशेषः ॥

अत्र गायत्रच्छन्दोधिकरणे द्वे सूत्रे ॥

एवं प्रथमपूर्वपक्षप्रसङ्गागतं कृत्वाचिन्ताद्वयं कृत्वा स्थितादेव तस्मादमन्त्रकभक्षपूर्वपक्षादुत्तरत्वेन समन्त्रकभक्षपक्षं सिद्धान्तयितुं (सूत्रं)—

**सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य**
**भक्तिपानत्वात् सवनाधिकारो हि (३-२-४२)**

इति ।

---

* 'वैकमन्त्र्य' इति भाष्ये.

सप्तपदम् । तुशब्दः पक्षद्वयं व्यावर्तयति । सर्वेषामैन्द्राणामनैन्द्राणां च सोमानामैकमन्त्र्यमेकेन यथाम्नातेन भक्षमन्त्रेण सहितत्वमैतिशायनस्याचार्यस्य मतेन प्रत्येतव्यं, न तु केषांचित् समन्त्रकं केषांचिदमन्त्रकमूहितमन्त्रकं वा भक्षणमिति । वैषम्यकल्पनं कुत इत्याह— सवनाधिकारो हीति । हिर्हेतौ । यस्मात् सवनाधिकारोऽयम्, इन्द्रपीतशब्दः सवनमधिकृत्य प्रवृत्तो बहुव्रीहित्वेन सवनविशेषणभूत इत्यर्थः, तस्मात् । ततश्चायमर्थो भवति । इन्द्रेण यस्मिन् सवने पीतः सोमस्तस्य सवनस्य सम्बन्धी यः सोमस्तस्य भक्षयामीति । ननु समासबलीयस्त्वात् तत्पुरुषोऽयं युक्तः अत आह– भक्तिपानत्वादिति । तत्पुरुषे हि सोमविशेषणत्वेनेन्द्रेण पीतो यः सोमस्तस्य भक्षयामीति कल्प्यमाने भक्तिपानत्वं सोमे प्रसज्येत । भक्त्यौपचारिक्या वृत्त्या यस्मिन् सोमे पानमिन्द्रस्य भवति स भक्तिपानः । भक्ष्यमाणस्यावयवस्य मुख्यया वृत्त्येन्द्रपीतत्वाभावादिन्द्रपीतावयवशेषत्वेनौपचारिकमेवेन्द्रपीतत्वं तस्य भवति । न च मुख्यसम्भवे सत्यौपचारिकपरिग्रहो न्यायः । सम्भवति चात्र सवनविशेषणत्वे मुख्यपरिग्रहः ॥

तदेवं सवनेनेन्द्रपीतसोमेन सङ्गतेः ।
सर्वेऽपि सोमा मन्त्रेण भक्षणीया इति स्थितम् ॥

ततश्चैतच्चतुःसूत्रं पक्षत्रयसमन्वितम् ।
इन्द्रपीताधिकरणं सप्ताधिकरणास्पदम् ॥

तत्रोहपूर्वपक्षस्य प्रसङ्गात्पञ्च पूर्वतः ।
अमन्त्रपूर्वपक्षस्य प्रसङ्गाद्वे च सप्त तत् ॥

ऐतिशायनपूजार्थमैतिशायनकीर्तनम् ।
न स्वपक्षनिवृत्त्यर्थमिति सर्वं समञ्जसम् ॥

इति श्रीमहर्षिपुत्रश्रीपरमेश्वरविरचिते
जैमिनीयसूत्रार्थसङ्ग्रहे तृतीयस्याध्यायस्य
द्वितीयः पादः

---

अथ तृतीयस्याध्यायस्य तृतीये पादे

## प्रथमं श्रुतेर्जाताधिकरणम् ।

---

विनियोगः श्रुतेर्लिङ्गाच्चोक्तः प्रथमपादयोः ।
पादे तृतीये वाक्येन विनियोगोऽत्र कथ्यते ॥

तत्र चात्राधिकरणे वाक्यस्य विनियोक्तृता ।
उपक्रमोपसंहारलक्षणस्य निरूप्यते ॥

तत्रैतदुदाहरणं — 'प्रजापतिरकामयत प्रजायेयेति स तपोऽतप्यत तस्मात् तेपानात् त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इति' इत्युपक्रम्यान्त उपसंहृतं । 'तस्मादुच्चैर्ऋचा क्रियते उपांशु यजुषोच्चैः साम्ने'ति । तत्र सन्देहः—किमेषामृगादिशब्दानामुपक्रमवशाद्वेदाधिकारत्वमुतोपसंहारवशाज्जाताधिकारत्वमिति । वेदाधिकारत्वे वेदधर्मा उच्चैष्ट्वादयः, जाताधिकारत्वे जातधर्माः । तत्र जाताधिकारत्वं पूर्वपक्षयितुमाद्यं सूत्रं —

**श्रुतेर्जाताधिकारः स्यात्** (३-३-१)

इति ।

त्रिपदम्। जातशब्दो भाष्यकारमते जातिवचनः, वार्तिककार-मते शब्दत्वव्यतिरेकेण वाक्यत्वजातिवदृक्त्वादिजातेरप्यभावात् तद्‌-गतसमूहवचनः। ऋगादिशब्दानामेषां जाताधिकार ऋगादिमन्त्रसमूह-मधिकृत्य प्रवृत्तत्वं स्यात् तद्वाचकत्वं स्यादित्यर्थः। ततश्च धर्मा-णामप्युच्चैष्ट्वादीनां तदधिकारत्वसिद्धिः। कारणमाह—श्रुतेरिति। मन्त्रजातविशेषप्रतीतिर्ऋगादिशब्दानां श्रौताद्व्यापाराद्भवति। वेदप्रती-तिस्तु लक्षणया। विध्युद्देशगतश्चर्गादिशब्दः अर्थवादगतो वेदशब्दः। विध्युद्देशश्च प्रधानम्। अतस्तत्र लक्षणाया अन्याय्यत्वादर्थवादस्थो वेदशब्दोऽवयवविशेषोऽङ्गीकर्तव्य इति जाताधिकारत्वमेव न्याय्य-मिति॥

अथ द्वितीयं सिद्धान्तसूत्रम्—

## वेदो वा प्रायदर्शनात् (३-३-२)

इति।

त्रिपदम्। वाशब्दः पक्षं व्यावर्तयति। वेद एव (मार्गा ? ऋगा) दिशब्दैरधिकृतः प्रत्येतव्य इति योग्यपदान्वयोऽत्र द्रष्टव्यः। न तु जाता-धिकारस्तेषाम्। कुत इत्याह— प्रायदर्शनादिति। नायं प्रायशब्दो 'विशये प्रायदर्शनादि'त्यादाविवान्यसाहचर्यवचनः, किं तु गुणो गत्य-र्थक्रमिसमानार्थत्वेनोपक्रमवाची द्रष्टव्यः। वेदप्राये वेदोपक्रमे प्रथम-प्रक्रान्तवेदबुद्धावनुवर्तमानायां, दर्शनाच्छ्रूयमाणत्वादृगादिशब्दानामि-त्यर्थः। यत्तु विध्युद्देशप्राधान्यादर्थवादस्थो वेदशब्दो जातलक्षणार्थः स्यादित्युक्तं, तदयुक्तम्। परस्तादर्थवादेषु विधिषु विध्युद्देशबली-यस्त्वं पुरस्तादर्थवादेष्वर्थवादबलीयस्त्वमिति स्थितेः॥

अथ तृतीयं सिद्धान्ताभ्युच्चयसूत्रं—

## लिङ्गदर्शनाच्च (३-३-३)

इति ।

द्विपदम् । लिङ्गाच्चेति क्वचित्पाठः । ऋगादिशब्दानां वेदवचनत्वख्यापकस्य लिङ्गस्य वेदे दर्शनात् कारणाच्च वेदोऽधिकृत एतैः शब्दैः स्यादित्यर्थः । एवं हि श्रूयते– "ऋग्भिः प्रातर्दिवि* देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः" इति । अत्र त्रिषु पादेषु द्वौ वेदावृक्शब्दं च संकीर्त्य चतुर्थपादे वेदैरिति बहुवचनेनोपसंहाराद्वेदवचनमृक्शब्दं दर्शयतीति ॥

अथ चतुर्थमपि तादृशं सूत्रं —

## धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः (३-३-४)

इति ।

षट्पदम् । 'उच्चैः साम्ने'ति साम्नो विशेषेण धर्मोपदेशाच्चर्गादिशब्दैर्वेदोऽधिक्रियत इत्यर्थः । अतो हेतोरेतत्साध्यासिद्धिमुपपादयति–न हि द्रव्येण सम्बन्ध इति । द्रव्यशब्दोऽयं सामवचनः । जाताधिकारे हि ऋच उच्चैष्ट्वोपदेशेन तदाश्रयस्य साम्नोऽप्युच्चैष्ट्वसिद्धेर्नोच्चैष्ट्वधर्मस्य पृथक् साम्ना द्रव्येण सम्बन्धो वक्तव्यः स्यात् । उच्यते च स वाक्यान्तरेण । तस्मात् सामवेदत्वाधिकारत्वासन्देहादस्य वाक्यस्य वाक्यान्तरयोरपि वेदान्तराधिकारत्वसिद्धिरिति ॥

---

* 'पूर्वाह्ने दिवि' इति. तै. ब्रा. (३-१२-९) पाठः. कुतूहलवृत्तावप्ययमेव पाठो दृश्यते.

अथ पञ्चममपि तादृशं सूत्रं —

## त्रयीविद्याख्या च तद्विदि (३-३-५)

इति ।

त्रिपदम् । इतश्चर्गादिशब्दैर्वेदोऽधिकरिष्यते यतस्त्रयीविद्याख्या त्रयीविद्योऽयमित्येवं लौकिकी समाख्या वेदत्रयविदि प्रयुज्यमाना दृश्यते न जातत्रयविदि । यस्य हि त्रयी त्रयो वेदा विद्या भवन्ति स त्रयीविद्य-शब्देनोच्यते । तस्मात् त्रयीविद्यशब्दे त्रयीशब्दस्य वेदत्रये प्रसिद्धत्वात् तत्समानाधिकरणा ऋगादिशब्दा अपि तद्विषया विज्ञायन्त इति ॥

अथ षष्ठं परिचोदनासूत्रं —

## *व्यतिक्रमेऽयथा§श्रुतीति चेत् (३-३-६)

इति ।

चतुष्पदम् । तस्यार्थः–इति चेत्पश्यसि वेदाधिकारत्वादृगादि-शब्दानामुच्चैष्ट्वादयो वेदधर्मा इति, तन्न । तदा ऋग्वेदव्यतिक्रमेण यजुर्वेद-स्थानामृचां वेदद्वयगामित्वेनोच्चैष्ट्वोपांशुत्वयोः कतरो धर्मः क्रियेतेत्य-निर्णयादन्याय्ये विकल्पआश्रीयमाणे पक्षे बाधादयथाश्रुत्युभयोरपि उच्चै-ष्ट्वोपांशुत्वविधात्र्योः श्रुत्योरननुसारेण प्रयोगः प्रसज्येत । जाताधिकारत्वे तु वेदव्यतिक्रमेऽप्यृचामुच्चैष्ट्वाव्यतिक्रमान्नायं दोषः स्यादिति ॥

अथ सप्तममेतत्परिहारसूत्रं —

## न सर्वस्मिन्निवेशात् (३-३-७)

इति ।

---

* षष्ठसप्तमयोरेकसूत्र्यं कुतूहलवृत्तौ दृश्यते ।

§ भाष्यादिषु 'यथाश्रुति' इति पाठः ।

त्रिपदम् । तस्यार्थः—नायमयथाश्रुतिप्रयोगोपालम्भोऽस्मत्पक्षे स्यात् । कुत इत्याह-सर्वस्मिन्निवेशादिति । यतः सर्वस्मिन्नृग्वेदे सर्वस्मिन् यजुर्वेदे च यथास्वं वेदधर्मस्य निवेशोऽत्राङ्गीक्रियते न व्यतिक्रान्त-वेदव्यतिरिक्तैकदेशे । ततश्चर्ग्वेदव्यतिक्रमेण यजुर्वेदस्थानामृचामनृग्वेद-त्वयजुर्वेदत्वाभ्यामुच्चैष्ट्वपरिहारेणोपांशुधर्मत्वनिश्चयान्न धर्मानिर्धारणनिमि-त्तविकल्पवशात् पक्षे बाधलक्षणोऽयथाश्रुतिप्रयोगः प्रसज्येत श्रुत्यनु-सारेणैव वेदद्वयपठितानामृचां तत्तद्वेदधर्मसंयोगक्लृप्तेरदुष्टत्वादिति ॥

अथाष्टमं पदोत्तरं सूत्रं—

## वेदसंयोगान्न प्रकरणेन बाध्येत (३-३-८)

इति ।

चतुष्पदम् । बाधेतेति वा पाठः । ननु जाताधिकारत्वे ज्योति-ष्टोमप्रकरणपठितेष्वेव जातेषूच्चैष्ट्वादेर्व्यवस्थापनात् प्रकरणानुग्रहो भवि-ष्यति । विकृतिषु च ततोऽतिदेशेन धर्मप्राप्तेस्तेषामिष्टत्वान्नाधर्मकत्व-प्रसिद्धिः । वेदाधिकारत्वे तु वेदस्य सर्वक्रतुगामित्वेन तदनुसारिणो वेदधर्मस्यापि तथात्वनिश्चयात् प्रकरणबाधः प्रसज्येतेति पदानि । तत एतदुत्तरं सूत्रम् । अस्याजितास्या व्याख्या लिख्यते—'वाक्येन वेदसंयो-गात् सार्वत्रिको भवन् धर्मो न प्रकरणेन कर्त्रा बाध्येत अन्यतो न व्याव-र्त्येतेति पूर्वस्मिन् पाठेऽर्थः । उत्तरत्र तु न प्रकरणेन कारणेनान्याङ्गतां धर्मो बाधेते'ति । एतदुक्तं भवति—वाक्यं हि प्रकरणस्य बाधकमिष्टम्, अतस्तद्विरोधेऽननुग्राह्यत्वात् प्रकरणस्य वाक्येनोच्चैष्ट्वादेर्वेदद्वारा सर्वक्रतु-गामित्वप्रसक्तिर्न दोषाय स्यादिति ।

तस्माद्वेदाधिकारत्वं न तु जाताधिकारता ।
वाक्येनर्गादिशब्दानां धर्माणां चेत्यवस्थितम् ॥

सूत्रक्रमोऽयं भाष्यस्थो वार्तिके त्वन्य इष्यते ।
पञ्चमस्य चतुर्थत्वाच्चतुर्थस्यान्त्यभावतः ॥

अत्र श्रुतेर्जाताधिकरणेऽष्टौ सूत्राणि ॥

अथ द्वितीयं गुणमुख्यव्यतिक्रमाधिकरणम् । तत्र यजुर्वेदविहितमाधानं, सामवेदविहितानि तदङ्गभूतानि सामानि चोदाहृत्य किमङ्गभूतानां साम्नां प्रधानाधानवेदवशेन याजुर्वैदिकस्वरत्वमुत स्ववेदवशेन सामवैदिकस्वरत्वमिति सन्दिह्य सत्यप्येषामाधानाङ्गत्वे सामवेदोत्पन्नत्वादुत्पत्तिनिबन्धन एव स्वरः पूर्वभावित्वाद्युक्तः न पश्चाद्भाविविनियोगनिबन्धन इति पूर्वपक्षं कृत्वा सिद्धान्तं वक्तुं सूत्रं—

## गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः (३-३-९)

इति ।

चतुष्पदम् । व्यतिक्रमो विरोधः । गुणमुख्यशब्दौ च भाष्यकारमते सामाधानयोरभिधायकौ वार्तिककारमते तूत्पत्तिनियोगविधी अभिधत्तः । तदयमर्थः–गुणमुख्यभूतयोः सामाधानयोः उत्पत्तिविनियोगविध्योर्वा विरोधे मुख्येनाधानेन विनियोगविधिना वा कारणेन वेदसंयोगो वेदधर्मसंयोगः कर्तव्यः, तदनुसारेण कर्तव्य इत्युक्तं भवति । कुत इत्याह–तदर्थत्वादिति । गुणस्य साम्न उत्पत्तिविधेर्वा मुख्यमाधानं विनियोमविधिं वा प्रति शेषभूतत्वादिति । अथवा गुणमुख्यव्यतिक्रम-

समासोऽपि वेदसंयोगसमासवन्मध्यमपदलोपी द्रष्टव्यः। गुणमुख्यधर्मव्यतिक्रम इति। व्यतिक्रमशब्दश्च बाधवचनः। गुणमुख्यधर्मयोरन्यतरस्य व्यतिक्रमे बाधेऽवश्यकर्तव्ये सति गुणधर्मं व्यतिक्रम्य बाधित्वा मुख्येन मुख्यवशेन वेदधर्मसंयोगः कर्तव्यः, न गुणवशेनेत्यर्थः। यद्वा अन्यत्रान्यत्र च वृत्तिर्व्यतिक्रमः। यत्रोत्पत्तिविनियोगविधी व्यतिक्रान्तौ दृश्येते, अन्यत्र वेद उत्पत्तिविधिरन्यत्र विनियोगविधिरिति। तत्र मुख्यविनियोगविधिवशेन वेदस्वरसंयोगः कर्तव्यः उत्पत्तिविधेर्विनियोगविध्यर्थत्वादिति व्याख्या कर्तव्येति ॥

अत्र गुणमुख्यव्यतिक्रमाधिकरण एकं सूत्रम् ॥

अथ तृतीयमुभयश्रुत्यधिकरणम्। तत्र वेदत्रयविहितं ज्योतिष्टोमादि कर्मोदाहृत्य तत्र कतमो वेदस्वरः कर्तव्य इति सन्दिह्य अनियमे यथेष्टपरिग्रहात्मके पूर्वपक्षिते सिद्धान्तं वक्तुं सूत्रं —

## भूयस्त्वेनोभयश्रुति (३-३-१०)

इति।

द्विपदम्। तत्र धर्मसाम्यादृक्सामवेदयोर्यजुर्वेदमात्रप्रतियोगित्वेनैकत्वमङ्गीकृत्योभयश्रुतीत्यभिधानं द्रष्टव्यम्। नात्रानियमः स्वरसंयोगे कर्तव्यः किं तर्हि यदुभयवेदश्रुतिकर्म तद्गुणभूयस्त्वेन लिङ्गेन स्वरसंयोगं भजते। उभयत्र श्रुतावपि यत्र भूयस्त्वमितिकर्तव्यताया विद्यते तद्वेदस्वरसंयोगः कर्तव्य इत्युक्तं भवति। अथवा न गुणे भूयस्त्वमत्र भूयस्त्वमभिप्रेतं, किंतु रूपभूयस्त्वम्। रूपं च द्रव्यदेवताक्रियं कर्मणामिष्टम्। अतस्तद्यत्र भूयस्त्वेन श्रूयते तद्धर्मसंयोगः कर्तव्य इत्युक्तं स्यात्। तच्चैतदुभयविधमपि भूयस्त्वं सर्वेषामपि कर्मणां यजुर्वेद एव तथोत्पत्तेर्विद्यते। अन्ययोस्तु तदुत्पन्नकतिपयरूपान्वितकर्मानुवादेन स्तोत्रशस्त्रादिमात्रविधानाद्गुणरूपयोरल्पत्वमेव ॥

याजुर्वैदिक एवातो भूयस्त्वादुदितो द्विधा ।
ग्राह्यः स्वरः कर्मणि स्यात् सत्यामप्युभयश्रुतौ ॥

अत्रोभयश्रुत्यधिकरणेऽप्येकं सूत्रम् ॥

अथ चतुर्थं प्रकरणाधिकरणम् ॥

तत्रोक्तानि श्रुतिर्लिङ्गं वाक्यं चेतीह यान्युत ।
विनियोगप्रमाणानि किमेतावन्ति केवलम् ॥

उतान्यान्यपि विद्यन्त इति प्रश्नादुपक्रमः ।
अज्ञानाद्वा तदज्ञानं स्याद्यदान्यन्न कथ्यते ॥

संशयाद्वा तथा ह्यन्यानुक्तौ स्यात्संशयस्त्वयम् ।
किमसत्त्वाददोऽनुक्तिः किं वानवसरादिति ॥

यद्वा न विनियोक्त्यन्या श्रुत्यादित्रितयादिति ।
विपर्ययं पूर्वपक्षं कृत्वा सिद्धान्त उच्यते ॥

ततश्चात्राधिकरणे चतुर्थविनियोक्तृगा ।
क्रियते ज्ञानसन्देहविपर्ययनिराक्रिया ॥

तदर्थं चेदं सूत्रम्—

**असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् (३-३-११)**

इति ।

त्रिपदम् । तस्यार्थः—

श्रुत्या लिङ्गेन वाक्याद्वा मुख्यासंयुक्तमत्र यत् ।
विनियोज्येत तत्सर्वमातिकर्तव्यताकुलम् ॥

आकाङ्क्षातः सन्निधेश्च भिन्नात्प्रकरणाद्द्विधा ।
यतोऽर्थित्वं प्रधानस्यात्रेतिकर्तव्यतां प्रति ॥

इतिकर्तव्यतायाश्च प्रधानं प्रत्यवस्थितम् ।
इति हेतुद्वयं सूत्रे श्रुत्यर्थाभ्यामुदीरितम् ॥

तस्माद्द्वयोरपेक्षातः सन्निधेश्च समन्वयः ।
नष्टाश्वदग्धरथवज्जायतेऽङ्गप्रधानयोः ॥

अतः सिद्धमेतद्भवति यद्दर्शपूर्णमासौ प्रकृत्याम्नातं प्रयाजानूयाजादीतिकर्तव्यताजातं तदनिर्ज्ञातप्रयोजनमुपकाराकाङ्क्षिणोर्दर्शपूर्णमासयोरुपकारकत्वेन विनियुञ्जानं प्रकरणाख्यं चतुर्थं विनियोगप्रमाणमङ्गीकर्तव्यमिति ॥

अत्र प्रकरणाधिकरणेऽप्येकं सूत्रम् ॥

अथ पञ्चमं क्रमाधिकरणम् ॥

तत्राप्यज्ञानसन्देहविपर्ययवशात्कृतम् ।
पूर्वपक्षं निराकर्तुं क्रमप्रामाण्यमुच्यते ॥

तदर्थं चेदं सूत्रं—

क्रमश्च देशसामान्यात् (३-३-१२)

इति ।

त्रिपदम् । नैतावन्त्येव विनियोगे प्रमाणानि, किंतु क्रमश्च तत्र प्रमाणं स्यादित्यर्थः । कः पुनरयं क्रमशब्दार्थः अत आह—देशसामान्यादिति । देशसामान्यात् कारणात् क्रमो भवति । देशसामान्यं क्रमशब्दप्रवृत्तिनिमित्तं, क्रम इति देशसामान्यमुच्यत इत्यर्थः । देशसामान्यं

च पाठानुष्ठानसादेश्याभ्यां द्विविधम् । तयोरनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयपश्वङ्गत्वं भवति । पाठसादेश्यं पुनर्यथासंख्याम्नानं सन्निधिसमाम्नानं चेति द्विविधम् । तत्र यथासंख्याम्नानस्य दब्धिमन्त्र उदाहरणम् । स हि दर्शपूर्णमासयोरुपांशुयाजक्रमे दब्धिर्नामासीत्यादिः पठितः । यस्य च कर्मणः क्रमे यो मन्त्रः पठ्यते तस्मिन् कर्मण्यवगम्यमाने स मन्त्रः, तस्मिन् मन्त्रेऽवगम्यमाने तत्कर्म च स्थानसामान्यादुपनिपततीति तयोर्यथासंख्याम्नानात्मकेन क्रमेणाङ्गाङ्गित्वसिद्धिः। सन्निधिसमाम्नानस्य तु 'शुन्धध्व'मित्यादिमन्त्र उदाहरणम्। तस्य च सान्नाय्यपात्रशुन्धनार्थत्वं तत्सन्निध्याम्नानात्मकात् क्रमाद्विज्ञायते। तस्मात्क्रमोऽपि पञ्चमं विनियोगप्रमाणमस्त्येवेति ॥

अत्र क्रमाधिकरणेऽप्येकं सूत्रम् ॥

अथ षष्ठमाख्याधिकरणम् । तत्रापि तथैवाज्ञानसन्देहविपर्ययैः षष्ठप्रमाणसद्भावे पूर्वपक्षं प्राप्तं निराकर्तुं सूत्रमवतारयितव्यम्। अथवा आध्वर्यवहौत्रौद्गात्रसमाख्यातानि कर्माणि किमनियमेन सर्वैः कर्तव्यानि, उताध्वर्यवमध्वर्युणा हौत्रं होत्रा औद्गात्रमुद्गात्रेति कश्चिन्नियमहेतुरस्तीति सन्दिह्यानियमं पूर्वपक्षयित्वा नियमः सिद्धान्त्यते। तदर्थं चेदं सूत्रम् —

## आख्या चैवं तदर्थत्वात् (३-३-१३)

इति ।

चतुष्पदम् । आख्या च क्रमवद्विनियोगे प्रमाणं स्यात् । आध्वर्यवादिसमाख्याप्यध्वर्य्वादीनां तत्समाख्यातेषु कर्मसु कर्तृत्वेन विनियोगे षष्ठं प्रमाणमङ्गीकर्तव्यमित्युक्तं भवति । कारणमाह– तदर्थत्वादिति । तच्छब्दस्तामेवाख्यां परामृशति कर्मणः। कर्तृविशेषसम्बन्धाख्यानार्थत्वादाध्वर्यवादिसमाख्याया इत्यर्थः। ततश्च

कर्मणः कर्त्रपेक्षस्य कर्मेप्सोः कर्तुरेव च ।
योग्यत्वेनान्वयोऽन्योन्यं नियम्येत समाख्यया ॥

योगतश्च समाख्येयं निष्पन्ना न तु रूढितः ।
प्रकृतेर्वा विकारोऽत्र प्रकृतिर्वा विकारतः ॥

अनुगम्यत इत्येवं द्वेधान्वाख्यानतः स्थिता ।
आध्वर्यवं विकारः स्यादध्वर्योरिदमित्यतः ॥

अध्वर्युः प्रकृतिर्ज्ञेयस्तत्कर्तृत्वेन सम्मतः ।
नित्या समाख्या नित्यश्च सम्बन्धः कर्तृकर्मणोः ॥

स्थिता प्राग्वेदवेदार्थसम्बन्धानादिता यतः ।
वैदिकी च समाख्येयमिष्यतेऽतो न दुष्यति ॥

अत्राख्याधिकरणेऽप्येकं सूत्रम् ॥

अथ सप्तमं श्रुतिलिङ्गाधिकरणम् ।

तत्र श्रुत्यादिषट्कस्य प्रमाणत्वे व्यवस्थिते ।
बलाबले निरूप्येते विरोधे सति तद्गते ॥

सकृच्च वाचः सर्वोक्तावशक्तेराश्रिते क्रमे ।
द्वयोर्द्वयोरेव चिन्ता क्रियते समवेतयोः ॥

तत्र च प्रथमप्राप्तश्रुतिलिङ्गद्वयाश्रया ।
प्रथमं क्रियते चिन्ता तत्रोदाहरणं त्विदम् ॥

ऐन्द्र्योपतिष्ठते गार्हपत्यमित्येतदत्र च ।
विचारोऽयमुपस्थेयः किमिन्द्रः स्याद्दचानया ॥

उतैन्द्रो गार्हपत्यो वा द्वौ वा स्यातां समुच्चितौ ।
नियमाद्गार्हपत्यो वा भवेदिति चतुर्विधः ॥

यदि लिङ्गं बलीयः स्यादिन्द्रस्य तदुपस्थितिः ।
द्वयोस्तुल्यबलत्वे स्याद्विकल्पः श्रुतिलिङ्गयोः ॥

यदि तुल्यबलत्वेऽपि न विरोधो द्वयोर्भवेत् ।
तदेन्द्रो गार्हपत्यश्चाप्युपस्थेयौ समुच्चयात् ॥

अथ श्रुतेर्बलीयस्त्वं नियमेन तदा भवेत् ।
उपस्थेयो गार्हपत्य इति चात्र व्यवस्थितिः ॥

ननु कात्र श्रुतिः, श्रौतो विनियोगोऽत्र कः स्मृतः ।
लिङ्गं च किं, लैङ्गिकश्च विनियोगः क उच्यते ॥

द्वितीयान्तो गार्हपत्यशब्दः प्राधान्यभाक् श्रुतिः ।
ऐन्द्र्येति च तृतीयान्तः करणत्वाभिधायकः ॥

तयोर्यच्छ्रवणादेव विनियोगः प्रतीयते ।
स श्रौतो मन्त्रसामर्थ्यं लिङ्गमिन्द्रस्मृतिं प्रति ॥

सामर्थ्यात्तत्र मन्त्रस्य विनियोगस्तु लैङ्गिकः ।
इति द्वयोरसङ्कीर्ण आत्मा विषय एव च ॥

नन्वत्र लिङ्गादिन्द्रार्थो मन्त्र इत्युपपद्यते ।
श्रुतेस्तु गार्हपत्यार्थ इति नैवोपपद्यते ॥

गार्हपत्यार्थता यस्माद्वाक्यात् पदयुगात्मकात् ।
न केवलाद्गार्हपत्यमैन्द्र्येत्यस्मात् पुनः पदात् ॥

अतो वाक्यस्य लिङ्गेन विरोधोऽत्र निरूप्यताम् ।
न श्रुतेरुच्यतां वात्र श्रुतिर्वाक्यात् पृथक्तया ॥

सत्यं न शक्यते वक्तुं पृथग्वाक्याच्छ्रुतिः क्वचित् ।
केवलस्याप्रयोज्यत्वात् पदस्य श्रुतिशालिनः ॥

न च वाक्यं केवलं च विना श्रुत्या प्रयुज्यते ।
द्वितीयान्ततृतीयान्तपदान्वयमयं हि तत् ॥

अतो न केवला लिङ्गविरुद्धात्र श्रुतिर्भवेत् ।
किं तु वाक्यसहायैव तथाप्यत्र प्रधानतः ॥

श्रुतेरेव विरोधोक्तिर्न वाक्यस्याप्रधानतः ।
अतोऽयुक्तो विचारोऽत्र श्रुतिलिङ्गविरोधगः ॥

बलाबलाश्रयः सौत्रस्तदर्थं चिन्त्यते त्विदम् ।
श्रुतिवत् किं प्रमाणत्वं लिङ्गादीनामपि स्वतः ॥

उत श्रुतिं कल्पयित्वा स्मृतिवत्त्विति तत्र च ।
स्वत एव प्रमाणत्वं पूर्वपक्ष्यभ्युपेत्य तु ॥

द्वयोस्तुल्यबलत्वेन विकल्पमभिवाञ्छति ।
समुच्चयं वोपस्थाने गार्हपत्येन्द्रयोर्द्वयोः ॥

लिङ्गस्य वा बलीयस्त्वमङ्गीकृत्येन्द्रगोचरम् ।
उपस्थानव्यवस्थानं मन्यते तत्र चोत्तरम् ॥

उपस्थाने गार्हपत्यनियमं वक्तुमुच्यते ।
श्रुतिलिङ्गेत्यादिसूत्रं चतुष्पदसमन्वितम् ॥

**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् (३-३-१४)**

इति ।

तस्यार्थः-एषां श्रुत्यादीनां षण्णां समवाय एकार्थोपनिपाते सति विरोधे परदौर्बल्यमर्थात् पूर्वप्राबल्यं च प्रत्येतव्यं, न तुल्यबलत्वम्। तत्र हेतुः-अर्थविप्रकर्षादिति। अर्थः श्रुत्यर्थः स च विनियोगः,तस्य परेभ्यः परेषां वा तस्माद्विप्रकर्षाद् दूरस्थितत्वादिति श्रौते परदौर्बल्ये श्रौतो हेतुः। आर्थे पूर्वप्राबल्ये तु तेन पूर्वेषां पूर्वैर्वा तस्य सन्निकर्षात् समीपस्थितत्वादित्यार्थो हेतुर्द्रष्टव्यः। ननु लिङ्गादीनां स्वतः प्रामाण्यपक्षे किं श्रुत्यर्थसन्निकर्षविप्रकर्षाभ्यामुक्ताभ्याम्। उच्यते, न हि लिङ्गादीनां स्वतः प्रामाण्यं संभवति, चोदनालक्षणत्वाद्धर्मस्य। अतस्तेषां स्मृतिवच्छ्रुत्यनुमानद्वारत्वात् प्रामाण्यसिद्धेस्तदपेक्षाणां बलाबलकारणत्वेन तदर्थसन्निकर्षविप्रकर्षावुच्यमानौ नानुपपन्नौ। तदेषोऽत्रार्थसन्निकर्षविप्रकर्षप्रकारः—'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति प्रत्यक्षत्वाच्छ्रुतेर्गार्हपत्यं प्रति मन्त्रविनियोगात्मा श्रुत्यर्थः सन्निकृष्टः। मन्त्रसामर्थ्यात्मकस्य तु लिङ्गस्य श्रुत्यर्थ इन्द्रं प्रति मन्त्रविनियोगात्मकोऽनुमितश्रुतिमूलत्वाद्विप्रकृष्टः। यावद्धि मन्त्रश्रवणानन्तरं तदर्थं बुद्ध्वा तस्य तत्प्रतिपादनशक्तिं कल्पयित्वाकाङ्क्षावशेन इन्द्रोपस्थानार्थत्वे श्रुतिः कल्पयितुं प्रक्रम्यते तावत् प्रत्यक्षया श्रुत्या गार्हपत्यार्थतया विनियुक्तत्वान्मन्त्रस्यानुमितिविषयापहारलक्षणो लिङ्गस्य बाधो भवतीति। ननु गार्हपत्यार्थत्वे मन्त्रस्येन्द्रशब्देनाग्नेरभिधानं कर्तव्यं, तच्च गुणवृत्त्यादिशब्दवत् पारिभाषिकत्वापत्तेरयुक्तम्। अस्य परिहार ऐन्द्र्यधिकरणे पूर्वमेवोक्तः। इन्द्रशब्दाभिधेयत्वमग्नेर्यज्ञसम्बन्धसामान्येन गुणवृत्त्येत्यर्थानुसारेण वा भवतीति। तस्मात् श्रुतिबलीयस्त्वेन गार्हपत्य एवानेन मन्त्रेणोपस्थातव्य इति सिद्धम्॥

अथ लिङ्गवाक्यविरोधे विचार्यते—तत्र 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इति सकलो मन्त्रः। किं वाक्यबलीयस्त्वेन सदनकरणे प्रतिष्ठापने च समुच्चयेन प्रयोक्तव्यः, उत लिङ्गवाक्ययोस्तुल्यबलत्वेन सकलैकदेशप्रयोगयोर्विकल्पः। अथ लिङ्गबलीयस्त्वेन स्योनादिः कल्पयाम्यन्तः सदनकरणे, तस्मिन् सीदेति प्रतिष्ठापने च विभज्य विनियोक्तव्याविति संशयः। पूर्वपक्षस्त्वेवं—सर्वत्र हि वाक्यभेदैकवाक्यत्वयोरेकवाक्यत्वं सति सम्भवे न्याय्यम्, विशेषतस्त्वत्र। अत्र हि 'तस्मिन् सीदे'त्युत्तरार्धस्य पूर्वार्धसापेक्षत्वात् तदेकवाक्यत्वमन्तरेणावाचकत्वमापद्येत। तस्माद्वाक्यबलीयस्त्वेनोभयत्र समस्तप्रयोगः कर्तव्यः। अथवा कल्प्यश्रुतित्वेनोभयोरपि तुल्यबलत्वादुभयत्र विकल्पौ न समस्तावयवप्रयोगौ कर्तव्याविति। तत्र सिद्धान्तः सूत्रेणोच्यते—अत्रापि पूर्वस्य लिङ्गस्य बलीयस्त्वं परस्य वाक्यस्य दौर्बल्यं च प्रत्येतव्यमिति प्रतिज्ञायार्थविप्रकर्षादिति हेतुर्योजनीयः। तत्रायमर्थविप्रकर्षः—कल्प्यश्रुतित्वसाम्येऽपि लिङ्गवाक्ययोर्लिङ्गादव्यवधानेनैवं शीघ्रं श्रुतिः कल्प्यते। वाक्येन तु लिङ्गकल्पनाव्यवधानेन मन्दम्। तथाहि—पूर्वोत्तरार्धयोः सदनकरणप्रतिष्ठापने प्रति सामर्थ्यस्य स्वरूपत एव प्रत्यक्षसिद्धत्वात् तत्र श्रुतिमनुमाय शीघ्रमुभयत्र विनियोगः सिध्यति। समुदायस्य तूभयत्र सामर्थ्यमसिद्धमेकवाक्यत्वेन कल्पयित्वा पुनः श्रुतिः कल्पनीयेति मन्थरत्वाच्छ्रुत्यर्थो विप्रकृष्यते। अतो लिङ्गबलीयस्त्वेन विभज्य मन्त्रौ विनियोक्तव्याविति॥

अथ वाक्यप्रकरणयोर्विरोधे चिन्त्यते। तत्रोदाहरणं सूक्तवाकनिगदः। तत्र "अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताभिन्द्राग्नी इदं हविरजुषेता"मित्यादि समाम्नातम्। तत्र देवतापदानि

पर्वद्वये लिङ्गान्निष्कृष्य प्रयोज्यानीति कृत्स्नोपदेशाधिकरणे स्थापितम्। अत्र त्वयं संशयः—यानि तत्रावशिष्टानीदं हविरित्यादि पदानि तत्तद्देवतापदसमीपपठितानि, तानि किं तत्तद्देवतापदतत्तत्पर्वनिष्कर्षे सति तद्वदेव तत्र तत्र निष्कृष्य प्रयोज्यानि, उतैकदेवतापदनिष्कर्षे सति तेषामनिष्कर्षादन्यदेवतापदसमीपे सर्वाण्येव प्रयोज्यानीति। तत्र वाक्यबलीयस्त्वे निष्कृष्य प्रयोगः। प्रकरणबलीयस्त्वे तत्रैवोपस्थानम्। तत्रायं पूर्वपक्षः—उभयोरपि वाक्यप्रकरणयोः प्रामाण्यश्रुतिकल्पनयोरविशेषात् विप्रकर्षहेत्वन्तराभावाच्च तुल्यबलत्वान्निष्कर्षानिष्कर्षयोर्विकल्पः। अथवा प्रधानाकाङ्क्षालक्षणत्वात् प्रकरणस्य तद्वशेन सर्वेषां प्रधानार्थत्वात् प्रकरणाधीन एवानिष्कृष्य प्रयोगो बलीयानिति। सिद्धान्तस्तु—वाक्यप्रकरणयोरपि परदौर्बल्यमर्थविप्रकर्षादेव प्रत्येतव्यमिति। अयं चात्रार्थविप्रकर्षः, येन देवतापदेन येषां शेषपदानामेकवाक्यत्वं दृष्टं तेषां तद्विशेषणभूतार्थप्रतिपादनसामर्थ्यात्मनो लिङ्गस्य ततः श्रुतेश्च शीघ्रकल्प्यत्वाच्छ्रुत्यर्थविप्रकर्षो द्वाभ्यामेवास्ति। अन्येन तु देवतापदेनान्यशेषपदसम्बन्धे प्रकरणादेकवाक्यत्वं कल्पयित्वा ततस्तत्प्रतिपादनसामर्थ्यं श्रुतयोः कल्प्यता त्रिभिः श्रुत्यर्थविप्रकर्ष इत्यर्थविप्रकर्षाधिक्यात्प्रकरणस्य वाक्यविनियोगो बलीयानिति॥

अथ प्रकरणस्थानविरोधे सम्प्रधार्यते, तत्रोदाहरणं राजसूयप्रकरणेऽभिषेचनीयस्थाने समाम्नाता विदेवनादयः। राजसूयो ह्यनेकेष्टिपशुसोमयागात्मकः। तत्राभिषेचनीयो नाम सोमयागः। अयं चात्र सन्देहः—किं तस्यैवाभिषेचनीयस्यैते विदेवनादयोऽङ्गभूताः स्थानप्राबल्येन

उत प्रकरणप्राबल्येन समस्तस्य राजसूयस्येति। तत्र स्थानप्राबल्यादभिषेचनीयमात्रार्थत्वं पूर्वपक्षयित्वा प्रकरणात् सर्वार्थत्वं सिद्धान्तः सूत्रेणैवोच्यते। अत्रापि प्रकरणात् परस्य स्थानस्य दौर्बल्यं तत एवार्थविप्रकर्षात् स्यादिति योजना। अर्थविप्रकर्षस्त्वेवम्—अभिषेचनीयाङ्गत्वे हि सन्निध्याम्नानलक्षणेन स्थानेनाकाङ्क्षात्मकं प्रकरणं प्रथमं कल्पयित्वा पुनर्वाक्यलिङ्गश्रुतयस्तद्द्वारेण कल्पनीया इति चतुर्भिर्विप्रकर्षः। प्रकरणेन तु समस्तराजसूयाङ्गत्वे कल्पनीये प्रसिद्धत्वादाकाङ्क्षाया वाक्यलिङ्गश्रुतिमात्रकल्पनात् त्रिभिर्विप्रकर्षः। तस्मात् प्रकरणविनियोगो बलीयानिति ॥

अथ स्थानसमाख्ययोर्विरोधे निरूप्यते। तत्रोदाहरणं—पौरोडाशिकसमाख्याते काण्डे सान्नाय्यपात्रशुन्धनस्थाने समाम्नातः 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः। संशयस्तु किमयं मन्त्रः समाख्याबलीयस्त्वेन पुरोडाशपात्रशोधनार्थः उत स्थानबलीयस्त्वेन सान्नाय्यपात्रशोधनार्थः, किं वा तुल्यबलत्वेनोभयार्थ इति। तत्र पूर्वपक्षस्तावद्—विशेषाभावाद्विकल्पेनोभयार्थ इत्येकः, सम्बन्धवाचित्वेन समाख्यायबलीयस्त्वात् पुरोडाशपात्रशोधनार्थ इत्यपरः। सिद्धान्तस्तु—स्थानबलीयस्त्वात् सान्नाय्यपात्रशोधनार्थ इति। अत्रापि परस्याः समाख्यायाः पूर्वस्मात् स्थानाद्दौर्बल्यमर्थविप्रकर्षात् स्यादिति सूत्रयोजना कर्तव्या। एष चार्थविप्रकर्षः—समाख्यायाः सम्बन्धनिमित्तत्वात् तच्छ्रवणानन्तरं नूनमस्त्यस्याः समाख्यायाः पुरोडाशेन कश्चित् सम्बन्ध इति स्थानलभ्यं सम्बन्धसामान्यं कल्पयित्वा पश्चात् प्रकरणवाक्यलिङ्गश्रुतयः कल्पनीया इति पञ्चभिर्विप्रकर्षः। स्थानविनियोगे तु सम्बन्धस्य सन्निधिक्लृप्तत्वात् प्रकरणादिचतुष्टयमेव कल्पनीयमिति सन्निकर्षाच्छ्रुत्यर्थस्य स एव

लीयानिति ॥

तदेवमेषां पूर्वेण पूर्वेणोत्तरमुत्तरम् ।
श्रुत्यर्थं यावदगतं प्रामाण्यप्राप्तितोऽग्रतः ॥

बाध्यते मूलविच्छेदात्तदत्राप्राप्तबाधता ।
श्रुत्यादीनां भवेत् षण्णामिति शास्त्रार्थनिर्णयः ॥

अथात्रैवापरो विचारोऽसूत्रितोऽपि सूत्रकाराभिप्रेतत्वात् क्रियते। यः खलु शास्त्रे तत्र तत्रेदमनेन बाध्यत इदमनेन बाध्यत इति बाधव्यवहारः। स किं श्रुत्यादिवदप्राप्तविषय उत प्राप्तविषय इति। तत्र वैरूप्यपरिहारार्थमप्राप्तविषयत्वं पूर्वपक्षयित्वा तदभावः सिद्धान्त्यते। तथाहि—

प्रमाणेन तदाभासं नित्यं नैमित्तिकेन च ।
क्रत्वर्थं पुरुषार्थेन प्राकृतं वैकृतेन च ॥

पूर्वं परेण सामान्यं विशेषविहितेन च ।
अल्पं च भूयसा सावकाशं निरवकाशतः ॥

अङ्गधर्मः प्रधानस्य धर्मेणेत्येवमादिषु ।
प्राप्तबाधत्वमेवेष्टमिति बाधो द्विधा मतः ॥

इतीदं श्रुतिलिङ्गाधिकरणं परिनिष्ठितम् ।
विचाराः षड्भवन्त्यत्र सूत्रमेकमुदाहृतम् ॥

जैमिनीयन्यायमालाकारोऽधिकरणानि षट् ।
अत्राचीक्लृपदेतत्तु नाजिताकारसम्मतम् ॥

अस्याधिकरणस्यान्ते तेन ह्येवमुदीरितम् ।
इति कृपया श्रोतॄणां यथाशक्ति कृता मया ॥

व्याख्याधिकरणस्यास्य नाभिन्नत्वाभिमानतः ।
इत्येकवचनस्यात्र श्रवणादैक्यमीप्सितम् ॥

अथाष्टममहीनाधिकरणम्। इदमारभ्य श्रुत्यादीनां कुत्र विरोधोऽस्ति कुत्र वा नास्तीति विचार्यते। तत्रास्मिन्नधिकरणे प्रकरणस्य श्रुत्यादित्रयेण सह विरोधाविरोधविचारः क्रियते। तत्र 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये'ति ज्योतिष्टोमप्रकरणपठितवाक्यद्वयमुदाहृत्य किं यथा साह्नशब्देन तं 'सहैवाह्ना संस्थापयेयुः साह्नो वै नामे'ति वचनानुसारेण ज्योतिष्टोमाभिधानात् त्र्युपसत्त्वं तस्य भवति। एवमहीनशब्देनापि यथाकथञ्चित् तदभिधानसम्भवाद् द्वादशोपसत्त्वमपि तस्यैव स्यादुत तदसम्भवाद्द्वादशाहादेरेवेति सन्दिह्य पूर्वपक्षं पूर्वपक्षयितुमाद्यं सूत्रम्—

**अहीनो वा प्रकरणाद्गौणः (३-३-१५)**

इति।

चतुष्पदम्। वाशब्दः पूर्वपक्षसूत्रगतत्वादुत्सूत्रस्य सिद्धान्तस्य संशयमात्रस्य वा व्युदासार्थो व्याख्येयः। यतोऽहीनोऽहीनशब्दो ज्योतिष्टोमे प्रकरणात् प्रकरणानुग्रहार्थमहानिगुणयोगाद्गौणो वर्तते तस्माज्ज्योतिष्टोमार्थत्वमेव द्वादशोपसत्त्वस्य स्यादित्युपस्कृत्य व्याख्या कर्तव्या। अहानिगुणयोगश्च ज्योतिष्टोमस्य न हीयत इत्यहीन इति नञ्समासाश्रयणेन समर्थनीयः। न हि ज्योतिष्टोमः कृत्स्नविधानात् सर्वप्रकृतित्वाच्च कुतश्चिद्धीयते। तस्मात् साह्नशब्दवदहीनशब्दस्यापि ज्योतिष्टोमवाचकत्वादुपसत्त्रित्ववत्तद्द्वादशत्वस्यापि तन्निवेशो युक्त इति॥

अथ द्वितीयं सिद्धान्तसूत्रम्—

**असंयोगात्तु मुख्यस्य तस्मादपकृष्येत (३-३-१६)**

इति।

पञ्चपदम्। तुशब्दः पूर्वपक्षं व्यावर्तयति। अपकृष्येतैव द्वादशोपसत्ता तच्छब्दपरामृष्टान्मुख्याद् द्वादशाहादौ। कुत इत्याह—असंयोगान्मुख्यस्येति। द्वादशोपसत्तयेति शेषः। मुख्यः प्रकृतित्वाज्ज्योतिष्टोमोऽभिमतः। तस्य वाक्येन षष्ठीश्रुत्या चाहीनसम्बद्धया द्वादशोपसत्तया संयोगाभावादित्यर्थः। अथवाहीनशब्देनेति शेषः। मुख्यस्य ज्योतिष्टोमस्याही(न)शब्देन तद्वाच्यत्व-लक्षणस्य संयोगस्याभावादित्यर्थः। न ह्यहीनशब्दो नञ्समासान्वास्या-नेनाहानिगुणयोगाद्व्युत्पन्नः किं तु मध्योदात्तत्वात् खप्रत्ययान्तोऽहर्गण-नामधेयम्। नञ्समासे त्वाद्युदात्तत्वं स्यात्। किं च साह्नाहीनशब्दयो-रुभयोरपि ज्योतिष्टोमवाचकत्वे पर्यायत्वात् पृथगुपादानं व्यर्थं स्यात्। तस्मादहीनशब्दस्य त्र्यहप्रभृति द्वादशाहपर्यन्ताहर्गणनामत्वात् तत्रोत्कृष्येत तद्द्वादशोपसत्त्वमिति॥

अत्राहीनाधिकरणे द्वे सूत्रे॥

अथ नवमं द्वित्वबहुत्वयुक्ताधिकरणम्। तत्र 'युवं हि स्थः स्वर्पती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्याद्, 'एते असृग्रमिन्दव' इति बहुभ्यो यजमानेभ्य इति वाक्यद्वयमुदाहृत्य किमेतयोः प्रतिपदोर्ज्योतिष्टोम एव निवेश उत द्वियजमानकेषु कुलाययज्ञादिषु बहुयजमानकेषु द्विरात्रादिषू-त्कर्ष इति सन्दिह्य सिद्धान्तेनोपक्रमार्थमाद्यं सूत्रं—

## द्वित्वबहुत्वयुक्तं चाचोदना तस्य (३-३-१७)

इति।

चतुष्पदम्। क्वचित्त्वचोदनादिति पञ्चम्यन्त एव पाठः। द्वित्व-बहुत्वयुक्तमप्येतत्प्रातिपद्द्वयं मुख्यस्य ज्योतिष्टोमस्य द्वित्वबहुत्वगुणासं-योगात् तस्मान्मुख्याज्ज्योतिष्टोमादुपसद्द्वादशत्ववदपकृष्येतेति चकारा-दनुषज्य व्याख्या कर्तव्या। अनुषक्तस्यासंयोगादिति हेतोरुपपादनार्थ-

माह—अचोदना तस्येति। तच्छब्दो द्वित्वबहुत्वपरामर्शकः, यतस्तस्य यजमानद्वित्वस्य तद्बहुत्वस्य च ज्योतिष्टोमे चोदना नास्ति तस्मादित्यर्थः। अथवानुषक्तस्य मुख्यस्य परामर्शकः। यतस्तस्य ज्योतिष्टोमस्य यजमानद्वित्वबहुत्वयोश्चोदना नास्ति तस्मादित्यर्थः। अतः कथं तत्रासतोः सतोर्यजमानद्वित्वबहुत्वयोस्तद्युक्ते प्रतिपदौ सङ्गच्छेयाताम्। तस्मा'देतेन राजपुरोहितौ सायुज्यकामौ यजेयाता'मिति कुलाययज्ञे द्वयोर्यजमानयोर्विहितत्वाद् द्वित्वयुक्तप्रतिपदुत्कर्षस्तत्र कर्तव्यः। 'एको द्वौ बहवो वाहीनेन यजेरन्नि'त्यहीनो बहूनां यजमानानां विहितत्वाद्बहुत्वयुक्तप्रतिपदुत्कर्षस्तत्र कर्तव्य इति॥

अथ द्वितीयं पूर्वपक्षसूत्रं—

## पक्षेणार्थकृतस्येति चेत् (३-३-१८)

इति।

चतुष्पदम्। तस्यार्थः—इति चेत्पश्यसि द्वित्वबहुत्वयुक्तयोः प्रतिपदोर्द्वित्वबहुत्वयोस्तत्राचोदनेन निमित्ताभावादुत्कर्ष इति, तन्न। एकाशक्तिपक्षेणार्थकृतस्य यजमानद्वित्वस्य तद्बहुत्वस्य च प्राप्तेः सम्भवादस्त्येव ज्योतिष्टोमे चोदनेत्यचोदना तस्येत्यतो निष्कृष्य चोदनेत्यनुषज्य व्याख्यातव्यम्। अथवा एकाशक्तिपक्षेणार्थाद्द्वाभ्यां बहुभिर्वा कृतस्य ज्योतिष्टोमस्य द्वित्वबहुत्वसंयोगो भविष्यती'त्यसंयोगात्तु मुख्यस्ये'त्यतः संयोगपदानुकर्षणेन व्याख्या कर्तव्या। न च शब्दप्राप्तार्थप्राप्तयोश्चोदितत्वे कश्चिद्विशेषोऽस्ति। तस्मान्निमित्तस्य विद्यमानत्वाज्ज्योतिष्टोम एव नैमित्तिकप्रतिपद्द्वयनिवेशोऽङ्गीकर्तव्य इति॥

अथ तृतीयं सिद्धान्तसूत्रं—

## न प्रकृतेरेकसंयोगात् (३-३-१९)

इति ।

त्रिपदम् । तस्यार्थः—न प्रकृतेर्ज्योतिष्टोमस्य यजमानद्वित्वबहुत्वचोदना तत्संयोगो वास्तीति पूर्ववदनुषङ्गोऽत्रापि द्रष्टव्यः । कारणमाह—एकसंयोगादिति । प्रकृतेरित्यत्रापि सम्बध्यते । प्रकृतेर्ज्योतिष्टोमस्य 'ज्योतिष्टोमेन यजेते'त्येकवचनाभिहितेनैव यजमानेन संयोगावगमादिति । अथवा नेत्येतावता पूर्वपक्षं प्रतिक्षिप्य प्रकृतेरेकसंयोगादिति हेतुर्निर्देष्टव्यः । अर्थस्तूक्त एव । यत्त्वेकाशक्तिपक्षेऽर्थाच्चोदनेति तदप्येको यथा शक्नुयादित्युपबन्धादप्रमाणकमेव । अशक्तिकृतं तु ह्रापनमन्याङ्गविषयमेव विज्ञायते नोत्पत्तिप्रयोगचोदनास्थयजमानैकत्वसंख्याविषयम् । तस्मादेकयजमानकामस्य ज्योतिष्टोमाद्युक्त एव द्वित्वबहुत्वयुक्तप्रतिपदुत्कर्ष इति ॥

अत्र द्वित्वबहुत्वयुक्ताधिकरणे त्रीणि सूत्राणि ॥

अथ दशमं जाघन्यधिकरणम् । तत्र दर्शपूर्णमासप्रकरणाधीतं 'जाघन्या पत्नीः संयाजयन्ती'ति वाक्यमुदाहृत्य किमेतद्विधानं दर्शपूर्णमासयोः पशौ वेति सन्दिह्य पशाविति पूर्वपक्षं वक्तुमाद्यं सूत्रं—

## जाघनी चैकदेशत्वात् (३-३-२०)

इति ।

त्रिपदम् । जाघनी च द्वित्वबहुत्वयुक्तवदुपसद्द्वादशत्ववद्वापकृष्येतेति चकारादनुषज्यते । कारणमाह—एकदेशत्वादिति । जाघन्याः पश्वेकदेशभूतत्वादित्यर्थः । तथा च सति दर्शपूर्णमासयोः पश्वभावादेकदेश-

द्रव्याणां चाप्रयोजकत्वादग्नीषोमीयस्थजाघन्युद्देशेन पत्नीसंयाजात्मक-संस्कारविधानमेतदित्यवगम्यत इति ॥

अथ द्वितीयं सिद्धान्तसूत्रं—

**चोदना वापूर्वत्वात् (३-३-२१)**

इति ।

त्रिपदम् । वाशब्द उत्कर्षं व्यावर्तयति । दर्शपूर्णमासयोः पत्नी-संयाजानां गुणत्वेन जाघन्योश्चोदनैवेयं न त्वग्नीषोमीयस्थजाघन्युद्देशेन पत्नीसंयाजप्रतिपत्तिविधिः । कुत इत्याह—अपूर्वत्वादिति । जाघनी हि वाक्यान्तरविहितत्वाभावेनापूर्वा । अतोऽप्राप्तत्वाद्विधानार्हा भवति । पत्नी-संयाजास्त्वनन्तरविहितत्वेन मनसि विपरिवर्तमाना न विधातुं शक्यन्ते । तस्मात् प्राप्तपत्नीसंयाजोद्देशेनाप्राप्तजाघनीविधानमेवैतदङ्गीकर्तव्यमिति ॥

अथ तृतीयमाभाषणसूत्रम्—

**एकदेश इति चेत् (३-३-२२)**

इति ।

त्रिपदम् । तस्य च पश्वेकदेशो हि जाघनी । अतो यत्र पशुस्त-त्रोत्क्रष्टुमर्हतीति यत्पूर्वसूत्र एवैकदेशत्वादित्यनेनास्माभिरुक्तं, तस्य कः परिहार इति चेत् पूर्वपक्षी ब्रूत इत्यर्थः ॥

अथ चतुर्थमेतत्परिहारार्थं सूत्रं—

**न प्रकृतेरशास्त्रनिष्पत्तेः (३-३-२३)**

इति ।

त्रिपदम्। तत्र नञा पूर्वसूत्रोक्तमेकदेशत्वं जाघन्याः प्रतिक्षिप्यते। नैकदेशो जाघनी नोत्तरार्धादिशब्दवदेकदेशवचनो जाघनीशब्द इत्यर्थः, किंतु हृदयादिशब्दवदाकृतिवचन एवेत्यर्थात् सिध्यति। ततश्च स्वयं पशूपादानपरप्रयुक्तपशूपजीवनाभ्यां विनापि दर्शपूर्णमासयोर्जाघन्युपादातुं शक्या स्यादित्यभिप्रायः। तत्र हेतुः—प्रकृतेरशास्त्रनिष्पत्तेरिति। प्रकृतेदर्शपूर्णमासयोरर्थेन जाघन्याः शास्त्रेण निष्पत्तेरभावात् पशोः संज्ञपनादिक्रियया तन्निष्पादनस्य शास्त्रेणाचोदितत्वादित्यर्थः। अतः क्रयादिना ह्युपादीयमाना न विरोत्स्यते। अग्नीषोमीये तु हृदयादीनामुत्पत्तिप्रकारः संज्ञपनादिशास्त्रेणैव नियत इति न तत्र क्रयाद्याश्रयणीयमिति विशेषः।

तस्माद्विकल्पमाना स्यादाज्येन सह जाघनी।
दार्शे च पौर्णमासे च पत्नीसंयाजकर्मणि ॥

अत्र जाघन्यधिकरणे चत्वारि सूत्राणि ॥

अथैकादशं सन्तर्दनाधिकरणम्। तत्र ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य श्रुतं-'दीर्घसोमे सन्तृद्येद् धृत्या' इति वाक्यमुदाहरणम्। एते चात्र संशयाः—किमेतत् सन्तर्दनं शुद्ध एव ज्योतिष्टोमे निविशते, उत तत्रैव दीर्घयजमानके आहोस्विदुक्थ्यादिसंस्थासु किं वा सत्राहीनयोरथाग्निष्टोमाधिकमात्र इति। तत्र शुद्धज्योतिष्टोमनिवेशं पूर्वपक्षयितुमाद्यं सूत्रं—

**सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात् स्यात् (३-३-२४)**

इति।

पञ्चपदम्। दृढसंश्लेषः सन्तर्दनं, तत् प्रकृतौ ज्योतिष्टोम एव शुद्धे स्यादिति प्रतिजानीमहे। तत्र हेतुः—अनर्थलोपादिति। ज्योतिष्टोम-एव दीर्घसोमशब्दस्यार्थलोपाभावेन वर्तितुं शक्यत्वात्। स हीष्टिपशु-बन्धाद्यपेक्षया दीर्घः, सोमयागात्मकश्चेत्यर्थः। अथवा प्रयोजनवचनोऽर्थ-शब्दः। सन्तर्दनप्रयोजनस्य दार्ढ्यस्य ज्योतिष्टोमेऽपि लोपाभावात्। न हि दृढसंश्लिष्टयोः फलकयोर्ज्योतिष्टोमेऽभिषवः कर्तुमशक्यो भवती-त्यर्थः। न'न्वसन्तृण्णे भवत' इत्यसन्तर्दनमपि तत्र श्रूयते तत्कथमत्र निर्वाहोऽत आह—क्रयणवदिति। क्रयणवद्विकल्पेन निर्वाहः स्यादित्यर्थः। क्रीयतेऽनेनेति करणव्युत्पत्त्या क्रयसाधनवचनः क्रयणशब्दः। यथा क्रयणानां वासःप्रभृतीनामेकस्मिन् क्रये विकल्पेन निवेशोऽभिमतः एवं सन्तर्दनासन्तर्दनयोर्ज्योतिष्टोमे विकल्पेन निवेशः स्यादित्यर्थः। पूर्वपक्षेण चायं दृष्टान्तः। सिद्धान्ते क्रयणानां समुच्चयस्य स्थापयिष्य-माणत्वात्। अथवा सिद्धान्तेनैवानर्थलोपदृष्टान्तो द्रष्टव्यः। क्रयण-वदनर्थलोपादिति। यथा क्रयणानामेकेन केनचित् स्तोकमूल्यस्य सोमस्य क्रयसिद्धौ क्रयणान्तरदानं वचनसामर्थ्यात् क्रियमाणमदृष्टार्थत्वादलुप्तार्थं, एवमसन्तृण्णयोरप्यभिषवणफलकयोः प्रकृतावभिषवशक्तौ वचनसाम-र्थ्यात् सन्तृण्णयोः करणमदृष्टार्थत्वादलुप्तार्थं भवतीत्यर्थः॥

अथ द्वितीयं सत्राहीनयोरेव निवेशं वक्तुं सूत्रम्—

## उत्कर्षो वा ग्रहणाद्विशेषस्य (३-३-२५)

इति।

चतुष्पदम्। वाशब्दः प्रकृतिनिवेशं व्यावर्तयति। उत्कर्ष एव स्यात् प्रकृतितोऽन्यत्र सन्तर्दनस्य। कुत इत्याह—ग्रहणाद्विशेषस्येति।

वाक्येन दीर्घसोमत्वस्य विशेषस्य ग्रहणादुपादानादित्यर्थः। सोमस्य च दीर्घत्वं सोमयागान्तरापेक्षया भवति, नेष्टिपशुबन्धाद्यपेक्षया। अतः प्राथम्याज्ज्योतिष्टोममपेक्ष्य सत्राणामहीनानां च दीर्घत्वात् तेषूत्कर्षः कर्तव्य इति ॥

अथ तृतीयं प्रकृतावेव दीर्घयजमाने निवेशं वक्तुं सूत्रं—

## कर्तृतो वा विशेषस्य तन्निमित्तत्वात् (३-३-२६)

इति।

चतुष्पदम्। वाशब्दः प्रकृतित उत्कर्षं व्यावर्तयति दीर्घसोमशब्दोऽयं कर्तृतः कर्तृद्वारेण वर्णयितव्यः। ततश्च प्रकरणानुग्रहाय ज्योतिष्टोम एव वर्तितुमर्हतीति भावः। कारणमाह—विशेषस्य तन्निमित्तत्वादिति। दीर्घसोमत्वलक्षणस्य विशेषस्य कर्तृनिमित्तत्वाद् दीर्घस्य सोम इति षष्ठीसमासाश्रयणेन दीर्घं कर्तारं निमित्तीकृत्य प्रवृत्तत्वादित्यर्थः। ततश्च ज्योतिष्टोमस्यैव दीर्घसोमशब्दवाच्यत्वोपपत्तेः तत्रैव नित्यासन्तर्दनबाधेन नैमित्तिकस्य सन्तर्दनस्य निवेशो न्याय्यः ॥

अथ चतुर्थमेतत्परिहारार्थं सूत्रं—

## क्रतुतो वार्थवादानुपपत्तेः स्यात् (३-३-२७)

इति।

चतुष्पदम्। वाशब्दः कर्तृनिमित्तत्वं व्यावर्तयति। क्रतुत एव दीर्घसोमशब्दोऽयं वर्णयितव्यः स्यात्। ततश्च कर्मधारयसमासता भवति। कारणमाह—अर्थवादानुपपत्तिरिति। कर्तृनिमित्तत्व इति शेषः। धृत्या इत्यर्थवादस्य कर्तृनिमित्तत्वेऽनुपपत्तिर्हि स्यात्। न हि यजमानस्य दीर्घत्वे ह्रस्वत्वे वाऽधिषवणफलकयोर्धारणे कश्चिद्विशेषोऽस्ति, उभयत्रापि सोमस्य तुल्यत्वात्।

क्रतुतस्तु दीर्घत्वे सोमाभिषवाधिक्यात् फलकयोर्दारणाशङ्कायां धारणार्थवादोपपत्तिः स्यादिति । अर्थवादानुपपत्तेरित्यस्यापरा व्याख्या-कर्मधारयपक्षे दीर्घसोमशब्दयोरुभयोरपि सामानाधिकरण्यात् स्वार्थ एव वादो भविष्यति । षष्ठीसमासपक्षे तु दीर्घशब्दस्य सोमशब्दार्थशेषत्वेन स्वार्थाभिधानात् स्वप्रधानभूतार्थवादानुपपत्तिर्भवेदिति । अर्थवादानुपपत्तेरिति पाठे क्रतुतो दीर्घत्व इति शेषो द्रष्टव्यः । उपपत्तिप्रकारस्तूक्त एव ॥

अथ पञ्चमं पदोत्तरं सूत्रं—

## संस्थासु कर्तृवद्धारणाविशेषात्* (३-३-२८)

इति ।

त्रिपदम् । ननु मा भूदग्निष्टोमसंस्थे ज्योतिष्टोमे निवेशः । उक्थ्यादिषु तु संस्थान्तरेष्वग्निष्टोमाद् दीर्घकालेषु कस्मान्न निवेक्ष्यत इति पदानि । तत इदमुत्तरम् । संस्थास्वपि कर्तृदैर्घ्य इवार्थवादोक्ते फलकयोरविश्लेषात्मके धारणेऽग्निष्टोमसंस्थातो विशेषाभावादर्थवादानुपपत्तिः समाना । तास्वपि दशमुष्टित्रिपर्वपरिमाणयोः शब्दत्वेन सोमस्य तावत्त्वादित्यर्थः । 'संस्थाश्च कर्तृवद्धारणाविशेषादि'ति चतुष्पदोपेते सूत्रपाठे व्याख्यातादेव धारणाविशेषात् संस्थाश्च न कर्तृदैर्घ्यवत् सन्तर्दननिमित्तं भवन्तीति व्याख्या कर्तव्या । न्यायसुधाकारस्तु—धारणार्थाविशेषादित्यर्थशब्दोपेतं चतुर्थं पदमपठत् । पुनः पुनरभिषूयमाणसोमधारणाख्ये सन्तर्दनप्रयोजने कर्तृदैर्घ्य इव संस्थास्वप्यविशेषादिति च तद्व्याचकार । तस्मात् कर्तृपक्षवत् संस्थापक्षस्याप्यनुपपन्नत्वाद्विवृद्धसोमेषु दीर्घतरेषु सत्राहीनेषु निवेशः सन्तर्दनस्य न्याय्य इति ॥

---

* 'णार्थाविशेषादि'ति भाष्यादिपाठः ।

एवं दूषितं संस्थानिवेशं समर्थयितुं षष्ठं सूत्रम्—

**उकूथ्यादिषु वार्थस्य विद्यमानत्वात् (३-३-२९)**

इति ।

चतुष्पदम् । वाशब्दः सत्रादिनिवेशं व्यावर्तयति । उकूथ्यादिसंस्थास्वेव निवेशो न्याय्यः । कुत इत्याह—अर्थस्य विद्यमानत्वादिति । दीर्घसोमशब्दार्थस्य दीर्घत्वविशिष्टसोमयागात्मकस्य संस्थास्वेव विद्यमानत्वादित्यर्थः । प्रदानाधिक्याच्च प्रदेयाधिक्यमर्थाद्भविष्यति, ततश्चाभिषवाधिक्याद्धारणार्थवादोऽप्युपपद्यते, तस्मादनुत्कर्षः सत्रादिष्विति ॥

अथ सप्तमं समर्थितं संस्थानिवेशं पुनरपि दूषयितुं सूत्रम्—

**अविशेषात् स्तुतिर्व्यर्थेति चेत् (३-३-३०)**

इति ।

पञ्चपदम् । तस्यार्थः—इति चेन्मन्यसे संस्थासु निवेश इति, तन्न । संस्थास्वपि धृत्वा इत्यर्थवादस्था स्तुतिर्व्यर्थैव स्यात् । ननु प्रदानविवृद्ध्या प्रदेयविवृद्ध्याक्षेपात् सार्थकत्वं स्तुतेर्भविष्यति, अत आह—अविशेषादिति । अस्य च धारणाविशेषेण पूर्वतरसूत्रोक्तेनापौनरुक्त्यार्थं सोमाविशेषादित्येवं व्याख्या कर्तव्या । प्रदानविवृद्ध्या सोमविवृद्धिस्तु दशमुष्टित्रिपर्वपरिमाणयोर्नियतत्वादशक्या कल्पयितुं प्रदानविवृद्धेस्तोयविवृद्ध्याप्युपपन्नत्वात् । तस्मादुत्कर्षः सत्रादिष्विति ॥

अथाष्टमं पुनर्दूषितं संस्थानिवेशं स्थापयितुं सूत्रम्—

**स्यादनित्यत्वात् (३-३-३१)**

इति ।

द्विपदम्। तस्यार्थः—संस्थासु स्यादेव निवेशः, न तु नियतपरिमाणत्वात् सोमस्य न स्यात्। कुत इत्याह—अनित्यत्वादिति। दशमुष्टित्रिपर्वनियतत्वस्य सोमपरिमाणस्यानित्यत्वादित्यर्थः। तच्च दीर्घपर्वग्रहणेन वा'वशिष्टानंशून्‌ध्यूहे'दित्यध्यूह्यमानानां वा परिमाणान्तरसम्भवेन पूर्वपरिमाणस्यातिक्रमितुं शक्यत्वात्। तस्मात् संस्थानिवेशो नानुपपन्नः। तदुपपत्तौ च ततोऽपि दीर्घतरेषु सत्राहीनेषु निवेशः कैमुतिकन्यायसिद्धो भवतीति। सूत्रे भाष्ये च संस्थाग्रहणमग्निष्टोमान्यमात्रोपलक्षणार्थत्वादतन्त्रं द्रष्टव्यमिति।

अत्र सन्तर्दनाधिकरणेऽष्ट सूत्राणि ॥

अथ द्वादशं संख्यायुक्ताधिकरणम्। तत्र ज्योतिष्टोमे प्रवर्ग्यं प्रकृत्य पठितं 'न प्रथमयज्ञे प्रवृञ्ज्यादिति'वाक्यमुदाहृत्य किमिदमप्रवृञ्जनं ज्योतिष्टोममात्रस्य धर्म उत तदीयस्याद्यप्रयोगस्यैवेति सन्दिह्य ज्योतिष्टोममात्रस्यैवेति पूर्वपक्षं वक्तुमाद्यं सूत्रं—

**संख्यायुक्तं क्रतोः प्रकरणात्स्यात् (३-३-३२)**

इति।

चतुष्पदम्। तस्यार्थः—प्रथमशब्दोपात्तादिसंख्यायुक्तमिदमप्रवृञ्जनं प्रवर्ग्यप्रतिषेधनं वा क्रतोर्ज्योतिष्टोमस्य सर्वप्रयोगावस्थस्य धर्मः स्यान्न-त्वाद्यप्रयोगमात्रस्य। कुत इत्याह—प्रकरणादिति। प्रकरणं हि सर्वप्रयोगावस्थस्य ज्योतिष्टोमस्येदम्। अतस्तदनुग्रह एवं सत्येव भवति नान्यथा। यज्ञशब्दसमानाधिकरणश्चायं प्रथमशब्दः। यज्ञशब्दश्च क्रतुवचनः प्रसिद्धः। तस्मादयमपि क्रतुवचनः प्राप्नोति। तथा वाक्यान्तरेऽपि 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्यो(तिष्टो)मः' इति प्रथमशब्दस्य ज्योतिष्टोमशब्दपर्यायत्वं विज्ञातम्। तस्मात् क्रतुधर्मोऽयं न प्रयोगधर्म इति ॥

अथ द्वितीयं सिद्धान्तसूत्रं—

नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य
तन्निमित्तत्वात् (३-३-३३)

इति ।

पञ्चपदम् । वाशब्दः क्रतुधर्मत्वं व्यावर्तयति । नैमित्तिकं निमित्तादागतमेवेदं ज्योतिष्टोमस्याप्रवृञ्जनं प्रवर्ग्यप्रतिषेधनं वा स्यान्न नित्यमिति प्रतिज्ञा । कस्मान्निमित्तादागतमित्याह—कर्तृसंयोगादिति । कर्तुरिदं प्रथममनुष्ठातृत्वेन संयोगान्निमित्तादागतमित्यर्थः । ततश्च प्रयोगधर्मोऽयमित्युक्तं भवति । प्रथमशब्दो ह्ययं कर्तुरप्रवृत्तपूर्वस्याद्यप्रवर्तनमभिधत्ते न कञ्चित् क्रतुम् । ननु निश्चितक्रतुवचनयज्ञशब्दसामानाधिकरण्याल्लिङ्गात् प्रथमशब्दस्यापि क्रतुवचनत्वं सिध्यति, अत आह—लिङ्गस्य तन्निमित्तत्वादिति । तच्छब्दः कर्तृसंयोगशब्दाभिहितं कर्त्राद्यप्रवर्तनाख्यं प्रयोजनं परामृशति । तेनायमर्थः—यज्ञशब्दसामानाधिकरण्यात्मकस्य ज्योतिष्टोमवाचित्वलिङ्गस्य यजनं यज्ञ इति भावव्युत्पत्त्या यज्ञशब्दस्य प्रयोगवाचित्वनिमित्तत्वान्न प्रथमशब्दक्रतुवाचित्वसाधकतेति । ननु यदि ज्योतिष्टोमस्य प्रथमप्रयोगविषयोऽयं प्रतिषेध इति कल्प्यते, ततोऽग्निष्टोमसंस्थे तस्मिन् प्राप्नोति, तस्यैव प्रथमप्रयोज्यत्वात् । तत्र चा'ग्निष्टोमे प्रवृणक्ती'ति क्वचिच्छाखायां तद्विधिश्रवणं विरुध्यते । तत्कथमत्र निर्वाहः । उच्यते—कामं तु योऽनूचानः स्यात् तस्य प्रवृञ्ज्यादिति वचनादनूचानप्रयोगविषयो विधिः, स्तद्व्यतिरिक्तप्रयोगविषयो निषेध इत्यधिकारिभेदाद् व्यवस्थासिद्धेर्निर्वाहो भविष्यतीति ।

अत्र संख्यायुक्ताधिकरणे द्वे सूत्रे ॥

अथ त्रयोदशमाद्यपौष्णाधिकरणम्। तत्र दर्शपूर्णमासप्रकरण-पठितं 'पूषा प्रपिष्टभागोऽदन्तको ही'ति वाक्यमुदाहृत्य किमिदं पूष्णो हविषः पेषणं प्रकृतौ विकृतौ वेति सन्दिह्य प्रकरणात् प्रकृताविति पूर्वपक्षं कृत्वा वाक्याद् द्विकृताविति सिद्धान्तं वक्तुं सूत्रं—

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्**
**प्रकृतौ (३-३-३४)**

इति।

षट्पदम्। तस्यार्थः—पूष्णः प्रकृतौ कस्यचिद्धविषो देवतात्वेना-चोदनात् प्राकृत्या देवतायाः पूषशब्देनाचोदनाद्वा पौष्णं पूषसम्बन्धि पेषणं विकृतौ प्रतीयेत यत्र विकृतौ पूषा देवता विद्यते, तत्रोत्कृष्य नीयेतेति।

यद्वोत्तरविचारार्थं प्राप्तिसूत्रमिदं मतम्।
सन्तर्दनन्यायतोऽस्य विकृत्यर्थत्वसिद्धितः॥

अत्राद्यपौष्णाधिकरण एकं सूत्रम्॥

अथ चतुर्दशं द्वितीयपौष्णाधिकरणम्। तत्र विकृतावुत्कृष्टं पेषणं किं चरुपुरोडाशपशुषु सर्वेषु कर्तव्यमुत चरावेवेति सन्दिह्य सर्वत्र कर्तव्यमिति पूर्वपक्षं वक्तुमाद्यं सूत्रं—

**तत्सर्वार्थमविशेषात् (३-३-३५)**

इति।

त्रिपदम्। तस्यार्थः—तत् पौष्णं पेषणं सर्वार्थं, सर्वेषां चरुपुरोडाश-पशूनां शेषभूतं प्रतीयेत न केवलं चरोः। कारणमाह—अविशेषादिति। सर्वेषामपि पूषदेवत्यत्वाविशेषादिति॥

अथ द्वितीयं सिद्धान्तसूत्रं—

### चरौ वार्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात् (३-३-३६)

इति।

अष्टपदम्। वाशब्दः सर्वार्थत्वं व्यावर्तयति। चरावेव पेषणं कर्तव्यं न पशुपुरोडाशयोः। अर्थोक्तमर्थादेव प्राप्तं हि पुरोडाशे पेषणम्, अन्यथा पुरोडाशानिष्पत्तेः। पशौ चार्थस्य हृदयाद्याकाररूपस्य विप्रतिषेधाद्विनाशप्रसङ्गान्न स्यादेव पेषणम्। आकारविनाशे च 'हृदयस्याग्रेऽवद्यती'त्यादि यथाश्रुतमवदानं न क्रियेत। तस्मात् पशुपुरोडाशयोर्विधानानर्हत्वाच्चरावेव पेषणं विधीयत इति॥

अथ तृतीयं परिचोदनासूत्रं—

### चरावपीति चेत् (३-३-३७)

इति।

चतुष्पदम्। तस्यार्थः-इति चेत्पश्यसि चरावेव पेषणमिति चरावपि पशाविवार्थविप्रतिषेधान्न स्यात् पेषणमित्यपिशब्दादनुषज्यते। विशदसिद्धौदनस्य चरुशब्दवाच्यत्वात् पेषणे सति पिष्टयवागूत्वापत्तेश्चरुशब्दार्थविप्रतिषेधः स्यात्। तस्मात्तत्रापि पेषणविधिरनुपपन्न एवेति॥

अथ चतुर्थमेतत्परिहारसूत्रं—

### न पक्तिनामत्वात् (३-३-३८)

इति।

द्विपदम्। तस्यार्थः—नास्ति पशाविव चरावर्थविप्रतिषेध इति नञा प्रतिज्ञायते। तत्र हेतुः—पक्तिनामत्वादिति। पक्तिविशेषस्यानवस्रावितान्तरूष्मपाकात्मकस्य नामत्वाद्वाचकत्वाच्चरुशब्दस्येत्यर्थः। ततश्च विशदौ-

दनपिष्टकचरुप्रयोगेऽपि नानेकार्थत्वं चरुशब्दस्य भवतीति चरावर्थविप्रतिषेधाभावाद्युक्तमेव पेषणमिति ॥

अत्र द्वितीयपौष्णाधिकरणे चत्वारि सूत्राणि ॥

अथ पञ्चदशं तृतीयपौष्णाधिकरणम् । तत्र चरावेव पेषणमिति स्थिते किं केवलपूषदेवत्य एवैतदुतैन्द्रापौष्णादावन्यसहितपूषदेवत्येऽप्यस्तीति सन्दिह्य केवलतद्देवत्य एवेति सिद्धान्तेनोपक्रमितुमाद्यं सूत्रम् —

**एकस्मिन्नेकसंयोगात् (३-३-३९)**

इति ।

द्विपदम् । तस्यार्थः—'पूषा प्रपिष्टभाग' इत्येकस्य केवलस्य पूष्णः पेषणसंयोगश्रवणादेकस्मिन् केवल एव पूषणि देवताभूते सति चरौ पेषणं स्यान्नान्यसहिते । तत्र हि तदश्रुतमेव भवतीति ॥

अथ द्वितीयं सिद्धान्ताभ्युच्चयसूत्रं —

**धर्मविप्रतिषेधाच्च (३-३-४०)**

इति ।

द्विपदम् । तस्यार्थः—ऐन्द्रापौष्णे हीन्द्रस्यापेषणं धर्मः, पूष्णः पेषणम् । तत्र तयोर्धर्मयोर्विप्रतिषेधः पाके भवति । विवक्षितत्वाच्च चर्वेकत्वस्यैकस्मिन् पात्रे पाकः कर्तव्यः । ततश्च पिष्टस्य यवागूत्वमपिष्टस्यामत्वं पक्षे प्राप्नोति । अत एवंविधाद्धर्मविप्रतिषेधादप्येकस्मिन् पूषणि देवताभूते पेषणमिति चशब्देनानुकृष्यते ॥

अथ तृतीयं पूर्वपक्षसूत्रम् —

**अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् (३-३-४१)**

इति ।

पञ्चपदम् । अपि वेति सिद्धान्तं व्यावर्तयति । सद्वितीयेऽप्यन्येन पूषणि देवताभूते स्यादेव पेषणमिति ब्रूमः । कुत इत्याह—देवतानिमित्तत्वादिति । पूषदेवतासद्भावनिमित्तं ह्येतत्पेषणम् । स चैन्द्रापौष्णेऽप्यस्ति। ततश्च पूषभागस्य पेषणावश्यंभावात् कांस्यभोजिन्यायेनेन्द्रभागेऽपि पिष्यमाणे न कश्चिद्दोषो भवति । अर्धमेव वात्र पेष्टव्यं नार्धान्तरम्। पाकदोषस्तु केनचित् कौशलेन परिहरणीयः । ऐकपात्र्यं वा गुणत्वादनादरणीयमिति मन्यते ॥

अथ चतुर्थं पूर्वपक्षाभ्युच्चयसूत्रं—

## लिङ्गदर्शनाच्च (३-३-४२)

इति ।

द्विपदम् । इतश्च सद्वितीये स्यादिति चशब्देनानुषज्यते । यतो'ऽदन्तको ही'ति' दन्ताभावो हेतुः पेषणं पूषधर्मं दर्शयति । न चेन्द्रसाहित्ये तस्य दन्ता जायन्ते । अतो हेतुसामर्थ्यादन्यसाहित्येऽपि पूष्णः पेषणमेव धर्मः प्राप्नोतीत्येकं लिङ्गम् । तथा 'सौमापौष्णं* चरुं निर्वपेन्नेमपिष्टं पशुकाम' इति सौमापौष्णे* नेमपिष्टतानुवाददर्शनं द्वितीयं लिङ्गम् । एव'मर्धं पिष्टं भवत्यर्धमपिष्टं द्विदेवत्यत्वाये'त्यन्यत्रापि द्विदैवत्ये पेषणदर्शनं तृतीयं लिङ्गम् । एतच्च लिङ्गत्रयमत्र परिहारसूत्रानुसारेण द्रष्टव्यम् ॥

अथ पञ्चमं नेमपिष्टत्वोक्तेरालिङ्गत्वशङ्कोत्तरं सूत्रं—

## वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति (३-३-४३)

इति ।

* 'सोमपौष्ण'मित्येव मातृकासु दृश्यते ।

दशपदम्। एषा चात्र शङ्का-ननु सोमापौष्णे विशेषविधिरेवायं भवतु, अतोऽन्यत्र विपर्ययसाधकत्वादलिङ्गं नेमपिष्टत्वकीर्तनं द्विदेवत्यान्तरे पेषणसद्भावस्येति। तत इदमुत्तरम्। यदि वचनाद्वचनेन विशेषविधिरूपेण सौमापौष्णे नेमपिष्टत्वविधानमिदमित्यङ्गीक्रियते, तत एकत्र विधावनेकोद्देशासम्भवात् सौमापौष्णोद्देशेन नेमपिष्टत्वे विधीयमाने सर्वपेषणं सर्वेषां पशुपुरोडाशादीनामपि सौमापौष्णानां पेषणं नेमपिष्टत्वात्मकं प्रसज्येत। चरुशब्दस्त्वेकदेशानुवादमात्रार्थो भवेत्। कारणमाह—तं प्रति शास्त्रवत्त्वादिति। यस्माच्चं सर्वं चर्वविशेषितं सौमापौष्णयागं प्रति, तदा पेषणस्य शास्त्रवत्त्वं शास्त्रेण विधीयमानत्वं भवति, न तु चरुविशेषितं सौमापौष्णयागविशेषं प्रति। ततश्चाभिमतश्चरुनियमः पेषणस्य न सिद्ध्यतीत्याह—अर्थाभावाद्धि चरावपेषणं भवतीति। हिशब्दोऽवधारणार्थ उपपादनार्थो वा द्रष्टव्यः। अस्य च सूत्रांशस्य व्याख्यानं वार्तिकस्थमेव लिख्यते—'विशेषणार्थाभावाद्ध्येतस्मिन् पक्षे चरावपेषणं प्राप्नोती'ति। तदेवमजिताकारो व्याचकार—'चरुमिति विशेषणस्यार्थः पशुपुरोडाशव्यवच्छेदः, तस्याभावाच्चरावपेषणं चरावेव यत्पेषणं तदभावः स्यादि'ति। तद्व्याख्यानं च नारायणेनैवं कृतं विशेषणार्थाभावादित्यत्र। 'यद्विशेषणं यश्च तेनार्थस्तदुभयमुक्त्वा तदभावश्च पेषणचरुनियमाभावे हेतुर्न तु चरावभाव इति तदभावहेतुकं चरावपेषणम्। पेषणस्य चरुनियमाभावात्मकं व्याख्यात'मिति। एवं चापेषणशब्दोऽयं पेषणाभाववचनः सन्नियतपेषणाभाववचनो व्याख्येयः। चरावनियतपेषणं भवतीति चरावभिमतस्य नियतपेषणस्याभावो भवतीत्यर्थः। तस्मान्न सौमापौष्णोद्देशेन

नेमपिष्टत्वविधिपरमेतद्वाक्यं, किं तु चरुदेवतासम्बन्धविधिपरमेव। ततश्च नेमपिष्टत्वोक्तेरनुवादत्वादुपपद्यत एव लिङ्गत्वमिति सद्वितीयेऽपि पूषणि पेषणं कर्तव्यमिति युक्तमेवोक्तमिति ॥

अथ षष्ठं सिद्धान्तसूत्रम् —

## एकस्मिन् वार्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् (३-३-४४)

इति।

अष्टपदम्। वाशब्दः पक्षं व्यावर्तयति। एकस्मिन्ननन्ययुक्त एव पूषणि देवताभूते पेषणं कर्तव्यं न सद्वितीये। कुत इत्याह—अर्थधर्मत्वादिति। अर्थशब्देनात्र यागोऽपूर्वं वोच्यते। देवतातद्भागधर्मत्वासम्भवेन पूषदेवत्ययागात्मकस्य तदपूर्वात्मकस्य वार्थस्य धर्मभूतत्वात् पेषणस्येत्यर्थः। न हि चतुर्थ्यन्तशब्दव्यतिरेकेण विग्रहवती देवता नाम काचिदस्ति। यदि त्वस्ति, तथाप्युद्दिश्यमानमात्रत्वेन परिगृहीतत्वाभावान्न तस्या भागः सम्भवति, भोक्तृत्वस्य नवमे निषेधात्। तस्माद्देवतातद्भागधर्मत्वानुपपत्तेर्यागधर्मस्तद्द्वारेणापूर्वधर्मो वा पेषणमभ्युपगन्तव्यमित्यैन्द्रापौष्णे सत्यपि पूषणि पेषणं न प्राप्नोति। अस्तु वा परिग्रहाभावेऽप्युद्दिश्यमानत्वमात्रेण देवताया भागव्यपदेशस्तद्धर्मत्वं वा पेषणस्य। तथाप्यैन्द्रापौष्णादौ सद्वितीये न स्यादित्याह—ऐन्द्राग्नवदुभयोर्न स्यादिति। यथैवोभयोरिन्द्राग्न्योर्देवताभूतयोरैन्द्राग्ने पुरोडाशे ग्रहे च केवलस्याग्नेरिन्द्रस्य चाचोदितत्वाच्चतुर्थीकरणोपदेशदक्षमन्त्रगताभ्यामाग्नेयेन्द्रपीतशब्दाभ्यां ग्रहणं

नास्ति, तद्वदुभयोरिन्द्रपूष्णोर्देवताभूतयोरैन्द्रापौष्णे केवलस्य पूष्णोऽचोदितत्वात् तद्भागधर्मः पेषणं न स्यादित्यर्थः ॥

अथ सप्तमं पूर्वपक्षोक्तेषु त्रिषु लिङ्गेष्वाद्यलिङ्गपरिहारार्थं सूत्रं—

हेतुमात्रमदन्तत्वम् (३-३-४५)

इति ।

द्विपदम् । तस्यार्थः—

अदन्तत्वं हेतुमात्रं स्तुतिमात्रं विवक्षितम् ।
हेतुवन्निगदस्यार्थवादत्वस्य स्थितत्वतः ॥

तस्मान्नादन्तको हीति दन्ताभावस्य हेतुता ।
विधीयते पूषभागपेषणायात्र किं पुनः ॥

तेन ह्यन्नं क्रियत इत्यत्रेवात्रापि कल्प्यते ।
हेतुना द्वारभूतेन विधेयस्येप्सिता स्तुतिः ॥

अथाष्टमं द्वितीयतृतीयलिङ्गपरिहारार्थं सूत्रं—

वचनं परम् (३-३-४६)

इति ।

द्विपदम् । तस्यार्थः—यत्परं लिङ्गद्वयमुक्तं 'सोमापौष्णं चरुं निर्वपेन्नेमपिष्टमि'ति 'अर्धं पिष्टं भवत्यर्धमपिष्टं द्विदेवत्यत्वाये'ति चान्यसहिते पूषणि पेषणं दर्शयतीति, तत् प्राप्त्यभावाद्वचनमित्यङ्गीकृत्य परिहरणीयम् ।

अनेकार्थविधिर्दोषः सति गत्यन्तरे मतः ।
तदभावेऽर्थवत्त्वाय वाक्यस्य स गुणो भवेत् ॥

विशिष्टविध्याश्रयणाद्वाक्यभेदश्च नास्त्यतः ।
यत्रास्ति वचनं तत्र द्विदेवत्येऽस्तु पेषणम् ॥

अत्र तृतीयपौष्णाधिकरणेऽष्ट सूत्राणि ॥

इति त्रैविद्येशापरनामधेयश्रीमदृषिपुत्र-
श्रीपरमेश्वरविरचिते सूत्रार्थसङ्ग्रहे
तृतीयस्याध्यायस्य
तृतीयः पादः ॥

---

# APPENDIX I

## सूत्रानुक्रमणी।

| सूत्राणि | पुटम् |
|---|---|

| सूत्राणि | पृष्ठम् | सूत्राणि | पृष्ठम् |
|---|---|---|---|
|  |

# APPENDIX II

## उदाहृतवैदिकवाक्यानुक्रमणी ।

---:o:---

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| १ | अंशुं गृह्णाति | २२२, २२३ | तै. सं. ३-२-४. |
| २ | अक्ताः शर्करा उपदधाति | १६३ | तै. ब्रा. ३-१२-५. |
| ३ | अक्षैर्दीव्यति | १६४ | |
| ४ | अग्निः पूर्वेभिः | १७३ | ऋक्. सं. १-१-१. |
| ५ | अग्निमीळे पुरोहितं | १७३ | ऋक्. सं. १-१-१. |
| ६ | अग्निर्ज्योतिर्ज्योतिः सूर्यः | ७० | तै. ब्रा. २-१-२; आप. श्रौ. ६-२-१०-९. |
| ७ | अग्निर्मूर्धा | ८३ | ऋक्. सं. ८-४४-१६; तै. सं. १-५-५, ४-४-१; वा. सं ३-१२, १३-१४, १५-२०; का. सं. १६-४१; तै. ब्रा. ३-५-७. |
| ८ | अग्निर्वै ब्राह्मणः | १४० | तै. सं. ५-२-८. |
| ९ | अग्निहोत्रं जुहोति | १२१, १२७, १९२, २०४ | तै. सं. १-५-९. |
| १० | अग्नीदग्नीन् विहर | ८१, ८९, १७५ | तै. सं. ६-३-१; आप. श्रौ. १२-१७-१९. |
| ११ | अग्नीनादधीत | १९४ | |
| १२ | अग्नीन् सम्मार्ष्टि | १९९ | |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| १३ | अग्नीषोमाविदं हविरजुषेतां | २२१ | तै. ब्रा. ३-५-१०. |
| १४ | अग्नीषोमीयं पशुमालभेत | १९४ | |
| १५ | अग्नीषोमीयमेकादशकपालं | २२८ | तै. सं. १-८-८, २-५-२. |
| १६ | अग्नेः स्तोत्रं | २२६ | |
| १७ | अञ्जलिना सक्तून् प्रदाव्ये | १४४ | तै. सं. ३-३-८. |
| १८ | अथातोऽग्निमग्निष्टोमेन | २२९ | |
| १९ | अथैष ज्योतिरथैषः | २०१, २०७ | ता. ब्रा. १६-८-१. |
| २० | अथैष सर्वेभ्यो ज्योतिष्टोमः | ७३ | |
| २१ | अदितिर्द्यौरदितिः | ८९ | ऋक्. सं. १-८९-१०; वा. सं. २५-२३; का. सं. २७-१७; तै. आ. १-१३-२. |
| २२ | अधीत्य स्नायात् | ७ | |
| २३ | अनृतवादिनी वाक् | ६४, ६० | |
| २४ | अपशवो वा अन्ये | १४१ | तै. सं. ५-२-९. |
| २५ | अप्सुयोनिर्वा अश्वः | ७७ | तै. सं. ५-२-१२ |
| २६ | अभि त्वा शूर नोनुमः | १९९ | ऋक् सं. ७-३२-२२; तै. सं २-४-१४; वा. सं. २७-३५; का. सं २९-४०; उ. आ. १-१-११. |
| २७ | अमावास्यायाममावास्यया | १०५, २२९ | |
| २८ | अमुष्मिन् लोकेऽस्ति वा | ६४ | तै. सं. ७-१-२. |
| २९ | अम्यक् (सात) | ८६ | ऋक्. सं. १-१६९-३. |
| ३० | अयाज्या वै निगदाः | १७६ | |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| ४९ | आश्विनो दशमो गृह्यते | १९७ | |
| ५० | आस्य प्रजायां वाजी जायते | ६४, ७२ | तै. सं. १-७-४. |
| ५१ | इडो यजति | १८४ | तै. सं. २-६-१. |
| ५२ | इन्द्रस्य नु वीर्याणि प्रवोचं | ११५ | ऋक्. सं. १-३२-१; तै. ब्रा. २-५-४, २-८-४. |
| ५३ | इमामगृह्णन् | ८३ | तै. सं. ५-१-२; वा. सं. २२-२; का. सं. १४-२. |
| ५४ | इषे त्वेति शाखां | १७८ | आप. श्रौ. १-१-१-१०. |
| ५५ | इष्टकाभिरग्निं चिनुते | ६६ | |
| ५६ | ईषामालभेत | २१८ | |
| ५७ | उग्राणि वा एतानि | १८९ | |
| ५८ | उपसद्भिश्चरित्वा मासं | २२७ | |
| ५९ | उपांशुयाजमन्तरा यजति | १९१ | तै. सं २-६-६. |
| ६० | उरु प्रथस्वेति पुरोडाशं प्रथयति | ८३, ८८ | आप. श्रौ. १-८-२५-३. |
| ६१ | ऊर्जे त्वेत्यनुमार्ष्टि | १७८ | आप. श्रौ. १-१-१०. |
| ६२ | ऊर्जोऽवरुध्यै | ७८ | तै. सं. २-१-१. |
| ६३ | ऊर्ध्वमाघारयति | १९२ | |
| ६४ | ऋचा यजन्ति | १७६ | |
| ६५ | ऋत्विजो वृणीते | १०४, १५४ | |
| ६६ | एकस्मै वा अन्ये यज्ञक्रतवः | ७३ | |
| ६७ | एकां गां दद्यात् | ११९ | |

| क्रमाङ्कः | वाक्यानि | पृष्ठसंख्या | आकरः |
|---|---|---|---|
| ८५ | को हि तद्वेद | ७१, ७२ | तै. सं. ६-१-१. |
| ८६ | गोदोहनेन पशुकामस्य | १३८ | |
| ८७ | ग्रीष्मे राजन्यः | २१४ | तै. ब्रा. १-१-२. |
| ८८ | चतुरो मुष्टीन्निर्वपति | २१९ | |
| ८९ | चतुर्दश पौर्णमास्यां | १६९ | |
| ९० | चत्वारि शृङ्गा | ८४, ८९ | ऋक्. सं. ४-५८-३; तै. आ. १०-२०-२. |
| ९१ | चरुमुपदधाति | २२१, २२२ | |
| ९२ | चित्पतिस्त्वा पुनातु | १८१ | तै. सं. १-२-१. |
| ९३ | चित्रया यजेत पशुकामः | २३, १११ | तै. सं. २-४-६. |
| ९४ | छागस्य वपाया मेदसः | १९५ | तै. ब्रा. ३-६-८. |
| ९५ | जामि वा एतद्यज्ञस्य | १९०, १९१ | तै. सं. २-६-६. |
| ९६ | तनूनपातं यजति | १८४ | तै. सं. २-६-१. |
| ९७ | तप्ते पयसि दध्यानयति | २०३ | |
| ९८ | तरति ब्रह्महत्यां | ६९ | तै. सं. ५-३-१२. |
| ९९ | तरति मृत्युं | ७३ | |
| १०० | तस्माद्धूम एवाग्नेः | ७० | तै. ब्रा. २-१-२. |
| १०१ | तस्माद्बर्हिषि रजतं | ६९ | तै. सं. १-५-१. |
| १०२ | तस्मिन् सीद | १७८ | तै. ब्रा. ३-७-५. |
| १०३ | तस्याघारमाघार्य | १२४ | |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| १०४ | तां चतुर्भिः | ८३,८७ | तै. सं. ५-१-१; श. ब्रा. १-३-१-३९. |
| १०५ | ताभ्यामेतमग्नीषोमीयं | १८९ | तै. सं. २-५-२. |
| १०६ | तावब्रूतामग्नीषोमावाज्यस्य | १८९ | |
| १०७ | तिस्र आहुतीर्जुहोति | २०० | तै. सं. २-३-९; तै. ब्रा. १-३-१०. |
| १०८ | तेजो वै घृतं | १४३ | तै. सं. ४-३-१०. |
| १०९ | तेन ह्यन्नं क्रियते | ७८,८० | |
| ११० | त्रिंशद्वर्षाणि दर्शपूर्णमासाभ्यां | २१७ | |
| १११ | त्रिवृदग्निष्टुदग्निष्टोमः | २०६ | |
| ११२ | त्रिवृद्बहिष्पवमानं | १०१ | ता. ब्रा. १९-११-२, २०-१-१. |
| ११३ | त्वाष्ट्रं पात्नीवतमालभेत | २२२ | |
| ११४ | दक्षिणाचारेण कर्तव्यं | ९७ | |
| ११५ | दध्ना जुहोति | १९२,२०४ | |
| ११६ | दध्नेन्द्रियकामस्य | २०५ | तै. ब्रा. २-१-५. |
| ११७ | दर्शपूर्णमासाभ्यां स्वर्गकामः | १२१,१८६ | श. ब्रा. २-६-४-१७. |
| ११८ | दशैतानध्वर्युः | १९७ | |
| ११९ | दाक्षायणयज्ञेन | २१५ | तै. सं. २-५-५. आप. श्रौ. ३-९-१७. |
| १२० | दाक्षिणानि जुहोति | १८३ | |
| १२१ | दिक्ष्वतीकाशान् करोति | ७१ | तै. सं. ६-१-१. |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| १३७ | निष्केवल्यं शंसति | १५८, १६४ | |
| १३८ | नैवारश्चरुर्भवति | २२१ | तै. ब्रा. १-३-७. |
| १३९ | पञ्चदशान्याज्यानि | १२१, १२२ | ता. ब्रा. १९-११-२, २०-१-१. |
| १४० | परिधीन् सम्मार्ष्टि | १५५ | |
| १४१ | परिश्रिते याजयेत् | २२० | तै. सं. २-२-१०. |
| १४२ | पर्यग्निकृतं पात्नीवतं | २२२, २२३ | तै. सं. ६-६-६. |
| १४३ | पशुबन्धयाजी सर्वान् | ६९, ७३ | |
| १४४ | पशुमालभेत | ७३ | |
| १४५ | पुरस्तात्प्रतीचीनं | १३१ | तै. सं. ५-२-९. |
| १४६ | पुरोडाशं पर्यग्नि करोति | १५५ | श. ब्रा. १-२-३-१३. |
| १४७ | पूर्णाहुतिं जुहोति | ७३ | तै. ब्रा. ३-८-१०, ३-८-१२. |
| १४८ | पूर्णाहुत्या सर्वान् | ६९, ७३ | |
| १४९ | पृष्ठैः स्तुवते | १५८, १६४ | |
| १५० | पौर्णमास्यां पौर्णमास्या | १८७, २२९ | |
| १५१ | प्रउगं शंसति | १५८, १६४, १६६, १६७ | |
| १५२ | प्रवरे प्रव्रियमाणे | ७१ | मै. सं. १-४-११. |
| १५३ | प्रससाहिषे पुरुहूत | १६२ | तै. सं. ३-४-११; तै. ब्रा. २-६-९. |
| १५४ | प्रस्तरमुत्तरं बर्हिषः | १३९ | तै. सं. २-६-५. |
| १५५ | प्राचीनप्रवणे वैश्वदेवेन | १०९, १३३ | आप. श्रौ. ८-१-५. |
| १५६ | प्राणभृत उपदधाति | १४२ | तै. सं. ५-२-१०. श. ब्रा. ८-१-१. |

| क्रमाङ्कः | वाक्यानि | पृष्ठसंख्या | आकरः |
|---|---|---|---|
| १९७ | यदि रथन्तरसामा सोमः | २१० | |
| १९८ | यदि राजन्य ऐन्द्रं | २१२ | |
| १९९ | यदि वैश्यो वैश्वदेवं | २१२ | |
| २०० | यवमयश्चरुर्भवति | ९९ | |
| २०१ | यस्मिन् जात एतामिष्टिं | १३९ | तै. सं. २-२-५. |
| २०२ | याते अग्नेऽयाशया | १८० | तै. सं. १-२-११. |
| २०३ | या ते अग्ने रजाशया | १८० | तै. सं. १-२-११. |
| २०४ | याते अग्ने हराशया | १८० | तै. सं. १-२-११. |
| २०५ | यावज्जीवं दर्शपूर्णमासाभ्यां | २२९ | |
| २०६ | यो विदग्धः स नैर्ऋतः | ७७ | तै. सं. २-६-३. |
| २०७ | यो वृष्टिकामो योऽन्नाद्यकामः | २०७, २०८ | |
| २०८ | रथन्तरं पृष्ठं भवति | २१२ | |
| २०९ | राजा राजसूयेन | २१२ | |
| २१० | वत्समालभेत | २२० | तै. सं. २.१-४. |
| २११ | वसन्ताय कपिञ्जलान् | १७० | वा.सं. २४-२०;का.सं.२६-२४. |
| २१२ | वसन्ते ब्राह्मणोऽग्निमादधीत | २१४ | तै. ब्रा. १-१-२. |
| २१३ | वसन्ते वैश्वदेवेन | १३३ | |
| २१४ | वाचा विरूपनित्यया | ९७ | ऋक्. सं. ८-७५-६; तै. सं. २-६-११. |
| २१५ | वायुरापद्यते शब्दतां | ५६ | |
| २१६ | वाराही उपानहौ | ९९ | तै. ब्रा. १-७-९. |
| २१७ | वृता यजन्ति | १०४ | |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| २१८ | वेदो ददातु वाजिनं | ७२ | तै. सं. १-६-४, १-७-४. |
| २१९ | वैतसे कटे प्राजापत्यान् | ९९ | |
| २२० | वैश्वदेवं चरुं | २१२ | |
| २२१ | वैश्वदेवेन यजते | १३२ | तै. ब्रा. १-४-१०. |
| २२२ | वैश्वानरं द्वादशकपालं | १३४ | तै. सं २-२-५; आप. श्रौ. ९-८-२६-४. |
| २२३ | वैसर्जनहोमीयं वासः | ९५ | |
| २२४ | व्रीहीनवहन्ति | १५४, १५६ | |
| २२५ | शतं हिमाः शतं वर्षाणि | ९२ | श. ब्रा. २-३-४-११. |
| २२६ | शरदि वैश्यः | २१४ | तै. ब्रा. १-१-२. |
| २२७ | शस्त्रस्य शस्त्रमसि | ११७ | तै. सं. ३-२-७. |
| २२८ | शुन्धध्वं दैव्याय | ३२७ | तै. सं १-१-३, १-१-५; तै. ब्रा. ३-२-३, ३-२-५. |
| २२९ | शूर्पेण जुहोति | ७८, ८० | तै. ब्रा. १-६-५. |
| २३० | शृणोत ग्रावाणः | ८९ | तै. सं. १-३-१३. |
| २३१ | शेषात् स्विष्टकृते समवद्यति | २२२ | |
| २३२ | शोभतेऽस्य मुखं | १४, ७२ | ता. ब्रा. २०-१६-१. |
| २३३ | श्येनचितं चिन्वीत | ११६ | तै. सं. ५-४-११. |
| २३४ | श्येनेनाभिचरन् यजेत | १२५ | |
| २३५ | षड् देया | ११५ | |
| २३६ | स आत्मनो वपां | ६३, ६९ | तै. सं. २-१-१. |
| २३७ | स एष यज्ञायुधी यजमानः | ३३ | |
| २३८ | सक्तून् जुहोति | १५७ | |

| क्रमाङ्कः | वाक्यानि | पृष्ठसंख्या | आकरः |
|---|---|---|---|
| २३९ | स तृतीयो हूयते | १९७ | |
| २४० | सन्ते प्राणो वायुना | १८९ | तै. सं. १-३-८; वा.सं. ६-१०; का. सं- ६-१२; आप. श्रौ. ७-९-१४-२. |
| २४१ | सन्दंशेनाभिचरन् यजेत | १२५ | |
| २४२ | सप्तदश प्राजापत्यान् | २०१ | तै. ब्रा. १-३-४. |
| २४३ | सप्तदशानि पृष्ठानि | १२१, १९२ | ता.ब्रा. १९.१९-२, २०-१.१. |
| २४४ | समिधो यजति | १०४, १९४, १८६ | तै. सं. २-६-१. |
| २४५ | समे दर्शपूर्णमासाभ्यां | १२१, २२९ | |
| २४६ | सर्वस्मै वा एतद्यज्ञाय | १२४ | तै. ब्रा. ३-३-५. |
| २४७ | सर्वहुतं करोति | ११९ | |
| २४८ | सर्वा दाशतयीरनुब्रूयात् | १६४ | |
| २४९ | सार्कं प्रस्थायीयेन | २१८ | तै. सं. २-५-४; आप. श्रौ. ३-५-१६-११. |
| २५० | सा मे सत्याशीः | १६७ | तै. सं. ३-२-७. |
| २५१ | सा वा एषा सर्वदेवत्या | १६० | तै. सं. ३-४-३. |
| २५२ | सूर्यो ज्योतिर्ज्योतिरग्निः | ७० | तै. ब्रा. २-१-२; आप. श्रौ. ६-२-१०-९. |
| २५३ | सृण्येव | ८६ | ऋक्. सं. १०-१०६-६. |
| २५४ | सृष्टीरुपदधाति | १४१ | तै. सं. ५-३-४. |
| २५५ | सोमारौद्रं चरुं निर्वपेत् | २२० | तै. सं २-२-१०. |
| २५६ | सोमेन यजेत | १८३, १९४, १९९ | आप. श्रौ. ८-२१-२. |
| २५७ | सोऽरोदीद्यदरोदीत् | ६३, ६९ | तै. सं. १-५-१. |
| २५८ | सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः | २१८ | |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| २५९ | स्तुतस्य स्तुतमसि | १६७ | तै. सं. ३-२-७. |
| २६० | स्तेयं मनः | ६४, ७० | |
| २६१ | स्योनं ते सदनं करोमि | १७८ | तै. ब्रा. ३ ७-५; आप. श्रौ. २-३-१०-६. |
| २६२ | स्रुचः सम्मार्ष्टि | | तै. ब्रा. ३-३-१. |
| २६३ | स्रुवेणावद्यति | १४४ | |
| २६४ | स्वधितिनावद्यति | १४४ | |
| २६५ | स्वाहाकारं यजति | १८४ | तै. सं. २-६-१. |
| २६६ | हस्तेनावद्यति | १४४ | |
| २६७ | हिरण्यं निधाय चेतव्यं | ७५ | तै. सं. ५. २७-७. |
| २६८ | हिरण्यं हस्ते भवति | ८० | मै. सं. ४-८-२-३. |
| २६९ | हिरण्यमात्रेयाय ददाति | १८३ | |
| २७० | हीषिति वृष्टिकामाय | २०७ | |
| २७१ | हृदयमुपांशुयाजः | १९२ | |
| २७२ | हृदयस्याग्रेऽवद्यति | १९४ | तै. सं. ६-३-१०; आप. श्रौ. ७-७-२४-२. |

# APPENDIX III

## स्मृतवाक्यानि ।

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| १ | अङ्गानि वेदाश्चत्वारः | २ | विष्णुपुराणम् |
| २ | अतः शब्दाङ्गस्य | १० | भाष्यम् |
| ३ | अथवा द्वयमेवैतत् | ९ | बृहट्टीका |
| ४ | अदेवताकत्वस्य | २२४ | न्यायसुधा |
| ५ | अनुमानं ज्ञात | २४ | भाष्यम् |
| ६ | अभावोऽपि | ३२ | ,, |
| ७ | अर्थापत्तिरपि | ३० | ,, |
| ८ | अस्ति चेद्दर्शपूर्ण | २३५ | तन्त्रवार्तिकम् |
| ९ | आचारश्चैव साधूनां | ९९ | मनुस्मृतिः २-६. |
| १० | आयुर्वेदो धनुर्वेदः | २ | विष्णुपुराणम् |
| ११ | इको यणचि | १४ | पाणिनिसूत्रं (६-१-७७) |
| १२ | इषेरनिच्छार्थस्य | १३ | पा०. वा. (३-३-१०७) |
| १३ | उपमानमपि | २९ | भाष्यम् |
| १४ | उपाध्यायेन शिष्यस्य | ६७ | अजिता |
| १५ | कर्मणि हनः | ११६ | पाणिनिसूत्रं (३-२-७६) |
| १६ | कर्मण्यग्न्याख्यायां | ११६ | ,, (३-२-९१) |

| क्रमाङ्कः | वाक्यानि | पुटसंख्या | आकरः |
|---|---|---|---|
| ३८ | प्रकारवाचिनेति | १४३ | न्यायसुधाकारः |
| ३९ | प्रतिषेधे त्वधर्मः | १० | बृहट्टीका |
| ४० | प्रमाणत्वाप्रमाणत्वे | ४९ | विभ्रमविवेकः |
| ४१ | प्राप्ते कर्मणि | २०७ | तन्त्रवार्तिकम् |
| ४२ | भावप्रधानमाख्यातं | १९१ | यास्कनिरुक्तम् |
| ४३ | मन्त्रब्राह्मणयोः | १०३ | शुक्लयजुःप्रातिशाख्यं—प्रतिज्ञासूत्रपरिशिष्टं १. क. २. सू; आप. परि. सू. १. ४३. |
| ४४ | माता भस्त्रा पितुः | ७१ | स्मृतिः |
| ४५ | मिथः सहप्रदाने | १३४ | तन्त्रवार्तिकम् |
| ४६ | यच्चोक्तं वृत्तिकार | ४९ | विभ्रमविवेकव्याख्या (परमेश्वरकृता) |
| ४७ | यत्प्रसक्त्या यो विचारः | २७६ | ... |
| ४८ | यदा तु सम्बन्ध | १८ | बृहट्टीका |
| ४९ | यदैकस्मात् | १४७ | भाष्यम् |
| ५० | यद्विशेषणं | २४५ | विजया (अजिताव्याख्या नारायणकृता) |
| ५१ | यावदेकं श्रुतौ कर्म | ९६ | तन्त्रवार्तिकम् |
| ५२ | वाक्येन वेदसंयोगात् | ३१५ | अजिता |
| ५३ | वायुरापद्यते | ५६ | शीक्षाकाराः |
| ५४ | विशेषणार्थो | २४५ | तन्त्रवार्तिकम् |
| ५५ | विसंवादो | १७ | विजयाकारः |

| क्रमाङ्कः | वाक्यानि | पृष्ठसंख्या | आकरः |
|---|---|---|---|
| ५६ | शाक्यादयश्च सर्वत्र | ९६ | तन्त्रवार्तिकम् |
| ५७ | शास्त्रं शब्दविज्ञानात् | २७ | भाष्यम् |
| ५८ | शास्त्रस्था प्रतिपत्तिर्या | १०१ | तन्त्रवार्तिकम् |
| ५९ | संयोगः प्रधानात् | १३९ | ,, |
| ६० | संयोग इति संशब्दस्य | १३९ | न्यायसुधा |
| ६१ | सत्वप्रधानानि | १५० | यास्कनिरुक्तम् |
| ६२ | साधनानुरूपत्वात् | ७४ | तन्त्रवार्तिकम् |
| ६३ | स्मृत्याचारविरोधे वा | १०० | ,, |

# APPENDIX IV

## स्मृतग्रन्थादिनामानि ।

—:०:—

# शुद्धिपत्रिका ।

| पार्श्वम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १९ | अङ्ग! सूत्र | अङ्गसूत्र |
| | २६ | निगुजुम्भ | निजुगुम्भ |
| ५. | १९ | मन्त्राणम | मन्त्राणाम |
| ६ | १० | अमशेष | अशेष |
| | २६ | (ती ? वत् ) | (ती ? त् ) |
| १७ | १ | मर्थं | मर्थ्यं |
| ,, | ,, | जिज्ञिपत् | जिज्ञपत् |
| २२ | २२ | नोर्थिता | नोत्थिता |
| २६ | १४ | सिद्धोनै | सिद्धोऽनै |
| ३१ | २१ | कत्वाच | कत्वात्तु |
| ३२ | ७ | तत्रार्थप | तत्रार्थाप |
| ३३ | १४ | सम्भवि | सम्भावि |
| ५१ | १९ | सात्त्वा | सत्त्वा |
| ६८ | १९ | (१. १. १०) | (१. २. १०) |
| ७० | ३ | (१. १. ११) | (१. २. ११) |
| ७० | १९ | (१. १. १२) | (१. २. १२) |
| ७१ | ५ | (१. १. १३) | (१. २. १३) |
| ८६ | १० | सृण्येवाम्य | सृण्येवाम्य |
| | २२ | वर्मि | वमि |

| पार्श्वम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८७ | २१ | (१. २. ४१) | (१. २. ४२) |
| ९१ | ४ | अभ्यक्सृण्येव काप्यु | अभ्यक् सृण्येव काणु |
| ९६ | ११ | पुनद्धि | पुनर्द्धि |
| | १२ | र्नां परि | र्ने परि |
| १०२ | १५ | मूलाय म्ले | मूला म्ले |
| १०४ | ४ | त्वीदा | त्वादी |
| १०६ | १३ | तेश | तेंऽश |
| | १९ | कल्पस्य | कल्प्यस्य |
| १११ | ८ | भ्रंश्यते | भ्रश्येत |
| ११९ | १७ | हायिन्या | हायन्या |
| १२० | १५ | पदेपु | पदेषु |
| १२१ | ३ | वा नदनी | वानदनी |
| | १६ | फले-वि | फले वि |
| १२६ | १९ | नियोगात् | हि योगात् |
| | २४ | हि योगात् | नियोगात् |
| १३० | १८ | ब्रमः | ब्रूमः |
| १३६ | ३ | वत्तास्तिः | वत्तास्ति |
| १३८ | १२ | रय | रस्य |
| १४१ | ७ | अथ | अत्र |
| १५१ | १८ | तिष्टत | तिष्ठत |
| १५५ | २० | तत् (सः) | (तत् ? सः) |
| १५७ | २१ | स्मार्थ | स्मार्त |

| पार्श्वम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६० | १६ | माहमाहे | माह-माहे |
| | १९ | वाच्य | वोच्य |
| १८७ | ४ | यय्नोः | ययोः |
| | २० | तृतीय | तृतीयं |
| १८८ | १४ | व्वात्र | व्याव |
| १८९ | २० | वादत्मकस्य | वादात्मकस्य |
| १९० | ९ | हुति सं | हुतिसं |
| | १५ | वुपांशु | त्रुपांशु |
| १९२ | १८ | रूपवत | रूपवतां |
| १९५ | १९ | संयाग | संयोग |
| १९६ | १५ | वावयेषु | वाक्येषु |
| २०१ | ६ | त्प्राजा | त्प्रजा |
| २०७ | १६ | याते | यतो |
| २२० | ३ | वचन, दे | वचनः, स च दे |
| २२३ | ९ | सन्दिह्या । दा | सन्दिह्यादा |
| २३० | १० | कालाद्वय | कालद्वय |
| २४४ | १४ | वं रु | वंरू |
| २५३ | ६ | मितिः | मिति |
| २५६ | ३ | प्रतिस्विकी प्रतिज्ञातु प्रा | प्रातिस्विकी प्रतिज्ञा तु प्र |
| २६८ | ५ | र्थः । कस्मा | र्थः कस्मा |
| २७१ | १७ | पाठितम् । उ | पठितम् उ |

| पार्श्वम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७२ | २१ | वाक्या—लो | वाक्यालो |
| २८० | १३ | संस्काराद्वा | संस्कारत्वाद |
| २९५ | ९ | तथान्नृच | तथा नृच |
| ३३६ | १६ | नुपपत्तेः | नुपपत्तिः |
| ३४० | २० | विधिः, स्त | विधिः, त |
| ३४१ | ४ | वाक्याद् द्वि | वाक्याद्वि |